**वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ।**
**वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ॥४॥**
**वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ।**
**अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ॥५॥**
**वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ।**

---

वीथी[१] ( विध्यते इति इन् बाहुलकाद्दीर्घः ) आलिः[२] ( अलति इति इन् ) आवलिः ( आ वलति पंक्तिः[३] ( पच्यते इति क्तिन् ) श्रेणी,[४] ( श्रीयते इति निः ) ये ५ स्त्री० नाम कतार या पंक्ति के हैं।

लेखा[५] ( लिख्यते इति इन् भिदादौ पाठादङ्गुणौ । रलयोरेकत्वस्मरणात् 'रेखा' अपि ) राजिः[६] ( राजति इति इन् ) ये २ स्त्री नाम रेखा या लकीर के हैं।

वन्या[७] (वनानां समूहः इति यः ) यह १ स्त्री० नाम वन के समूह का है।

[८]अंकुरः ( अङ्कयते इति उरच् ) अङ्कूरः ( खजूरादित्वात् कूरः ) अभिनवोद्भिद्—( उद्भिनत्ति भुवम् इति क्विप्, अभिनवश्चासावुद्भिच्च ) २ नाम अङ्कुर के हैं, जिनमें १ पुं० और २ स्त्री० है ॥ ४ ॥

वृक्षः ( वृक्षति इति पचाद्यच् ) महीरुहः (मह्यां रोहति इति कः ) शाखी[९] (शाखाऽस्यास्ति इति इनिः ) विटपी ( विटपः शाखाविस्तारोऽस्यास्ति इति इनिः ) पादपः[१०] ( पादैः पिबति इति डः ) तरुः ( तरति इति उः ) अनोकहः—( अनसः शकटस्याकं गतिं हन्ति इति डः ) कुटः (कुटति इति पचाद्यच् ) सालः ( सल्यते इति घञ् ) पलाशी—( पलाशानि सन्त्यत्र इति इनिः ) द्रुः ( द्रवत्यूर्ध्वम् इति डुः ) द्रुमः—द्रुः शाखाऽस्यास्ति इति मः ) अगमः ( न गच्छति इति पचाद्यच् ) ये १३ पुं० नाम वृक्ष के हैं ॥ ५ ॥

वानस्पत्यः ( वनस्य पतिः इति सुट् वनस्पतौ भवः इति ष्यः ) यह १ पुंलिंग नाम 'फूलकर फलने वाले पेड़' का है। जैसे—आम, लीची आदि।

वनस्पतिः[११] ( अपुष्पात् तैः = फलैरुपलक्षितः वृक्षः ) यह एक पुं० नाम विना फूले फलने वाले वृक्ष का है।

---

१—वीथी वर्त्मनि पंक्तौ च गृहाङ्गे नाट्यरूपके, इति हैमः।
२—आलिः सख्यावलीसेत्वनर्थेषु विशदाशये, इति हैमः।
३—पंक्तिश्छन्दः श्रेण्योः, इति हैमः।
४—श्रेण्याल्यां कारुसंहतौ, इति हैमः।
५—लेखो लेख्ये दैवते च लेखा राज्यां लिपावपि, इति हैमः।
६—राजी रेखायां पंक्तौ च, इति हैमः।
७—वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः।
८. अंकुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे' इति हैमः। 'अंकुरश्चाङ्कूरः—ओष्ठः' इतिहलायुधः।
९. शाखी स्यात्पादपे वेदे तुरुष्काख्यजने, पुमान्।
१०. पादपः पादपीठेऽद्रौ पादुकायां तु पादपाः' इति विश्वः।
११. वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुमे।

ओषध्यः फलपाकान्ताः स्युरवन्ध्यः फलेग्रहिः ॥६॥
वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली।
प्रफुल्लोत्फुल्लसम्फुल्लव्याकोशविकचस्फुटाः ॥७॥
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु।
स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ॥८॥
अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता।

---

ओषधिः ( ओष = प्लोष दीप्तिर्वा धीयतेऽत्र इति किः ङीषि कृते ओषधी अपि ) 'फलकर पकने के बाद नष्ट होनेवाले उद्भिद् धान, चना, जौ, गेहूँ आदि का यह एक स्त्री० नाम है।

अवन्ध्यः ( वन्धे आधौ साधुः, न वन्ध्यः अवन्ध्यः ) फलेग्रहिः ( फलानि गृह्णाति निपात० ) ये २ त्रि० नाम अपने २ समय में फलनेवाले पेड़ आदि के हैं ॥६॥

वन्ध्यः[1] ( वन्धे साधुः इति यत् ) अफलः ( न फलान्यस्य ) अवकेशी ( अवसन्नाः केशा यस्य सोऽवकेशः निष्केशः सोऽस्त्यस्य इति इनिः ) समय पर भी नहीं फलने वाले पेड़ के ये ३ त्रिलिंग नाम हैं।

फलवान् ( फलान्यस्य सन्ति इति मतुप् ) फलिनः ( अत्र इनच् ) फली (इनिः) ये ३ त्रिलिंग नाम फले हुए पेड़ आदि के हैं।

प्रफुल्लः ( प्रफुल्लति इति अच् ) उत्फुल्लः[2] ( पचाद्यच् ) संफुल्लः ( पचाद्यच् ) व्याकोशः ( व्यावृत कोशः संकोचोऽस्मात् इति ) विकचः[3]–(कचति इति पचाद्यच् विगतः कचोऽस्मात् ) स्फुटः[4] (स्फुटति इति कः) फुल्लः ( फुल्लतीति अच् ) विकसितः ( व्यकासीत् इति क्तः ) ये ८ त्रिलिंग नाम फूले हुए पेड़, लता आदि के हैं। 'अवन्ध्य' से लेकर विकसितान्त शब्द त्रिलिंग हैं।

स्थाणुः[5] ( तिष्ठतीति इति णुः ( ध्रुवः[6] इति कः ) शङ्कुः[7] ( शङ्कतेऽस्मात् इति नि० साधुः ) ये ३ नाम ठूंठे पेड़ के हैं। जिनमें, १ पुलिंग, नपुंसक और २ य, ३ य, पुलिंग हैं।

क्षुपः ( शाखा च शिफा = मूलं च ते शाखाशिफे यस्य इति, क्षौति बाहुलकात्पोऽगुणश्च ) यह १

---

१. वन्धस्त्वाधौ च वन्धने।
२. उत्फुल्लं करणे स्त्रीणामुत्ताने च विकस्वरे।
३. विकचः क्षेपणे केतौ ना केशे स्फुटितेऽन्यवत्।
४. स्फुटोव्यक्तप्रफुल्लयोः। सिते व्याप्ते इति हैमः।
५. स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवे, इति मेदिनी।
६. वसुयोगभिदोः शंभौ शङ्कावुत्तानपादजे। स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः॥ ध्रुवा मुर्वाशालिपर्ण्योः स्रुग्भेदे गीतमित्यपि' । इति हैमः।
७. शङ्कुः पत्रशिराजाले संख्याकीलकशंभुषु। यादोऽस्त्रभेदयोर्मेढ्रे—इति हैमः।

**लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥९॥**
**नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।**
**अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥१०॥**

---

पुं० नाम छोटी शाखा और तना वाले पेड़ के हैं। स्तम्बः[१] ( न प्रकाण्डोऽस्येति अप्रकाण्डः, तस्मिन् तिष्ठतीति अम्बच् स्तादेश्च ) गुल्मः[२] ( गुडति बाहुलकात्मन् डलयोरैक्यम् ) ये २ पुंलिंग नाम बिना डाल-वाले पेड़ आदि के हैं।

वल्ली[३] ( वल्लते इति इन् कृदिकारात् इति वा ङीष्, पक्षे वल्लिः ) व्रततिः[४]–( प्रतनोति इति क्तः, पृषोदरादित्वात् पस्य वो वा ) लता[५] ( लतति इति पचाद्यच् ) ये ३ स्त्रीलिंग नाम 'लता, लत्तर, के हैं। जैसे—अंगूर, मालती, कद्दू, खीरा आदि। शाखापत्रसंचयः प्रतानः सोऽस्त्यस्याः सा प्रतानिनी लता वीरुत् इति सम्बन्धः—वीरुत्[६] ( विरुणद्धि इति क्विप् दीर्घश्च ) गुल्मिनी ( गुल्मः प्रतानोऽस्त्यस्याः इति वा इनिः ) [७]उलपः ( उल्यते कप् ) ये तीन नाम 'बहुत डालों से युक्त लता' के हैं। जिनमें १ म, २ य, स्त्रीलिंग तथा ३ य पुंलिंग है ॥ ९ ॥

[८]उच्छ्रायः नगस्य तरोः आरोहणम् = दैर्ध्यम् भावे घञ् ( उच्छ्रयणम् इति घञ् ) उत्सेधः[९] ( उत्सेधनम् इति घञ् ) उच्छ्रयः ( अच् ) ये ३ पुंलिंग नाम पेड़ आदि की ऊँचाई के हैं।

प्रकाण्डः[१०] ( प्रकाण्ड्यते इति ण्यन्तादच् ) स्कन्धः[११] ( स्कन्द्यते इति घञ् ) ये २ नाम मूल से लेकर स्कन्धावधि भाग के हैं। जिनमें १ म पुं० नपुंसक० और २ य पुं० है ॥ १० ॥

---

१. स्तम्बो गुल्मे तृणादीनामकाण्डद्रु मगुच्छयोः ।
२. गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः ।
स्तम्बे, स्त्रियामामलक्यैलावनीवक्त्रवेश्मसु । वनी = ह्रस्वं वनम्
३. वल्ली स्यादजमोदायां लतायां कुसुमान्तरे, इति हैमः ।
वल्लीतु वेल्लिः सरणौ, इति वाचस्पतिः ।
४. प्रततिर्व्रततिस्तथा, इति हलायुधः ।
व्रततिस्तु प्रतानिन्यां विस्तारेऽपि, इति हैमः ।
५. लता ज्योतिष्मती दूर्वाशाखावल्लीप्रियङ्गुषु । स्पृक्कामाधव्योः कस्तूर्याम्, इति हैमः ।
६. वीरुल्लताविटपयोः स्त्रियाम् । 'विरोचते वीरुत्' इति पाठस्य स्वामिग्रन्थे न्पलम्भाद्दीर्घोपपत्तेः । न्यङ्क्वादिगणे 'वीरुत्' इति पाठस्योपलम्भेन स्वामिग्रन्थे च 'न्यङ्क्वादित्वाद्धत्वम्' इति पाठस्यैवोपलम्भेन 'चकारस्य धत्वं निपात्यते' इत्यर्थस्य स्फुटं प्रतीयमानत्वात् ।
७. उलपस्तु गुल्मिनीतृणभेदयोः, इति हैमः ।
८. आरोहो दैर्घ्य उच्छ्राये । आरोहणे गजारोहे स्त्रीकट्यां मानभिद्यपि । इति हैमः ।
९. उत्सेधस्तूच्छ्रये न स्त्री क्लीबं संवहनेऽपि च ।
१०. प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः । इति विश्वः ।
११. स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः । काये तरुप्रकाण्डे च आत्रादौ छन्दसी भिदि । इति धान्तेषु मेदिनी ।

**समे शाखालते स्कन्धशाखाशाले शिफाजटे।**
**शाखाशिफाऽवरोहः स्यान्मूलाच्चाग्रं गता लता ॥११॥**
**शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः।**
**सारो मज्जा नरि त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ॥१२॥**

---

शाखा[1] ( शाखति इति पचाद्यच् ) लता ( लतिः सौत्रो धातुः वेष्टनार्थः तस्मादच् ) ये २ स्त्री० नाम डाल के हैं।

स्कन्धशाखा ( स्कन्धजा शाखा ) शाला[2]( शलति इति णः ) ये २ स्त्री० नाम स्कन्ध से सबसे पहले फूटनेवाली शाखा के हैं।

शिफा, ( शेते बाहुलकात् फक् ह्रस्वश्च ) जटा ( जटति इति पचाद्यच् ) ये २ स्त्री० नाम सोर अर्थात् जमीन के भीतर फैली हुई पेड़ की जड़ के हैं। [3]अवरोहः ( अवरोहति = लम्बते इति पचाद्यच् ) यह १ पुं० नाम शाखामूल का है। लता ( मूलादूर्ध्वं गता शिफा लता। लतति पचाद्यच् ) यह एक स्त्री० नाम वृक्ष पर चढ़नेवाली लता का है ॥ ११ ॥

[4]शिरः ( श्रियते इत्यसुन्, शिरादेशश्च ) अग्रम्[5] ( अगति इति निपातनात् अग्रादेशश्च ) शिखरम्[6] ( शिखां राति कः ) ये ३ नपुंसक० नाम पेड़ आदि के सबसे ऊपर के हिस्से के हैं।

मूल[7] ( मूलति इति कः ) बुध्नः[8] ( बध्नाति इति नक् बुधादेशश्च ) अङ्[9]घ्रिनामकः-( अङ्घ्रेर्नाम यस्य, कः ) ये ३ नाम 'पेड़ आदि की जड़' के हैं जिनमें १ नपुंसक० और २, ३, पुं० हैं।

सारः[10] ( सरति कालान्तरम् इति घञ् ). मज्जा[11] ( मज्जति अस्थिषु इति निपातनात् साधुः

---

१. शाखा द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके। इति हैमः।

२. शाला तरुस्कन्धशाखा शाला भवनमिष्यते। इति शाश्वतः।

३. अवरोहोऽवतरणेऽप्यारोहे च लतोद्गमे।
मूलादूर्ध्वं गता शिफा लता। मुकुटस्तु प्रसङ्गादवरोहस्यार्थान्तरमाह—तरुमूलात्प्रभृति वृक्षाग्रपर्यन्त गता गुडूच्यादिलताप्यवरोहः।

४. शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च।

५. अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्।

६. शिखरोऽस्त्री द्रुमाग्रे चाद्रिश्रृङ्गपुलकाग्रयोः।

७. मूलं शिफाद्ययोः। मे निकुञ्जेन्तिके वा ना।

८. बुध्नो ना मूलरुद्रयोः।

९. अङ्घ्रिर्ना पादमूलयोः।

१०. सारो बले मज्जनि च स्थिरांशे न्याय्ये च नीरे च धने च सारम्।
वरेऽन्यवत् सारमुदाहरन्ति ॥

११. लज्जावद्राजवन्मज्जा मांससारास्थिसारयोः। इति भागुरेरावन्तोऽपि।

**काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ।**
**निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ ॥१३॥**
**पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।**

---

नकारान्तः ) ये दो पुं० नाम लकड़ी के बीच का हीर अर्थात् सारित्म लकड़ी के हैं।

त्वक्[1] ( त्वचति इति क्विप् ) वल्कम्[2] ( वलति इति कन् ) वल्कलम् ( वल्कयति इति पचाद्यच् ) ये ३ नाम पेड़ आदि के छिलके के हैं। जिनमें १ म स्त्री० और २,३ य पु० नपुंसक हैं ॥ १२ ॥

काष्ठम्[3] ( काशते इति क्थन् ) दारु[4] ( दीर्यत इति उण् ) ये दो नाम लकड़ी के हैं। जिनमें १ म नपुंसक० है। और २ य पु० न० दोनों हैं।

इन्धनम् ( इन्धेऽग्निरनेन इति करणे ल्युट् ) एधः ( एधतेऽनेन असुन् ) इध्मम् ( इध्यतेऽनेन इति मक् नलोपश्च ) एधः ( करणे घञ् ) समित् ( समिध्यतेऽनया ) ये ५ नाम जलावन, ( इंधन ) के हैं, जिनमें १–३ नपुंसक० हैं और ४ र्थ पुंलि० एवं ५ म स्त्री० है। इन्धनम् आदि ३ नाम 'जलावन की लकड़ी के और 'एधः, समित्' ये २ नाम–हवन की लकड़ी के हैं ऐसा भी मत है।

निष्कुहः ( निश्चयेन कुह्यते इति पचाद्यच् ) कोटरम् ( कुटनं कोटः इति भावे घञ्, कोटं राति, कः ) ये २ नाम पेड़ के खोंढ़र अर्थात् 'खोखल' के हैं। जिनमें १ पुं० है और २ य पुं० नपुंसक दोनों हैं।

वल्लरिः ( वल्लते इति क्विप् ऋच्छति इति इः, वल् चासावरिश्च ) मञ्जरिः ( मृजुत्वमृच्छति इति इः शकन्ध्वादिः ) ये २ स्त्री० नाम मञ्जरी, मोंजर के हैं।

पत्रम्[5] ( पतति इति ष्ट्रन् ) पलाशम्[6] ( पलं मांसमश्नाति इति अण् ) छदनम्[7] ( छद्यतेऽनेन ल्युट् ) दलम्[8] ( दलति इति पचाद्यच् ) पर्णम् ( पृणति इति पचाद्यच् ) छदः[9] ( छद्यतेऽनेन इति घः ) ये ६ नाम पत्ते के हैं। जिनमें १–५ नपुंसक० और ६ठा पुं० है।

---

१. त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः ॥
२. वल्कं वल्कलशल्कयोः ।
३. काष्ठं दारुणि काष्ठा च प्रकर्षे स्थानमात्रके। दिशि दारुहरिद्रायां कालमानप्रभिद्यपि ॥ इति हैमः ॥
४. पुंनपुंसकयोर्दारुः, इति त्रिकाण्डशेषः ।
दारु स्यात्पित्तले काष्ठे देवदारौ नपुंसकम् ।
५. पत्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः ।
६. पलाशं छदने मतम् । शठीकिंशुकरक्षःसु पुंसि स्याद्धरिते त्रिषु । इति मेदिनी । पलाशः किंशुकेऽप्रपे । हरिते, पलाशं पत्रे । इति हैमः ।
७. छदनं च दले पक्षे पिधाने ।
८. दलमुत्सेधखण्ड्योः । शाखीछदेऽप्यद्रव्ये पत्रे ॥
९. पर्णक्षिपर्णं पर्णं तु पत्रे, इति हैमः ।

**पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ॥१४॥**
**वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम् ।**
**आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ॥१५॥**
**क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ।**

---

पल्लवः[१] ( पल्यते क्विप् लूयते इति अप् पल् चासौ लवश्च समासः ) किसलयम्[२] ( किंचित्सलति इति बाहुलकात् कयन् प्रत्ययः ) ये दो नाम नये पल्लव के हैं, जिनमें १ पुं० और २ य पुं० नपुं० दोनों हैं।

विस्तारः[३] ( विस्तरणम् आच्छादनम् इति भावे घञ् ) विटपः[४] ( विटान् पाति रक्षति इति कः ) ये २ नाम 'पेड़ के फैलाव' के हैं, जिनमें १ पुं० और २ पुं० नपुंसक दोनों है ॥ १४ ॥ फलम्[५] ( फलति निष्पत्तिं गच्छति इति पचाद्यच् ) सस्यम् ( सस्ति शेते इति यः ) ये २ नपुंसक नाम फल के हैं।

वृन्तम्[६] ( वृणोति इति क्तः नुम् च ) प्रसवबन्धनम् ( प्रसूयते इति अप्, बध्यतेऽनेन इति करणे ल्युट् प्रसवस्य पुष्पफलपत्रस्य बन्धनम् ) ये २ नपुंसक० नाम भेंटी अर्थात् पुष्पादि के मूलाधार के हैं।

शलाटुः ( शलति संवृणोति इति पचाद्यच् शाल', अटति इति मृगय्वादित्वात् कुः अटुः, शलश्चासावटुश्च इति शलाटुः ) यह १ त्रिलिंग नाम कच्चे फल का है। वानम्[७] ( वन्यते इति घञ् ) यह १ त्रिलिंग नाम सूखे फल का है ॥ १५ ॥

क्षारकः[८] ( क्षरति संचलति इति ण्वुल् ) जालकम्[९] ( जालमिव इति प्रकृते कन् ) ये २ नाम

---

१. छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः ।

२. पल्लवः किसले बले । विटपे विस्तरेऽलक्तरागे श्रृंगारषिङ्गयोः ।
व्याडिस्तु—पुंसि क्लीबे च पल्लवः ।
लकारद्वयवान् 'दृश्यन्ते न तु लोकस्य कदापि च विपल्लवाः' इति दमयन्तीयमकात् । दन्त्यसकारवान् 'किसलयैः सलयैरिव' इति रघुयमकात्—इति मुकुटः ।

३. विस्तारस्ततौ विटपे ।

४. विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे । विटाधिपे ना ।

५. फलं हेतुकृते जातीफले फलकसस्ययोः ।
( त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः ) ॥

६. वृन्तं प्रसवबन्धे च घटीधाराकुचाग्रयोः ।

७. वानं शुष्कफले शुष्के सीवने गमने करे ।
मलसंप्लुतवातोर्मिसुरङ्गासौरभेषु च ॥ इति हैमः ।

८. क्षारको रसे । कोरके पक्ष्यादिपाशे, इति हैमः ।

९. जालकं कोरके दम्भे कुलायानाययोरपि । न पुंसि मोचनफले स्त्रियां तु वसनान्तरे ॥ गिरिसारजलौकायामपि स्याद्विधवास्त्रियाम् । भटानामस्मरचिताङ्गरक्षिण्यां च जालिका ॥

स्याद् गुत्सकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम् ॥१६॥
स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्।
मकरन्दः पुष्परसः परागः सुमनोरजः ॥१७॥
द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम्।

---

नई कली या कलियों के हैं। जिनमें प्रथम पुं० और द्वि० नपुंसक हैं।

कलिका ( कलयति गच्छति इति स्वार्थे कन् ) कोरकः[1] ( कुर्यते शब्द्यते इति वुन् ) ये २ नाम 'कली' अर्थात् विना खिले हुए फूल के हैं। जिनमें १ म स्त्री० और २ य पुं० है।

गुत्सकः, ( गुध्यते इति सः कित् ) स्तबकः[2] ( स्तूयते इति वुन् ) फूल या फल आदि के गुच्छे के ये २ पुं० नाम हैं।

कुड्मल[3] × कुट्मलः ( कुड्यते, कुटति वा इति कमलचि कमनि च ) मुकुलः ( मुञ्चति कलिकात्वम् इति बाहुलकादुलक् ) ये २ पुं० न० नाम अधखिली कली के हैं ॥ १६ ॥

सुमनसः[4] ( सुष्ठु मन्यन्ते आभिः इति असुन् ) पुष्पम्[5] ( पुष्यति इति पचाद्यच् ) प्रसूनम्[6] ( प्रसूयते स्म इति निष्ठानत्वम् ) कुसुमम्[7] ( कुस्यति इति उमः संज्ञापूर्वकत्वान्न गुणः ) सुमम्—( सुष्ठु मातीति कः ) ये ५ नपुंसक० नाम फूल के हैं।

मकरन्दः ( मकरमपि द्यति कामजनकत्वात् इति कः ) पुष्परसः ( पुष्पस्य रसः ) ये दो नाम पुं० फूल के रस ( मधु ) के हैं।

परागः[8] ( परा गच्छति इति डः ) सुमनोरजः ( सुमनसां रजः ) ये दो नाम फूल के पराग के हैं जिनमें १ म पुं० और २ य नपुंसक० है ॥ १७ ॥

द्विहीनं ( द्वाभ्यां स्त्रीपुंसाभ्यां हीनं फले पुष्पे मत्रे च। वक्ष्यमाणमश्वत्थादिफलपुष्पादिषु वर्तमानं नपुंसकं० ज्ञेयमित्यर्थः। विकारावयवयोरुत्पन्नस्य प्रत्ययस्य 'फले लुक्' इति लुक् ) पूर्व कहे हुए शब्दों का साधारणतः लिङ्गनिर्देश करने के बाद 'द्विहीन' शब्द से विशेषतया लिङ्गनिर्देश करते हैं। आगे

---

१. कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः, ॥
२. स्तबके हारभेदे च गुत्सः स्तम्बेऽपि कीर्तितः। इति दन्त्यान्तेषु रुद्रः। पुष्पादिस्तबके गुच्छो मुक्ताहारकलापयोः। इति चवर्गान्ते रन्तिदेवः।
३. कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे।
४. सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः। इति मेदिन्यादेरेकत्वमपि। पुष्पं सुमनाः कुसुमम्, इति नाममाला। भूम्नि स्त्रियां सुमनसः इति रत्नकोषः।
५. पुष्पं विकास आर्तवे। धनदस्य विमाने च कुसुमे नेत्ररुज्यपि, इति हैमः।
६. प्रसूनं तु प्रसूते फलपुष्पयोः। इति हैमः।
७. कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः।
सर्वसाधुसमानेषु समं स्यादभिधेयवत् ॥ इति मेदिनी।
८. परागः सुमनोरेणौ धूलीस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने ॥

आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥१८॥
बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ।
पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥१९॥
विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ।

---

कहे जाने वाले वृक्ष, लता और औषध के वाचक शब्द यदि पुष्प, फल, मूल और पत्र के वाचक हों तो वे नपुंसकलिङ्ग में प्रयुक्त होते हैं। जैसे—'चम्पकम्, आम्रम्, सूरणम्' ये तीन नाम क्रमशः 'चम्पा के फूल, आम के फूल, आम के फल और सूरन की जड़' इन अर्थों में प्रयुक्त होने से नपुंसक० हुए हैं॥

हरीतक्यादयः ( हरीतक्याः फलम् इति फलप्रत्ययस्य लुप् ) आदिना 'कोशातकी ( द्राक्षा ) बदरी कण्टकारिका' इत्यादयः। 'हरीतक्यादयः' इस पद से उक्त लिङ्ग का बाधक वचन कह रहे हैं। फल आदि अर्थ में प्रयुक्त होने पर भी 'हरीतकी, कर्कटी' आदि शब्द स्त्री० ही रह जाते हैं अर्थात् नपुंसक० नहीं होते। जैसे—'हरीतकी, कर्कटी, द्राक्षा, बदरी आदि शब्द क्रमशः हरें, ककड़ी, दाख और बैर के फल, इस अर्थ में प्रयुक्त होने पर भी पूर्ववत् स्त्री० ही हैं नपुंसक० नहीं हुए।

आश्वत्थम् ( अश्वत्थस्य फलम् इति अण् ) वैणवम् ( वेणोः फलम् इति अण् ) प्लाक्षम् ( प्लक्षस्य फलम् इति अण् ) ( नैयग्रोधम् ( न्यग्रोधस्य फलम् इति अणि ऐच ) ऐङ्गुदम् ( इङ्गुद्या इदम् इति अण् ) बार्हतम् ( बृहत्याः फलम् इति अण् ) ये ६ नं० नाम क्रमशः १-१ पीपल, बांस, पाकड़, वट, इङ्गुदी और भटकटैयाफल के हैं।

जम्बूः[1] ( जमति इति कूप्रत्ययो बुगागमश्च निपातितः फलप्रत्ययस्य लुप्, युक्तवद्भावे ) जम्बु ( जम्ब्वाः फलम् इति पक्षे अञ् लुकि नपुंसकह्रस्वे च ) जाम्बवम् ( जम्ब्वाः फलम् इति अण् वृद्धौ ) जामुन फल के ये ३ नाम हैं। जिनमें १ म स्त्रीलिङ्ग और २-३ नपुंसक लिङ्ग हैं।

जाती ( जात्याः पुष्पम् इति अञ् लुप् च ) 'स्वलिङ्गाः' कहने से अभिप्राय यह है कि—पुष्पार्थक होने पर भी नित्य स्त्रीलिङ्ग ही ये रहते हैं। नपुंसक में इनका प्रयोग नहीं होता। प्रभृतिपद से—मल्लिका, यूथिका, शेफालिका का संग्रह है।

व्रीहिः—यहाँ पर आदि ( बहुवचनान्त ) शब्द से 'यवः, मुद्गः, माषः, प्रियङ्गुः, गोधूमः, चणकः का ग्रहण होता है, ये शब्द पहले ओषध्यर्थक होने से पुलिङ्ग कहे गये हैं, किन्तु फलार्थक होने पर भी पुंलिङ्ग ही रहते हैं, नपुंसक लिङ्ग में इनका प्रयोग नहीं होता है। यवः ( यवानां फलानि इत्यण् लुप् च ) माषः ( माषाणाम् फलानि इत्यण् लुप् च ) एवं मुद्गाः॥ १८॥

विदारी[2] ( विदार्या मूलम् अण् लुप् च ) यह एक स्त्री० नाम विदारी कन्द का है। आदिशब्द से शालपर्णी, गम्भारी, शब्दों का संग्रह है। मूल, 'अपि' शब्द से—पुष्प, फल-अर्थमें प्रयुक्त होने पर भी ये शब्द नित्य स्त्रीलिङ्ग ही रहते हैं। नपुंसकलिङ्ग में इनका प्रयोग नहीं होता है।

---

१. जम्बूः स्यात्पादपान्तरे। तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम्।

२. विदार्या क्षुद्रकूष्माण्ड्या मूलं पुष्पं फलमपि।

बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥२०॥
अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथा ।
तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ॥२१॥
उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।
कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥२२॥

---

पाटला[1] ( पाटलायाः पुष्पम् अणि, लुपि ) यह एक स्त्रीलिङ्ग और नपुंसक नाम पाटला ( गुलाब ) के फूल का है। गुलाब के फूल अर्थ में प्रयुक्त होने पर 'पाटलम्, पाटला' दोनों ही होते हैं।

बोधिद्रुमः[2] ( बुध्यते इति इन् गुणे, बोधिश्चासौ द्रुमश्च बोधिद्रुमः ) चलदलः ( चलं दलमस्य इति समासे ) पिप्पलः[3] ( पिप्पलं=जलमस्यास्ति इति अच् ) कुञ्जराशनः ( कुञ्जरेणाश्यते इति ल्युट् ) अश्वत्थः[4] ( अश्वत्थं=जलमस्यास्ति अच्, न श्वः-चिरं तिष्ठति इति को वा ) ये ५ पुंलिङ्ग, नाम पीपल के पेड़ के हैं॥ २० ॥

कपित्थः ( कपयस्तिष्ठन्त्यत्र पृषोदरादिः ) दधित्थः ( दधिवर्णो द्रवस्तिष्ठत्यस्मिन् ) ग्राही ( गृह्णाति इति ग्रह्यादित्वाद् णिनिः ) मन्मथः[5] ( मननम् मत् संपदादिः नलोपः तुक्, च मथतीति अच्, मतो मथः ) दधिफलः ( दधि फलेऽस्य ) पुष्पफलः ( पुष्पयुक्तं फलमस्य ) दन्तशठः ( दन्तानां शठ इव ) ये ७ पुं० नाम कैंथ के हैं ॥ २१ ॥

[6]उदुम्बरः ( उल्लङ्घितमम्बरमनेन इति बाहुलकादरन् ) जन्तुफलः ( जन्तवः फलेऽस्य ) यज्ञाङ्गः ( यज्ञमङ्गति कर्मण्यण् ) हेमदुग्धकः ( हेमवर्णं दुग्धमस्य ) ये ४ पुं० नाम गूलर के हैं।

कोविदारः ( कुं भूमिं विदृणाति इति कर्मण्यण् पृषो० ( चमरिकः ( चमरमस्यास्ति इति ठन् ) [7]कुद्दालः ( कुम् पृथिवीमुद्दालयति अण्पररूपे ) युगपत्रकः ( युगं=युग्मं पत्रमस्य कः ) ये ४ पुं० नाम कचनार के हैं॥ २२ ॥

---

१. पाटलः कुसुमे वर्णेऽप्याशुव्रीहिश्च पाटलः । इति शाश्वतात् पुंलिङ्गोऽपि ।
२. बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे । 'पिप्पलो बोधिरश्वत्थः' इति रत्नकोषेऽपि ।
३. पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ ।
४. आपः प्रजाहितं शीतमश्वत्थं पवनं विषम् । इति केशरमाला । अश्वत्थः पिप्पलद्रौ स्यादश्वत्था पूर्णिमा मता ।
५. मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे ।
६. उदुम्बरस्तु देहल्यां वृक्षभेदे च षण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रेऽपि स्यान्नपुंसकम् ॥ इति मेदिनी ।
७. कुद्दालः स्यात्पुमान्भूमिदारणे युगपत्रके ।

**सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।**
**आरग्वधे राजवृक्षसम्पाकचतुरङ्गुलाः ॥२३॥**
**आरेवतव्याधिघातकृतमालसुवर्णकाः ।**
**स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥२४॥**
**वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः ।**

---

सप्तपर्णः ( काण्डे काण्डे सप्त पर्णान्यस्य ) विशालत्वक् ( विशाला त्वगस्य ) [१]शारदः ( शरदि पुष्प्यति इति अण् , शारदी ङ्यन्ताऽपि ) विषमच्छदः ( विषमाश्छदा यस्य इति ) ये ४ पुं० नाम सात पत्तेवाले वृक्षविशेष ( सप्तपर्ण = सतवन ) के हैं ।

[२]आरग्वधः ( आ रगणम् संपदादिः, आरगं रोगशंकामपि हन्ति अण् , वधादेशोऽदन्तः ) राजवृक्षः ( राजा चासौ वृक्षश्च, वृक्षाणां राजा वा राजदन्तादिः ) [३]संपाकः ( सम्यक् पाकोऽस्य ) चतुरंगुलः ( चतस्रोऽगुङ्लयः प्रमाणमस्य पर्वणः तद्योगात् वृक्षोऽपि ) आरेवतः ( आरेवयति निःसारयति मलं सारकत्वात् इति णिच् विच् , अतति पचाद्यच् , आरेवश्चासावतश्च ) व्याधिघातः ( व्याधीन् हन्ति इति अण् ) कृतमालः ( कृता मालाऽस्य पुष्पैः ) [४]सुवर्णकः ( शोभनो वर्णोऽस्य कप् ) ये ८ पुं० नाम अमलतास के हैं ।

[५]जम्बीरः ( जम्यते इति साधुः गम्भीरादिः ) [६]दन्तशठः ( दन्तानां शठ इव ) [७]जम्भः ( जम्भय यम्लत्वात् इति पचाद्यच् नुम् च ) जम्भीरः ( गम्भीरादित्वात् इरन् ) [८]जम्भलः ( वृषादित्वात् मलच् ) ये ५ पुं० नाम जंबीरी नीबू के हैं ॥ २४ ॥

[९]वरणः ( वृणोति इति कर्तरि ल्युट् ) वरुणः ( उनन् ) [१०]सेतुः ( सिनोति सीयते वा इति तुन् ) तिक्तशाकः[११] ( तिक्तः शाकोऽस्य ) कुमारकः ( कुमारयति इति पचाद्यच् ततः कन् ) ये ५ पुं० नाम वारुण या वरण वृक्ष के हैं ।

---

१. शारदी तोयपिप्पल्यां सप्तपर्णे च शारदी । इति दन्त्यान्तेषु रुद्रः । शारदोऽब्दो स्त्रियां तोयपिप्पली-सप्तपर्णयोः । सस्ये क्लीबं शरज्जातनूतनाप्रतिभे त्रिषु ॥ इति मेदिनी ।
२. आरग्वधोऽथ संपाकः कृतमालस्तथाग्वधः । इति रत्नकोषात् ।
३. संपाकस्तर्कके, धृष्टे त्रिषु ना चतुरङ्गुले । शं कल्याणं पाकोऽस्येति शंपाकः इति वा पाठः ।
४. सुपर्णः स्वर्णचूडे च गरुडे कृतमालके । सुपर्णा कमलिन्यां च वैनतेयस्य मातरि ॥ सुष्ठु पर्णा-न्यस्य, इति वा पाठः ।
५. जम्बीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे ।
६. स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके । नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां तु योषिति ॥
७. जम्भः स्याद्दानवान्तरे । दन्तभोजनयोरंसे हनौ जम्बीरतूनयोः ॥
८. जम्भलः पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च ।
९. वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः ।
१०. सेतुर्नालौ कुमारके ।
११. तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे ।

पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥२५॥
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ॥२६॥
तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ।
वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ॥२७॥
आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ।
वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः ॥२८॥

---

[1]पुन्नागः ( पुमान् नाग इव इति समासः ) [2]पुरुषः ( पुरति इति कुषन् ) [3]तुंगः ( तुञ्ज्यते इति घञ् ) केसरः[4] ( प्रशस्ताः केसराः अस्येति अर्शआद्यच् ) देववल्लभः ( देवानां वल्लभः ) ये ५ पुं० नाम नागकेसरवृक्ष के हैं ॥ २५ ॥

[5]पारिभद्रः ( पारमस्यास्तीति पारि=पारंगतं भद्रमस्य, परितो भद्रमस्य इति वा ) निम्बतरुः ( निम्बसंज्ञकस्तरुः शाकपार्थिवादिः ) मन्दारः ( मन्दा अरा अस्य, मन्दमृच्छति, अण् ) पारिजातकः ( पारि पारं गतं जातं जन्मास्य स्वार्थे कन् ) ये ४ पुं० नाम बकायन के हैं ।

तिनिशः ( अतिशयेन नेशति=समाधिमाधत्ते इति कः ) [6]स्यन्दनः ( स्यन्दते इति युच् ) [7]नेमिः ( नयति इति मिः ) रथद्रुः ( रथस्य द्रुः तत्रोपयुक्तत्वात् ) अतिमुक्तकः ( अतिशयितो मुक्तो विस्तारोऽस्य कप् ) वञ्जुलः[8] ( वञ्चयते वाहुलकादुलो जत्वं च ) चित्रकृत् ( चित्रं करोति इति क्विप् ) ये ७ पुं० नाम तिनिश या वञ्जुल के हैं ।

पीतनः ( पीतं करोति इति णिच् युच् ) कपीतनः[9] ( तनोतीति अच् तनः, कपीनां तनः दीर्घश्च ) आम्रातकः ( आम्रमतति इति वुन्, अम्लत्वमतति इति विग्रहे हस्वादिः ) ये ३ पुं० नाम अमड़ा के हैं ।

मधूकः ( मह्यते ऊकः ह्किारस्य धकारो निपातनात् ) गुडपुष्पः ( गुड इव पुष्पमस्य ) मधुद्रुमः ( मधुनामा द्रुमः ) वानप्रस्थः[10] ( वनप्रस्थे=वनैकदेशे भव इति अण् ) मधुष्ठीलः ( मधु ष्ठीवति इति

---

१. पुंनागस्तु सितोत्पले । जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे ।
२. पुरुषस्त्वात्मनि नरे पुंनागे च ।
३. तुङ्गः पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । तुङ्गी प्रोक्ता हरिद्रायां वर्वरायामपीष्यते ॥ हैमः ।
४. केसरो नागकेसरे । तुरंगसिंहयोः स्कन्धकेशेषु वकुलद्रुमे । पुंनागवृक्षे किंजल्के स्यात्केसरं तु हिङ्गुनि, इति हैमः ।
५. पारिभद्रस्तु निम्बद्रौ मन्दारे देवदारुणि ।
६. स्यन्दनं तु स्मृतं क्लीबे रथाङ्गे तिनिशे नरि । इति रभसः । स्यन्दनं तु स्नुतौ नीरे तिनिशे ना रथेऽस्त्रियाम् ।
७. पुंलिंगस्तिनिशे नेमिश्चक्रप्रान्ते स्त्रियामपि । इति रुद्रः ।
८. वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि ।
९. कपिचूतोऽम्रातकोऽस्य फले पशुहरीतकी ।
१०. वानप्रस्थो मधूकेऽपि स्यात्तृतीयाश्रमे पुमान् ।

पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ।
अक्षोटकन्दरालौ द्वावङ्कोटे तु निकोचकः ॥२९॥
पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ।
रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ॥३०॥
द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ।

---

कः ) ये ५ पुंलिङ्ग नाम महुआ के हैं ।

मधूलकः[1] ( अत्र मधूके मधु लाति इति कः दीर्घः, कन् च ) यह १ पुंलिङ्ग नाम जल में होने वाले महुआ का है ॥ २८ ॥

पीलुः[2] ( पीलति इति उः ) गुडफलः ( गुड इव फलमस्य ) ( स्रंसयति मलम् इति णिनिः ) ये ३ पुंलिङ्ग नाम पीलु नामक वृक्षविशेष के हैं ।

अक्षोटः ( तस्मिन् गिरिसम्भवे पीलौ—अक्ष्णोति इति बाहुलकादोटः अक्षस्येव ओटाः पर्णान्यस्य वा ) ( कर्परमालति इति अण् ) ये २ पुंलिङ्ग नाम पहाड़ी पीलु ( अखरोट ) के हैं ।

अङ्कोटः ( अङ्क्यते लक्ष्यते इति बाहुलकादोटः ) निकोचकः ( निकुच्यते इति वुन् ) ये २ पुंलिङ्ग नाम ढेला ( अङ्कोल ) नामक वृक्ष विशेष के हैं ।

पलाशः[3] ( प्रशस्तानि पलाशान्यस्य अर्शआद्यच् पलं = मांसमश्नाति अण् वा ) किंशुकः ( किंचित् शुक इव, शुकतुण्डाभपुष्पत्वात् ) पर्णः[4] ( पृणति इति अच् ) वातपोथः ( वातं पोथयति इति अण् ) ये ४ पुंलिङ्ग नाम पलाश के हैं । वेतसः ( अयनम् एतः वा = विकल्पस्य एतं = ज्ञानं स्यति = समाप्तं करोतीति कः ) रथः[5] ( रम्यतेऽत्र इति क्थन् ) अभ्रमिव अभ्रसमये वा पुष्पमस्य ) विदुलः[6] ( वेत्ति, विद्यते वा इति बाहुलकादुलच् गुणाभावश्च ) शीतः[7] ( शीतमस्यास्ति इति अच् ) वानीरः ( वायति = शोषयति इति क्विप् ) वञ्जुलः[8] ( वजति इति उलच् , नुम् च ) ये ७ पुंलिं० नाम बेंत के हैं ।

[9]परिव्याधः ( परिविध्यते इति घञ् ) विदुलः ( वेत्ति, विद्यते वा, उलच् , गुणाभावश्च ) नादेयी[10]

---

१. गिरजेऽत्र इति मूलपाठः—इति सुभूत्यादयः । गौरशाको मधूकोऽन्यो गिरिजः सोऽल्पपत्रकः । इति माधवः । मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रकः । इति स्वामी ।
२. पीलुः पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे । अस्थिखण्डे च तालस्य काण्डपादपभेदयोः ॥
३. पलाशः किंशुकेऽस्रपे । हरिते पलाशं पत्रे, इति हैमः ।
४. पर्णं पत्रे किंशुके ना ।
५. रथौ स्यन्दनवानीरौ इत्यजयः । रथः पुमानवयवे स्यन्दने वेतसेऽपि च ।
६. विदुलस्तु पुमानम्बुवेतसे वेतसेऽपि च ।
७. वेतसे बहुवारे ना गुणे शीतं हिमे त्रिषु । इति रभसः । शीतं तुषारवानीरबहुवारद्रुमेषु च । इत्यजयात् ।
८. वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि ।
९. परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले ।
१०. नादेयी नागरङ्गे स्याज्जायायां जलवेतसे । जम्ब्वां च फाञ्जिकेऽपि च योषिति ॥

शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ॥३१॥
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ।
बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ॥३२॥
प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ।

---

( नद्यां भवा ढक् ) अम्बुवेतसः ( अम्बुनि जातो वेतसः, शाकपार्थिवादिः ) ये ४ नाम जलवेंत के हैं, जिनमें तृतीय स्त्रीलि० और अन्य पुंलि० हैं ॥ २९–३० ॥

शोभाञ्जनः ( शोभामनक्ति इति ल्युट् ) शिग्रुः[1] ( शिनोति इति निपातनात् ) तीक्ष्णगन्धकः ( तीक्ष्णो गन्धोऽस्य इति कप् ) आक्षीवः[2] ( आक्षीवते, आक्षीवयति वा इति पचाद्यच्, ह्रस्वादिरपि ) मोचकः[3] ( मोचयति इति णिजन्तादच् कन् च ) ये ५ पुं० नाम सहिजन के हैं ।

मधुशिग्रुः ( असौ = शोभाञ्जनः रक्तः = रक्तपुष्पः यदि—मधु = मधुरः प्रधानः शिग्रुः ) यह १ पुंलिंग नाम रक्त पुष्पवाले सहिजन का है ।

अरिष्टः[4] ( न रिष्टं क्षेममस्मात् ) फेनिलः[5] ( फेनोऽस्यास्ति इति इलच् ) ये दो पुं० नाम रीठा के हैं ।

बिल्वः[6] ( बिलति भेदयति वन्नन्तः ) शाण्डिल्यः[7] ( शाण्डिल्यस्य गोत्रापत्यम् यञ् ) शैलूषः[8] ( शिलूषस्यापत्यम् । शैलूष इव इति वा ) मालूरः ( मां लक्ष्मीं परेषां लुनाति इति बाहुलकाद्रक् ) श्रीफलः[9] ( श्रीपदं श्रीप्रियं वा फलमस्य शाकपार्थिवादिः ) ये ५ पुं० नाम बेल के हैं ।

प्लक्षः[10] ( प्रक्षरति संचलति इति डः कपिलकादिः ) जटी[11] ( जटति वंघ टयति इति इन् ङीष् वा ) पर्कटी[12] ( पृच्यते बाहुलकात् कटः गौरादिङीष् ) ये २ पुं० और १ स्त्री० नाम पाकड़ के है ।

---

१. शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे ।
२. अक्षीवं वशिरे, शिग्रौ ना,–ऽमत्ते पुनरन्यवत् ।
३. मोचः शोभाञ्जने पुंसि मोचा शल्मलिरम्भयोः ।
४. अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । रिष्टोऽपि–रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले ।
५. फेनिलोऽरिष्टपादपे । फेनिलं मदनफले वदरे फेनवत्यपि ।
६. बिल्वं फले श्रीफले ना ।
७. शाण्डिल्यः पात्रकान्तरे । बिल्वे मुनौ च । इति हैमः ।
८. नटे बिल्वे च शैलूषः, इति ताल्व्यादिमूर्धन्यान्ते रभसः ।
९. श्रीफलः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम् ।
१०. प्लक्षो जटीगर्दभाण्डद्वीपभित्कुञ्जराशनैः ।
११. जटा लग्नकचे मूले मास्यां प्लक्षे पुनर्जटी । रुद्रे तु–गर्दभाण्डे जटीप्लक्षौ ।
१२. पर्कटी नूतनफले पूगादेः लक्षपादपे । अश्वत्थेऽपि–विश्वेया पर्कटी प्लक्षः प्लक्षः पिप्पलपादपः ।

**गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ॥३३॥**
**आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ।**
**कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ॥३४॥**
**शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ।**

[1]न्यग्रोधः ( न्यक् रुणद्धि इति अच् ) बहुपात् ( बहवः पादा अस्य इति अलोपे ) वटः[2] ( वटति इति अच् ) ये ३ पुं० नाम बरगद के हैं ॥ ३२ ॥

गालवः[3] ( गालवस्यापत्यम् इति अण् , गालं नेत्रस्रवं वायति इति को वा ) शाबरः[4] ( शबराणामयम् इति अण् ) लोध्रः[5] ( रुणद्धि रन् बाहुलकात् ) तिरीटः ( तीर्यते मलमनेन टीकन् इत्वं च रपरत्वम् ) तिल्वः ( तिलत्यनेनाक्षम् उल्वादिः ) मार्जनः[6] ( माष्टर्यतेऽनेनं इति ल्युट् ) ये ६ पुं० नाम लोध के हैं।

आम्रः ( अम्यते इति रक् दीर्घश्च ) चूतः ( चूष्यते स्म इति क्तः ) रसालः ( रसमलति इति अण् ) ये ३ पुं० नाम आम के हैं।

असौ = रसालः अतिसौरभः अतिसुगन्धयुक्तः—सहकारः ( सहकारयति मेलयति द्वन्द्वम् अच् ) अतिसौरभः ( अतिशयितं सौरभमस्य ) यह १ पुं० नाम सुगन्धियुक्त आम का है ॥ ३३.१/२ ॥

कुम्भम्[7] ( कसुम्भति अण् , शकन्ध्वादिः ) [8]उलूखलकम् ( ऊर्ध्वं खम् उलूखम् उलूखं लाति इति कः ततः स्वार्थे कन् ) [9]कौशिकः ( कोशे भवः इति ठञ् ) गुग्गुलुः ( गोजति इति क्विप् गुजः = व्याधेः गुडति बाहुलकादुः । डलयोरेकत्वम् ) पुरः[10] ( पुरति इति कः ) ये ५ नाम गुग्गुल के हैं। जिनमें प्रथम द्वितीय नपुंसक और अन्य तीन पुं० हैं।

शेलुः ( शिलति इति बाहुलकादुः ) श्लेष्मातकः ( श्लेष्माणमतति इति क्वुन् ) शीतः ( श्यायते स्म इति क्तः ) उद्दालः ( उद्दालयति, इति णिजन्तादच् ) बहुवारकः ( बहून् वारयति, इति णिजन्तात् क्वुन् ) ये ५ पुं० नाम लसोड़ा के हैं। जिनमें शीत नपुंसक भी है ॥ ३४.१/२ ॥

---

१. न्यग्रोधस्तु पुमान् व्यामवटयोश्च शमीतरौ । न्यग्रोधी तूपचित्रायाम् ।
२. वटी-त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः ।
३. गालवो मुनिभेदे स्याल्लोध्रवृक्षे च कीर्तितः ।
४. शाबरी शूकशिम्ब्यां स्यात् पुंसि पापापराधयोः ।
५. साबराख्यापराधे च लोध्रे पापे च पठ्यते । इति दन्त्यादावजयः । रोध्रोऽपि लत्वाभावे । रोध्रो ना गालवे क्लीबमपराधे च किल्बिषे । इति मेदिनी ।
६. मार्जनं न द्वयोर्मार्ष्टौ पुंसि स्याल्लोध्रशाखिनि ।
७. कार्मुके वारनार्यां च कुम्भः क्लीबं तु गुग्गुलौ । इति रभसः ।
८. उदूखले गुग्गुलौ च क्लीबमुक्तमुलूखलम् । इति रुद्रः । कुम्भोलूखलकं कुम्भं कुम्भोलुः खलकं वरम् , इति वाचस्पतिः ।
९. कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः । कोशजोलूकयोश्च स्याद्विश्वामित्रमुनावपि ॥ कौशिकी चण्डिकायां च नदीभेदे च योषिति ।
१०. पुरं पाटलिपुत्रेऽङ्गे गुग्गुलौ तु पुमानयम् । इति रभसः ।

राजादनं प्रियालः स्यात् सन्नकद्रुर्धनुष्पटः ॥३५॥
गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ।
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ॥३६॥
कर्कन्धूर्बदरी कोली कोलं कुवलफेनिले ।

---

[१]राजादनम् ( राजभिरद्यते इति ल्युट् ) [२]प्रियालः ( पीयते, पीयुः सौत्रो धातुः, कालन् ह्रस्वश्च ) सन्नकद्रुः ( सन्नो = लीनः कद्रुर्वर्णोऽस्य ) [३]धनुष्पटः ( दधन्ति धारयति इति उः धनुः, पटति = गच्छति अच् धनुष इव पटो विस्तारोऽस्य ) ये ४ नाम चिरौंजी के हैं। जिनमें प्रथम पुं० नपुंसक और अन्य तीन केवल पुं० है। सोमनन्दी ने 'सन्नः' कद्रुः—ऐसा पृथक् नाम माना है ॥ ३५ ॥

गम्भारी ( कं जलं बिभर्ति धारयति इति अण् पृषोदरादित्वात् गत्वम्, 'कम्भारी' अपि ) सर्वतोभद्रा[४] ( सर्वतो भद्रं यस्याः ) काश्मरी ( काशते प्रकाशते इति मनिन् ङीब्रौ ) मधुपर्णिका ( मध्विव पर्णान्यस्याः इति ङीष्, स्वार्थे कन् ) श्रीपर्णी[५] ( श्रीयुक्तानि पर्णान्यस्याः ) भद्रपर्णी ( भद्राणि पर्णान्यस्याः ) काश्मर्यः ( काश्मरीशब्दोऽस्त्यस्या इति यप् ) ये ७ नाम गम्भार के। जिनमें सप्तम पुं० अन्य ६ स्त्री० हैं ॥ ३६ ॥

कर्कन्धूः ( कर्कं कण्टकं दधाति इति निपातितः कूप्रत्ययान्तः ) बदरी[६] (बदति इति अच्, ङीष् च) कोली ( कोलति = घनीभवति, अच्, ङीष् च ) ये ३ नाम बेर के हैं। जिनमें प्रथम द्वितीय पुंलिङ्ग, स्त्रीलिङ्ग हैं। तृतीय केवल स्त्रीलिङ्ग है। कोलिः इन् करने पर ह्रस्वान्त भी है।

कोलम्[७] ( कोल्याः विकारः, अण् अणो लुक्, लुक् तद्धित लुकि इति ङीषो लुक् ) कुवलम्[८] ( कुवल्याः फलम् ) फेनिलम् ( फेनोऽस्यास्ति इति इलच् ) सौवीरम्[९] ( सुवीरदेशे भवम् इति अण् )

---

१. राजादनं क्षीरिकायां पियाले किंशुकेऽपि च। राजातनम् इति पाठे राजानमतति इति वा ल्युः। राजादनं प्रसरको राजातनः। इति वाचस्पतिः।
२. प्रियालस्त्व पियालकः, इति माधवः।
३. धनुः पियालद्रुम. इति रूपरत्नाकरः। धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने। इति नान्तेषु मेदिनी। धनुः पियाले ना, न स्त्री राशिभेदे शरासने। इति सान्तेषु च मेदिनी। पटः प्रियालवृक्षे ना सुचेले पुंनपुंसकम्। इति रभसः। धनुष इव पटो विस्तारोऽस्य समस्तं नाम इति स्वामी।
४. सर्वतोभद्र इत्युक्तः काव्यचित्रे गृहान्तरे। निम्बे ना सर्वतोभद्रा गंभारी नटयोषितोः। इति मेदिनी।
५. श्रीपर्णस्त्वग्निमन्थेऽब्जे श्रीपर्णी शाल्मलौ हठे। इति हैमः। श्रीपर्णीकाश्मरीकुम्भ्योः क्लीबे पद्माग्निमन्थयोः।
६. बदरी कोले, क्लीबं तु तत्फले इति मेदिनी।
७. कोलं कोलिफले क्लीबं पिप्पलीचव्ययोः स्त्रियाम्।
८. कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले।
९. स्रोतोञ्जने तु सौवीरं बदरे काञ्जिकेऽपि च। इति दन्त्यादौ रभसः।

**सौवीरं बदरं घोण्टाऽप्यथ स्यात् स्वादुकण्टकः ॥३७॥**
**विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ।**
**ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ॥३८॥**
**तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ।**
**काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ॥३९॥**

---

बदरम् ( बदर्याः फलम् बदरम् ) घोण्टा[१] ( घोणते इति बाहुलकाट्टः ) ये ६ नाम वनबैर के हैं। जिनमें प्रथम ५ नाम नपुंसक और छठा स्त्रीलिङ्ग है।

स्वादुकण्टकः ( कण्टकोऽस्यास्ति इति अच्, स्वादुश्चासौ कण्टकश्च ) विकङ्कतः ( विकङ्कते इति अतच् प्रत्ययः ) स्रुवावृक्षः[२] ( स्रुवाया वृक्षः ) ग्रन्थिलः ( ग्रन्थिरस्यास्ति इति सिध्मादित्वादिलच् ) व्याघ्रपात् ( व्याघ्रस्य पादा इव पादा मूलान्यस्य इति अकारलोपः ) ये ५ पुं० नाम कटाय ( कठेर ) के हैं ॥ ३७, १/२ ॥

ऐरावतः[३] ( इरावत्या विद्युत इवायम् इति अण् ) नागरङ्गः[४] ( नागा रजन्त्यत्र इति घञ् नागस्य सिन्दूरस्येव रङ्गोऽस्य इति वा ) नादेयी[५] ( नद्यां भवा ढक् । ) भूमिजम्बुका ( भूमेर्जम्बूः ह्रस्वत्वात्स्वार्थे कन् ) ये ४ नाम नारङ्गीवृक्ष के हैं जिनमें १ म, द्वितीय पुं० और तृतीय चतुर्थ स्त्री० है ॥ ३८ ॥

तिन्दुकः ( तिम्यति इति मृगय्वादित्वात्साधुः संज्ञायां कन् ) स्फूर्जकः ( स्फूर्जति इति ण्वुल् ) कालस्कन्धः[६] ( कालः स्कन्धो यस्य ) शितिसारकः ( शितिः कालः सारो मज्जा यस्य ) ये ४ पुं० नाम तेंदुआनामक वृक्ष के हैं ॥ ३८, १/२ ॥

काकेन्दुः ( काकानां काकवर्णो वा तिन्दुः पृषोदरादिः ) कुलकः[७] ( कुलस्य गृहस्य प्रतिकृतिरिव इति कन् ) काकपीलुकः, काकैः पील्यते बाहुलकादुः ( काकानां पीलुरिव इति वा ) काकतिन्दुकः । ये ४ पुंलिङ्ग नाम कुचला के हैं।

---

१. घोण्टा तु बदरीपूगवृक्षयोरपि योषिति। इति मेदिनी। बदरी सदृशाकारो वृक्षः सूक्ष्मफलो भवेत्। अटव्यामेव सा घोण्टा गोपघण्टेति चोच्यते।

२. स्रुवा द्वयोर्होमपात्रे सल्लकीमूर्वयोः स्त्रियाम्।

३. ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे। नागभेदे च पुंसि स्याद्विद्युत्तद्भेदयोः स्त्रियाम्। नपुंसके महेन्द्रस्य ऋजुदीर्घशरासने।

४. नागरङ्गे तु नारङ्गो नार्यङ्गस्तक्रवासनः। इति वाचस्पतिः। नारङ्गः पिप्पलीरसे। यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च।

५. नादेयी नागरङ्गे स्याज्जयायां जलवेतसे। भूमिजम्ब्वां जपायां च काङ्गुष्ठे च समीक्ष्यते। इति विश्वः।

६. कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे। इति विश्वः।

७. कुलकं तु पटोले स्यात्संबद्धश्लोकसंहतौ। पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते। इति विश्वमेदिन्यौ।

**गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ।**
**तिलकः क्षुरकः श्रीमान् समौ पिचुलझावुकौ ॥४०॥**
**श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ।**
**क्रमुकः पट्टिकाख्यः स्यात् पट्टी लाक्षाप्रसादनः ॥४१॥**

---

गोलीढः ( गोभिर्लिह्यते स्म इति क्तः ) झाटलः ( झाटं संघातं लाति इति कः) घण्टापाटलिः ( अहानि घण्टा बाहुलकाद्धन्तेष्टो घत्वं च। पाटं लाति इति बाहुलकाड्डिः, घण्टा चासौ पाटलिश्च ) मोक्षः[१] (मोक्षयति रोगम् इति सन्नन्तादकर्मकात् णिजन्तादच् ) मुष्ककः[२] ( मुष्णाति रोगम् इति कक् स्वार्थे कन् च ) ये ५ पुंलिङ्ग नाम लोध विशेष के हैं ॥ ३९. १/२ ॥

तिलकः[३] ( तिलति स्नेहयति इति क्वुन्, तिल इव, इति वा कन् ) क्षुरकः[४] ( क्षुरति विलेखयति इति क्वुन् ) श्रीमान्[५] ( श्रीरस्त्यस्य इति मतुप् ) ये ३ पुंलिङ्ग नाम तिलकवृक्ष के हैं।

पिचुलः[६] ( पिचुं = तूलं लाति इति कः ) झावुकः ( झा इति शब्दं वेति गच्छति डुः, संज्ञायां कन् च ) ये २ पुंलिङ्ग नाम झाऊ वृक्ष ( झौआ ) के हैं। [७]श्रीः पर्णेषु यस्याः इति ङीप् स्वार्थे कन् च ) कुमुदिका[८] ( कौ मोदते हर्षते इति कः स्वार्थे कन् च ) कुम्भी[९] ( कुम्भीव रसाधारत्वात् ) कैटर्यः ( केटनम् इति घञ् केटः, तं राति इति ष्यञ् ) कट्फलः ( कटति इति क्विप्, कट् फलमस्य ) ये ५ नाम कायफल के हैं। जिनमें प्रथम से तृतीय तक स्त्रीलिङ्ग और अन्य दो पुंलिङ्ग हैं ॥ ४०. १/२ ॥

क्रमुकः[१०] ( क्रामति इति बाहुलकादुकन् ) पट्टिकाख्यः (पट्टिका आख्या यस्य) पट्टी[११] ( पट्टोऽस्यास्ति इति इनिः ) लाक्षाप्रसादनः ( लाक्षां प्रसादयति इति ल्युट् ) ये ४ पुंलिङ्ग नाम पठानी लोध के हैं ॥ ४१ ॥

---

१. मोक्षस्तु मुक्तिपाटलिमोचने।
२. मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च।
३. तिलको द्रुमभेदेऽश्वभेदे च तिलकालके। क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके।
४. क्षुरकः कोकिलाक्षे स्याद्गोक्षुरे तिलकद्रुमे।
५. श्रीमांस्तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु।
६. पिचुः स्यात्तूलकर्षयोः, इति धरणिः। पिचुलो झवुकेऽपि स्यान्निचुले जलवायसे।
७. श्रीपर्णीकाश्मरीकुम्भ्योः क्लीबे पद्माग्निमन्थयोः।
८. कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधौ। गंभार्यां पुंसि दिङ्नागे नागशाखामृगान्तरे।
९. पृश्निकायां च कुम्भी स्यात्पाटलौ कट्फलेऽपि च। इति रन्तिदेवः।
१०. क्रमुकः पट्टिकालोध्रे गुवाके भद्रमुस्तके। क्रमुको भद्रमुस्तके। गुवाके पट्टिकालोध्रे। इति हैमः।
११. पट्टः पेषणपाषाणे व्रणादीनां च बन्धने। चतुष्पथे च राजादिशासनान्तरपीठयोः। ( पट्टिः स्त्री पट्टभेदे स्याल्ललाटे क्रमुकद्रुमे। पट्टी ललाटभूषायां पट्टी लाक्षा प्रसादने। इति टवर्गान्ते विश्वः )।

नूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च।
तूलं च नीपप्रियककदम्बास्तु हलिप्रिये ॥४२॥
वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु।
गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ॥४३॥
प्लक्षश्च तिन्तिडी चिञ्चाऽम्लिकाऽथो पीतसारके।

---

नूदः ( नुदति पापम् इति कः दीर्घश्च पृषोदरादिः ) यूपः ( युवन्त्यनेन इति पो दीर्घश्च ) क्रमुकः ( क्रामति इति बाहुलकादुकन् ) ब्रह्मण्यः[1] ( ब्रह्मणि वैदिके साधुः इति यत् ) ब्रह्मदारु ( ब्रह्मणो ब्रह्मणि वा दारु ) तूलम्[2] तूलयति तूल्यते वा इति कः घञ् वा ) ये ६ नाम सहतूत के हैं। जिनमें प्रथम से चतुर्थ तक पुंलिङ्ग और अन्य दो नपुंसक हैं।

नीपः[3] ( नयति, नीयते वा प्रापयति प्राप्यते वा इति पः बाहुलकाद्गुणाभावः ) प्रियकः[4] ( प्रीणाति तर्पयति इति क्वुन् ) कदम्बः[5] ( कदति इति अम्बच् ) हलिनः प्रियः। सुराया अधिवासनात् ) ये ४ पुंलिङ्ग नाम कदम्ब वृक्ष के हैं ॥ ४२ ॥ वीरवृक्षः[6] ( वीर इव वृक्षो दुःस्पर्शत्वात् ) अरुष्करः[7] ( अरुर्व्रणं करोति इति टः, षः च ) अग्निमुखी[8] ( अग्निरिव मुखमस्याः गौरादिः ) भल्लातकी ( भल्ल इवातति क्वुन्, ङीप् च ) ये ४ नाम भिलावा के हैं। जिनमें प्रथम द्वितीय पुंलिङ्ग, तृतीय स्त्रीलिङ्ग और चतुर्थ त्रिलिङ्ग हैं ॥ ४२ १/२ ॥

गर्दभाण्डः[9] ( गर्दभमत्ति इति डः ) कन्दरालः[10] ( कंदरां लाति इति कः ) कपीतनः[11] ( कपीनां कपेर्वर्णस्य वा ईतनः ) सुपार्श्वकः ( शोभनं पार्श्वमस्य कप् ) प्लक्षः[12] ( प्रक्षरति इति डः कपिलिकादित्वात् लत्वम् ) ये ५ पुंलिङ्ग नाम लाही पीपल ( गेढी ) के हैं।

तिन्तिडी[13] ( तिम्यति इति निपातः ) चिञ्चा ( चिम् इत्यव्यक्तं शब्दं चिनोति इति डः )

---

१. ब्रह्मण्यो ब्रह्मसाधौ स्याद्ब्रह्मदा ( से ) शनैश्चरे।
२. पुंलिङ्गस्तु पिचौ तूलः क्लीबं स्याद् ब्रह्मदारुणि। इति रुद्रः।
३. नीपः कदम्बबन्धूकनीलाशोकद्रुमेषु च।
४. प्रियकः पीतसारके। नीपे चित्रमृगे चालौ प्रियंगौ कुङ्कुमेऽपि च।
५. कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्।
६. वीरवृक्षस्तु भल्लातकार्जुनद्रुमयोः पुमान्।
७. अरुष्करो व्रणकृति त्रिषु, भल्लातके पुमान्।
८. भवेदग्निमुखो देवे विप्रे भल्लातके स्त्रियाम्।
९. गर्दभो गन्धभिद्यपि।
१०. कन्दरालः पुमान् गर्दभाण्डे प्लक्षतरावपि।
११. कपीतनो गर्दभाण्डशिरीषाम्रातकेषु च। अश्वत्थे च, इति विश्वः।
१२. प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके। इति हैमः।
१३. तिन्तिडी त्वम्लिका चिञ्चा तिन्तिडीका कपिप्रिया। इति वाचस्पतिः। तिन्तिडी चुक्रे चिञ्चायाम्।

सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ॥४४॥
साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः ।
नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ॥४५॥
राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ।
इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ॥४६॥

---

अम्लिका[१] ( अम्लो रसोऽस्यास्ति इति ठन् ) ये ३ स्त्रीलिङ्ग नाम इमली के हैं ।

पीतसारकः ( पीतः सारोऽस्य ) सर्जकः ( सृजति इति ण्वुल् ) असनः[२] ( अस्यति रुजम्, ल्युः ) बन्धूकपुष्पः ( बन्धूकस्येव पुष्पाण्यस्य ) प्रियकः[३] ( प्रीणाति, क्वुन् ) जीवकः[४] ( जीवयति इति ण्वुल् ) ये ६ पुंलिङ्ग नाम विजयसार के हैं ॥ ४४ ॥

सालः[५] ( सल्यते इति घञ् ) सर्जः ( सर्ज्यते इति अच् ) कार्श्यः ( कृषति इति कः ष्यञ् च ) अश्वकर्णकः ( अश्वकर्ण इव पत्रमस्य ) सस्यसंवरः ( सस्यैः संव्रियते इति अप् ) ये ५ पुंलिङ्ग नाम सखुआ के हैं ॥ ४४.१/२ ॥

नदीसर्जः ( नद्याः सर्जः ) वीरतरुः ( वीरश्चासौ तरुश्च दृढकाष्ठत्वात् ) इन्द्रद्रुः ( इन्द्रस्य इन्द्र इव वा द्रुः ) ककुभः[६] ( ककुभो दिशः सन्त्यस्य इति अच् ) अर्जुनः ( अर्ज्यते इति उनन् णिलुक् च ) ये ५ पुंलिङ्ग नाम अर्जुनवृक्ष के हैं ।

राजादनः[७] ( राजभिरद्यते इति ल्युट् ) फलाध्यक्षः ( फलानामध्यक्षः ) क्षीरिका ( क्षीरमस्त्यस्याः इति ठन् ) ये ३ नाम खिरिनी के पेड़ के हैं । जिनमें प्रथम नपुंसक-पुंलिङ्ग है, द्वितीय केवल पुंलिङ्ग एवं तृतीय स्त्रीलिङ्ग है ॥ ४५.१/२ ॥

इङ्गुदी ( इङ्गनम् इति घञ् इङ्गं द्यति इति पृषोदरादिः ङीष् च ) तापसतरुः ( तपस्विन उपयुक्तस्तरुः ) ये २ नाम इङ्गुदीके हैं । जिनमें प्रथम पुंलिङ्ग स्त्रीलिङ्ग हैं और द्वितीय केवल पुंलिङ्ग है ।

भूर्जः ( ऊर्जनम् ऊर्जः भूरूर्जोऽस्य ) चर्मी[८] ( चर्मास्यास्ति इति व्रीह्यादित्वात् इनिः ) मृदुत्वक्

---

१. अम्लीका चाम्लिका चिञ्चा तिन्तिडीका च तिन्तिला । इति चन्द्रः । अम्लिका तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु च ।

२. असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे ।

३. प्रियको जीवकोऽसनः । इति रत्नकोशः । प्रियकः पीतसारके । नीपे चित्रमृगे चालौ प्रियंगौ कुङ्कुमेऽपि च ।

४. पीठेभस्कन्धयोः क्लीबमासनं ना तु जीवके । इति रुद्रभसौ । जीवकः प्राणके पीतसारकृपणयोरपि । कूर्चशीर्षे च पुंसि स्यात् ।

५. पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयोः । इति दन्त्यादौ रभसः ।

६. ककुप् स्त्रियां प्रवेणी दिक् शोभासु चम्पकस्रजि । ककुभो रागभेदेऽपि वीणाङ्गेऽर्जुनपादपे ॥ पार्थस्तु ककुभे जिष्णौ । इति विश्वात् पार्थोऽपि ।

७. राजादनं क्षीरिकायां पियाले किंशुकेऽपि च । राजादनः प्रियालद्रौ क्षीरिकायां त्रिपत्रके । इति हैमात् पुंलिङ्गोऽपि ।

८. चर्मी फलकपाणौ स्याद्भूर्जे भृङ्गिरिटावपि ।

**पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ।**
**पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ॥४७॥**
**चिरविल्वो नक्तमालः करजश्च करञ्जके ।**
**प्रकीर्यः पूतिकरजः पूतीकः कलिमारकः ॥४८॥**
**करञ्जभेदाः षड्ग्रन्थो मर्कटयङ्गारवल्लरी ।**

---

( मृदुस्त्वगस्य ) ये ३ पुं० नाम भोजपत्र वृक्ष के हैं ।

पिच्छिला ( पिच्छा शाल्मलिनिर्यासोऽस्या अस्ति इति पिच्छादित्वात् इलच् ) पूरणी[१] ( पूरयति इति ल्युट् ङीप् च ) मोचा[२] ( मुञ्चति रसम् इति अच् ) स्थिरायुः[३] ( स्थिरमायुर्यस्याः ) शाल्मलिः ( शालयति संचलति इति णिजन्तात् क्विप् , मलते इति इन् , शालश्चासौ मलिश्च इति समासः ) ये ५ नाम सेमल वृक्ष के हैं । जिनमें प्रथम से तृतीय तक स्त्री० है और चतुर्थ पुं०, एवं पञ्चम पुं० स्त्री० दोनों है ॥ ४६.१/२ ॥

पिच्छा ( पतितुमिच्छति इति सन्नन्तात् अच् पृषोदरादिः ) शाल्मलीवेष्टः[४] ( शाल्मल्या वेष्टः ) ये २ नाम सेंवरीगोंद या मोचरस के हैं । जिनमें प्रथम स्त्री० और द्वितीय पुं० है ।

रोचनः[५] ( रोचते इति युच् ) कूटशाल्मलिः ( कूटश्चासौ शाल्मलिश्च इति समासः ) ये २ पुं० नाम काला सेमर के हैं ॥ ४७ ॥

चिरविल्वः ( चिरं विलति भिनत्ति इति वाहुलकाद्कः ) नक्तमालः ( नक्तं मालो धारणमस्य, नक्तमा अलति वा इति अच् ) करजः[६] ( करणे जन्यते इति डः ) करञ्जकः ( कं रञ्जयति इति अण् , नलोपाभावश्च ) ये ४ पुं० नाम करञ्जवृक्ष के हैं ।

प्रकीर्यः[७] ( प्रकीर्यते इति यक् ) पूतिकरजः[८] ( पूतिश्चासौ करजश्च इति द्वन्द्व समासः ) पूतीकः[९] ( पुनाति इति ईकन् तुक्च ) कलिमारकः ( कलिं मारयति इति स्वार्थे कन्) षड्ग्रन्थः[१०] ( षड् ग्रन्थयो यस्य इति अच् षड्ग्रन्था यस्य वा ) मर्कटी[११] ( मर्कति इति अटन् गौरादिः ) अंगारवल्लरी ( अङ्गार-

---

१. पूरणः पूरके त्रिषु । क्लीबं पिष्टप्रभेदे च पूरणीशाल्मलिद्रुमे । पटारम्भकसूत्रेषु ।
२. मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः ।
३. षष्टिवर्षसहस्राणि वने जीर्यति शाल्मलिः । इति वचनात् ।
४. क्वाथः कषायो निर्यूषो निर्यासो वेष्टकस्तथा । इति रभसः ।
५. रोचना रक्तकल्हारे गोपित्तवरयोषितोः । रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु ।
६. करजं स्याद्व्याघ्रनखे करञ्जनखयोः पुमान् ।
७. प्रकीर्यः पूतिकरजे विप्रकीर्णे तु वाच्यवत् ।
८. पूतिकः इति पाठे पूतिं कायति । पूतीकः पूतिकः इति माधवः ।
९. पूतीकरञ्जः सुमनास्तथा कलहनाशनः, इति इन्दुः ।
१०. षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान् ।
११. अथ मर्कटी । करञ्जभिच्छूकशिम्ब्योः पुंसि वानरलूतयोः ।

रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥४९॥
गायत्री बालतनयः खदिरो दन्तधावनः ।
अरिमेदो विट्खदिरे कदरः खदिरे सिते ॥५०॥
सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ।
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ॥५१॥

---

वर्णपर्णा=वल्लरी ) ये ३ नाम करञ्ज के १-१ भेद के हैं। जिनमें प्रथम पुं० एवं द्वितीय तृतीय स्त्री० हैं ॥ ४८.१।२ ॥

रोही[1] ( अवश्यं रोहति इति णिनिः ) रोहितकः[2] ( रोहितो वर्णोऽस्यास्ति अच् कन् च ) प्लीहशत्रुः[3] ( प्लीह्नः शत्रुः ) दाडिमपुष्पकः ( दाडिमस्य पुष्पमिव पुष्पमस्य ) ये ४ पुं० नाम लालकरञ्ज के हैं ॥ ४९ ॥

गायत्री[4] ( गायन्तं त्रायते=पालयते इति कः स्त्रीत्वात् गायत्री, व्रीह्यादित्वादिन्नन्तः पुं० इति ) बालतनयः[5] ( बालास्तनयाः पत्राण्यस्य ) खदिरः[6] ( खदति इति किरच् ) दन्तधावनः ( दन्तान् धावति इति ल्युट् ) ये ४ पुंलिङ्ग नाम कत्था, खैर के हैं। जिनमें प्रथम स्त्रीलिङ्ग भी होता है ॥ ४९.१/२ ॥

अरिमेदः ( अरिरिव मेदः स्नेहोऽस्य ) विट्खदिरः ( विड्गन्धिः खदिरः ) ये २ पुंलिङ्ग नाम दुर्गन्ध खैर के हैं।

कदरः[7] ( दृणाति=विदारयति इति पचाद्यच् दरः कस्य जलस्य दरः ) सोमवल्कः ( सोम इव वल्कोऽस्य ) ये २ पुंलिङ्ग नाम सफेद कत्थे के हैं।

व्याघ्रपुच्छः ( व्याघ्रस्य पुच्छमिव पुच्छमस्य ) गन्धर्वहस्तकः ( गन्धर्वस्य मृगभेदस्य हस्त इव हस्तः=पत्रमस्य) एरण्डः (आ ईरयति वायुम् णिजन्ताद्बाहुलकादण्डच्) उरुबूकः[8] उरु (महान्तं वायुं वायति

१. रोही रोहितकेऽश्वत्थवटपादपयोः पुमान् ।
२. रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे ना रोहितद्रुमे ।
३. प्लीहशत्रुर्वनतिक्तश्च रोहितः । इति माधवः ।
४. गायत्री खदिरे स्त्री स्यात् । इति रभसः । गायत्री त्रिपदादेवी छन्दोभित्खदिरेषु च । वह्नि गायत्रिणां तथा । इति वैद्यकान्नान्तोऽपि ।
५. बालपत्रो यवासः खदिरश्च । इति प्राञ्चः ।
६. खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकीबालपत्रश्च जिह्मशल्यः क्षितिक्षमः । खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने ।
७. कदरः श्वेतखदिरे क्रकचव्याधिभेदयोः ।
८. खपुरः क्रमुको, भिचुलो हिज्जल, एरण्ड उरुबूकः । इति बोपालितः उरुबूकोरुवुकव्याघ्रदलाश्च, इति रभसः ।

चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ।
अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ॥५२॥
पिण्डीतको मरुबकः श्वसनः करहाटकः ।
शल्यश्च मदने शक्रपादपः पारिभद्रकः ॥५३॥
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ।

शोषयति इति उकः ) रुचकः ( रोचते दीप्यते इति क्वुन् ) चित्रकः[1] ( चित्रयति इति क्वुन् ) चञ्चुः[2] ( चञ्चति इति बाहुलकादुः ) पञ्चाङ्गुलः ( पञ्चाङ्गुलयोऽस्य इति अच् ) मण्डः[3] ( मण्डयति इति अच् ) वर्द्धमानः[4] ( वर्धते इति चानश् ) व्यडम्बकः ( व्यडं मलमम्बयति इति णिच् ण्वुल् च ) ये ११ पुं० नाम एरण्ड ( रेंडी ) के हैं ॥ ५०-५१.१/२ ॥ शमीरः ( अल्पा शमी इति रः ) यह १ पुं० नाम छोटी शमी का है ।

शमी[5] ( शमयति रोगान् पचाद्यच् ङीष् ) सक्तुफला ( सक्तुवत् फलमस्याः टापि ) शिवा[6] ( शिवं करोति इति णिजन्तादच् ) ये ३ स्त्री० नाम शमी के हैं ॥ ५२ ॥

पिण्डीतकः[7] ( पिण्डी तनोति इति डः कन् ) मरुबकः ( मरुं वाति इति क्वुन् ) श्वसनः[8] ( निर्जलेऽपि श्वसिति ल्युः ) करहाटकः[9] ( करं हाटयति इति अण् स्वार्थे कन् ) शल्यः[10] ( शलति इति यक् ) मदनः[11] ( मदयति इति ल्युः ) ये ६ पुं० नाम मयनफल के हैं ॥ ५२.१/२ ॥

शक्रपादपः ( शक्रस्य पादपः ) पारिभद्रकः[12] (पारि निष्ठां प्राप्तं भद्रमस्य) भद्रदारु[13] (भद्रं दारु) द्रुकिलिमम् ( किलति इति बाहुलकात् किमच् द्रुश्चासौ किलिमं च ) पीतदारु ( पीतं च तद् दारु च )

१. चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिषु ।
२. चञ्चुस्त्रोट्यां स्त्रियां पुंसि गोनार्दाके व्यडम्बके ।
३. आमलक्यां स्त्रियां मण्डएरण्डे मोचपिच्छयोः । इति रभसः ।मण्डः पञ्चाङ्गुले शाके पुंसि क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां मण्डाथास्त्रियां सारपिच्छयोः । अकारप्रश्लेषोऽपि । अमण्ड-पञ्चाङ्गुलवर्धमानगन्धर्वहस्ताः । इति हारावली । गन्धर्वहस्तकोऽमण्ड आमण्डो व्याघ्रपुच्छकः । इति तारपालः ॥
४. वर्धमानः प्रश्नभेदे शरावैरण्डविष्णुषु ।
५. शमी सक्तुफलायां च शिम्बिकायां च वागुली ।
६. शिवा झाटामलौषधी । अभयामलकीगौरीफेरुसक्तुफलासु च ।
७. पिण्डीतकः स्यात्तगरे मदनाख्यमहीरुहे ।
८. श्वसनं श्वसिते पुंसि मारुते मदनद्रुमे ।
९. करहाटः शिफाकन्दे पद्मस्य मदनद्रुमे ।
१०. शल्यं ना श्वाविन्मदनद्रुमे । इति तालव्यादौ रभसः ।
११. मदनः स्मरवसन्तद्रुभिद्धत्तूरसिह्लके ।
१२. पारिभद्रस्तु निम्बद्रौ मन्दारे देवदारुणि ।
१३. भद्रदारुणि च क्लीबम् । इति अमरमाला ।

**पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ॥५४॥**
**पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा ।**
**कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ॥५५॥**
**लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली ।**
**विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ॥५६॥**

---

दारु[1] ( दीर्यते इति ञुण् ) पूतिकाष्ठम् ( पूति च तत्काष्ठं च ) देवदारु ( देवस्य दारु ) ये ८ नाम देवदारु के हैं। जिनमें १—६ पुं०.शेष० २ न० हैं ॥ ५४ ॥

पाटलिः ( पातीति क्विप्, टलति इति इनिः, पाश्चासौ टलिश्च ) पाटला[2] ( पाटं लाति इति कः ) अमोघा[3] ( न मोघा ) काचस्थाली ( काचस्य कार्ष्ण्यस्य स्थाली पात्रम्, स्वामिमते—'काला' 'स्थाली' ) फलेरुहा ( फले रोहति इति कः सप्तम्या अलुक् च ) कृष्णवृन्ता[4] ( कृष्णं वृन्तमस्याः ) कुबेराक्षी ( कुबेरस्येवाक्षि यस्याः, अच्, गौरा० ) ये ७ नाम पाढ़र के हैं। जिनमें २—६ स्त्री० और १ म पुं० स्त्री० दोनों हैं।

श्यामा[5] ( श्यामो वर्णोऽस्त्यस्याः अर्शआदिः ) महिलाह्वया ( महिलाया आह्वयो यस्याः, सप्तम्युपमान—साधुः ) लता[6] ( लतति इति पचाद्यच् ) गोवन्दनी ( गवि भूमौ वन्द्यते कर्मणि ल्युट् ) गुन्द्राः[7] ( गुन्द्रयति इत्यच् ) प्रियङ्गुः ( प्रियं गच्छति मृगय्वादौ निपातितः ) फलिनी[8] ( फलमस्त्यस्याः इति इनिः ) फली ( फलमस्त्यस्याः इति गौरादित्वात् ङीष् ) विष्वक्सेना[9] ( विष्वक् = समन्तात् सिनोति = बध्नाति इति नः ) गन्धफली[10] ( गन्धवत् फलमस्याः इति ङीष् ) कारम्भा (ईषद् रम्भा इति ईषदर्थे कोः, का) प्रियकः[11] (प्रीणाति इति क्वुन् ) ये १२ नाम प्रियङ्गुवृक्ष के हैं। जिनमें प्रथम—ग्यारह स्त्री० और १२ वां पुं० है ॥ ५५-५६ ॥

---

१. पुंनपुंसकयोर्दारुः । इति त्रिकाण्डशेषात् पुंस्यपि ।
२. पाटला पाटली स्त्री स्यादस्याः पुष्पे पुनर्न ना ।
३. अलिप्रिया विशालाग्राप्यमोघा पाटलिर्द्वयोः । इति वाचस्पतिः । मोघा स्त्री पाटलावृक्षे मोघं त्रिषु निरर्थके । इति रुद्रात् मोघा अपि ।
४. काला तु कृष्णवृन्ताख्या मञ्जिष्ठानीलिकासु च । कृष्णवृन्ता पाटलायां माषपर्ण्यां च योषिति ।
५. श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ, अप्रसूताङ्गनायां च प्रियंगावपि वल्गुलौ । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ ।
६. प्रियंगुनरायोर्लता । स्पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च ।
७. गुन्द्रस्तेजनके स्त्री तु प्रियंगौ भद्रमुस्तके ।
८. फलिन्यग्निशिखायां स्त्री फलिन्यां फलिने त्रिषु ।
९. विष्वक्सेना फलिन्यां स्याद् विष्वक्सेनो जनार्दने ।
१०. गन्धफल्यपि गुन्द्रायां चम्पकस्य च कोरके ।
११. प्रियकः प्रीतसारके । नीपे चित्रमृगे चालौ प्रियंगौ कुङ्कुमेऽपि च ।

मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ।
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ॥५७॥
शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ।
अमृता च वयस्या च त्रिलिङ्गस्तु विभीतकः ॥५८॥
नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ।

---

मण्डूकपर्णः ( मण्डूक इव पर्णमस्य ) पत्रोर्णः[१] ( पत्रे ऊर्णाऽस्य ) नटः ( नटति इति अच् ) कट्वङ्गः ( कटून्यङ्गान्यस्य ) टुण्टुकः[२] ( टुण्टु इति कायति इति कः ) स्योनाकः[३] ( सीव्यति इति बाहुलकान्नः अन्तरङ्गत्वाद्यण् तेन अकति अच् ) शुकनासः ( शुकनासा इव पुष्पमस्यास्ति इति अच् ) ऋक्षः[४] ( ऋषति = गच्छति इति सेः किच्च ) दीर्घवृन्तः ( दीर्घं वृन्तमस्य इति अच् ) कुटन्नटः ( कुटन् वक्रीभवन् नटति = स्पन्दयति इति अच् ) शोणकः[५] ( शोणति इति अच् स्वार्थे कन् ) अरलुः ( इयति इति अरुः कपिलकादिः ) ये १२ पुं० नाम सोनापाठा के हैं। [६]तिष्यफला ( तिष्यं = मङ्गल्यं फलमस्याः इति अजादित्वात् टाप्, तिष्ये = कलियुगे वा ) आमलकी ( आमलते इति क्वुन् ङीप् ) अमृता[७] ( न म्रियन्तेऽनया इति तन् ) वयस्था[८] ( वयो यौवनं तिष्ठत्यनया ) आंवला के ये ४ नाम हैं। जिनमें प्रथम द्वितीय त्रिलिङ्ग हैं, शेष दो स्त्रीलिङ्ग हैं ॥ ५७.१/२ ॥

बिभीतकः ( विगतं भीतं रोगभयमस्मात् इति ङीष् ) अक्षः[९] (अक्षति इति अच्) तुषः[१०] (तुष्यति इति कः ) कर्षफलः ( कर्षं फलमस्येति अच् ) भूतावासः ( भूतानामावासः ) कलिद्रुमः ( कलेर्द्रुमः ) ये ६ नाम बहेड़ा के हैं। जिनमें प्रथम त्रिलिङ्ग और ५ पुलिङ्ग हैं ॥ ५८.१/२ ॥

---

१. पत्रोर्णधौतकौशेये क्लीबं स्याच्छोणके पुमान् ।

२. टुण्टुकः शोणकाल्पयोः ।

३. स्योनः किरणसूर्ययोः ।

४. ऋक्षः पर्वतराजे स्याद्भल्लूके शोणके पुमान् ।

५. शोणः कृशानौ स्योनाके लोहिताश्वे नदे पुमान् । त्रिपु कोकनदच्छाये ।

६. नित्यमामलके लक्ष्मीर्नित्यं हरितगोमये । नित्यं शङ्खे च पद्मे च नित्यं शुक्ले च वाससि ।

७. अमृता मागधी पथ्यागुडूच्यामलकीपु च ।

८. वयस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीपु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिपु । कायस्थापि—कायस्था तु हरीतक्यामलक्योश्च प्रकीर्तिता ।

९. अक्षो ज्ञानात्मशकटव्यवहारेपु पाशके । रुद्राक्षे रावणौ सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये ।

१०. धान्यत्वचि तुषः पुंसि विभीतकतरावपि । इति रुद्रः ।

अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ॥५९॥
हरीतकी हैमवती चेतकी श्रेयसी शिवा ।
पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ॥६०॥
कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ।

---

अभया[1] ( न भयमस्याः ) अव्यथा[2] ( न व्यथा यस्याः ) पथ्या[3] ( पथोऽनपेता इति यत् ) कायस्था[4] ( कायस्तिष्ठत्यनया घञर्थे कः ) पूतना[5] ( पूतं करोति इति णिच् युच् च ) अमृता ( न म्रियन्तेऽनया इति तन् किच्च ) हरीतकी हरिर्वर्णं इतो यस्मात् इति कन् ङीष् ) हैमवती[6] ( हिमवति जाता इति अण् ) चेतकी ( चेतयति, ण्वुल्, ङीप् च ) श्रेयसी[7] ( अतिप्रशस्ता इति ईयसुन् श्रः, ङीपं चोगित्वात् ) [8]शिवा ( शिवं करोति इति णिच् अच् ) ये ११ स्त्रीलिङ्ग नाम हरीतकी के हैं ॥ ५९.१।२ ॥

पीतद्रुः ( पीतश्चासौ द्रुश्च इति ) सरलः[9] ( सरति इति बाहुलकादलच् ) पूतिकाष्ठम् ( पूतेः पावनस्य काष्ठम् ) ये ३ नाम सरलनामक वृक्षविशेष के हैं। जिनमें १, २ पुंलिङ्ग और ३ रा नपुंसक है।

द्रुमोत्पलः (द्रुमे उत्पलं तदाकारं पुष्पमस्य इति 'सप्तमी' इति योगविभागात् समासः) कर्णिकारः[10] ( कर्णिकामियर्ति इति अण् ) परिव्याधः[11] (परिविध्यति इति णः) ये ३ पुंलिङ्ग नाम कठचम्पा के हैं।

लकुचः ( लवयते इति बाहुलकादुचः ) लिकुचः ( पृषोदरादित्वात् इत्वे ) डहुः ( दहति मृगय्वादित्वात् निपातितः ) ये २ पुंलिङ्ग नाम बड़हर के हैं ॥ ६०.१।२ ॥

---

१. अभया स्त्री हरीतक्यां सुशीरे च नपुंसकम् । निर्भये वाच्यलिङ्गः, इति मेदिनी ।
२. अव्यथो निर्व्यथे सर्पे चारटी पथ्ययोः स्त्रियाम् । इति मेदिनी ।
३. पथ्या स्त्री हरीतक्यां हिते त्रिषु इति मेदिनी ।
४. कायस्था तु हरीतक्यामलक्योश्च प्रकीर्तिता, इति । रभसः । कायस्थः परमात्मनि । नरजातिविशेषे ना हरीतक्यां तु योषिति ॥ इति मेदिनी ।
५. पूतनातु हरीतक्यां दानवीरोगभेदयोः । इति मेदिनी ।
६. हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोभयोः । इति विश्वः ।
७. श्रेयसीकरिपिप्पल्यामभयापाठयोरपि । इति ।
८. शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । बालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् ।
सुखे क्षेमे जले क्लीबं शिवा झाटामलौषधौ । अभया मलकीगौरीफेरुसक्तुफलासु च इति ।
९. पूतिकाष्ठं च सरलदेवदारुमहीरुहोः इति । सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिपु । इति ।
१०. कर्णिकारः पुमानारग्वधद्रौ च द्रुमोत्पले । इति ।
११. परिव्याधस्तु पुंसि स्याद्द्रुतसे च द्रुमोत्पले, इति मेदिनीकाराः ।

पनसः कण्टकिफलो निचुलो हिज्जलोऽम्बुजः ॥६१॥
काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला ।
अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ॥६२॥
पिचुमर्दश्च निम्बेऽथ पिच्छिलाऽगुरुशिंशपा ।

---

पनसः[१] ( पनाय्यते स्तूयते इति असजन्तो निपातितः ) कण्टकिफलः ( कण्टकाः सन्त्यस्य इति इनिः, कण्टकिः फलमस्य ) ये २ पुंलिङ्ग नाम कटहल के हैं।

निचुल[२] ( निचोलति इति चुरादीनां णिज्वा इगुपधत्वात् कः ) हिज्जलः ( हिनोति इति क्विप् हित् जलमस्य ) अम्बुजः ( अम्बुनि जातः इति डः ) ये ३ पुं० नाम समुद्रफल के हैं। इज्जलः भी पाठ है—एतीति क्विप्, तुक् इत्, इत् जलमस्य-विग्रह होगा।

काकोदुम्बरिका ( काकप्रिया उदुम्बरी इति कन् ) फल्गुः[३] ( फलति इति गुक् ) मलपूः[४] ( मलात् पापात् पुनाति इति क्विप् ) जघनेफला ( जघने फलं यस्याः इति सप्तम्या अलुक् ) ये ४ स्त्री० नाम कालागूलर के हैं ॥ ६१ ॥

[५]अरिष्टः ( न रिष्टमशुभमस्मात् ) [६]सर्वतोभद्रः ( सर्वतो भद्रं यस्मात् ) [७]हिङ्गुनिर्यासः ( हिङ्ग्वाकारो निर्यासोऽस्य ) मालकः ( मलते इति ण्वुल् ) पिचुमर्दः ( पिचुं कुष्ठभेदं मर्दयति इति अण् ) निम्बः ( निम्बति = सिंचति स्वास्थ्यम् इति अच् ) ये ६ पुं० नाम नीम के हैं।

[८]पिच्छिला ( पिच्छाऽस्त्यस्याः इति इलच् ) [९]अगुरुः (न गुरुरस्मात् ) [१०]शिंशपा (शीघ्रं शीर्षं वा पाति इति कः। 'शिम्' इत्यव्यक्तं शब्दं शपति इति पचाद्यच् ) ये ३ नाम शीशम के हैं। जिनमें द्वितीय नपुंसक और प्रथम तृतीय स्त्रीलि० हैं ॥ ६२ १/२ ॥

---

१. पनसः कण्टकिफले कण्टके वानरान्तरे । स्त्रियां रोगप्रभेदे स्यात् ।
२. निचुलस्तु निचोले स्याद्दिज्जलाख्यमहीरुहे । इति मेदिनी । निचुलेज्जलहिज्जलाः, इति रभसः ॥ वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे । इति शब्दार्णवात् ।
३. फल्गुसारेऽभिधेयवत् । नदीभेदे मलय्यां स्त्री, इति मेदिनी ।
४. मलं पापे च किट्टे च वर्चस्के कृपणे मलः, इति धरणिः । मलते वाडुलकादयूः—इति वा पाठः ।
५. अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च, इति मेदिनी ।
६. सर्वतोभद्र इत्युक्तः काव्यचित्रगृहान्तरे । निम्बे ना सर्वतोभद्रा गम्भारी नटयोषितो, इति मेदिनी ।
७. हिङ्गुनिर्यास इत्येष निम्बे हिङ्गुरसेऽपि च, इति मेदिनी ।
८. पिच्छलं विजिलेऽन्यवत् । स्त्री पोतिका शिंशपयोः शाल्मलीसिन्धुभेदयोः ।
९. अगुरु क्लीबे शिंशपायां जोङ्गके, लघुनि त्रिषु, इति रुद्रः ।
१०. श्वश्रूस्तथा श्वसुरशाश्वतशिंशपाश्च इति, शभेदात् ।

कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ॥६३॥
भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ।
एतस्य कलिका गन्धफली स्यादथ केसरे ॥६४॥
बकुलो वञ्जुलोऽशोके समौ करकदाडिमौ ।

---

कपिला = कपिलवर्णपुष्पा सती भस्मगर्भोच्यते इति सम्बन्धः—भस्मगर्भा ( भस्म गर्भे यस्याः शुक्लसारत्वात् ) यह एक स्त्री० नाम कपिल वर्ण वाले शीशम का है ।

शिरीषः ( शृणाति शीर्यते वा इति ईषन् ) कपीतनः ( तनोति विस्तारयति इति तनः, यास्तनः ईतनः, कपीनां कपेर्वर्णस्य वा ईतनः कपीतनः ) [1]भण्डिलः ( भण्डति कल्याणयति इति इलच् ) ये ३ पुंलिङ्ग नाम सिरीस के है ।

[2]चाम्पेयः ( चम्पाया अपत्यम् इति ढक् ) चम्पकः ( चम्पयति चम्प्यते वा इति क्वुन् ) [3]हेमपुष्पकः ( हेमवर्णं पुष्पमस्य इति कन् ) ये तीन पुंलिङ्ग नाम चम्पा के है ॥ ६३ $^1/_2$ ॥

[4]गन्धफली ( गन्धः फलं साध्यमानमस्या इति ङीष् ) यह एक स्त्रीलिङ्ग नाम चम्पा की कली का है ।

[5]केसरः ( के जले सरति, अच् ) वकुलः ( वङ्कते गच्छति, उलच् आगमशास्त्रस्यानित्यत्वान्न नुम् ) ये दो पुं० नाम मौलसरी के हैं ।

वञ्जुलः = ( वजति = गच्छति बाहुलकात् उलच्, नुम् ) [6]अशोकः ( न शोकोऽस्मात् ) ये दो पुं० नाम अशोक के हैं ।

[7]करकः ( करोति दोषाभावम्, वुन् ) [8]दाडिमः ( दलनं दालः घञ्, भावप्रत्ययान्तादिमप् दाडिम्बोऽपि ) ये दो पुं० नाम अनार के हैं ॥ ६४ $^1/_2$ ॥

---

१. भण्डिरो भण्डिलो ना, इति वाचस्पतिः ।

२. चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे, इति मेदिनी ।

३. हेमपुष्पं तु चम्पके । अशोकद्रौ जपापुष्पे ।

४. प्रियंगौ स्त्री गन्धफली चम्पकस्य च कोरके, इति रुद्रः ।

५. केसरं त्रिलिङ्ग नि क्लीबं किञ्जल्के न स्त्रियां पुमान् । सिंहच्छटायां पुंनागे वकुले नागकेसरे ॥ इति मेदिनी ।

६. अशोकस्त्रिषु निःशोके पुंसि कंकेलिपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यात् नपुंसकम् ॥ इति मेदिनी ।

७. करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करंके च कमण्डलौ । इति मेदिनी ।

८. दाडिमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु । इति मेदिनी । दाडिम्भसारपिण्डीरस्वाद्वम्लशुकवल्लभाः । इति रभसः ।

चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ॥६५॥
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ।
श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका ॥६६॥
जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ।
एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ॥६७॥
कृष्णपाकफलाविग्नसुषेणाः करमर्दके ।

---

[1]चाम्पेयः=( चम्पाया अपत्यम् ढक् ) केसरः ( केसराः सन्ति अस्य, अच् ) [2]नागकेसरः ( नागाख्यः केसरः ) काञ्चनाह्वयः ( काञ्चनस्याह्वयः=आह्वा यस्य ) ये चार पुं० नाम नागचम्पा पुष्प के हैं ।

[3]जया ( जयति पचाद्यच् ) [4]जयन्ती ( जयति इति झच्, ङीप् ) तर्कारी ( तर्कमृच्छति अण् ) नादेयी ( नद्यां भवा ढक्, ङीप् ) वैजयन्तिका ( विजयन्तस्येयम् अण्, कन् स्वार्थे, वैजयन्ती पताकेव वा इति प्रतिकृतौ कन् ) ये पाँचों स्त्री० नाम जाहो, अरणी या गनियार के हैं ॥ ६५ [1]/[२] ॥

[5]श्रीपर्णम् ( श्रीः पर्णेषु यस्य ) अग्निमन्थः ( अग्निं मथ्नाति अण् ) कणिका ( कणति क्वुन् ) गणिकारिका ( गणनम्=संख्यानम्, इक्, गणिं करोति अण्, ङीप्, कन् ) जयः ( जयति पचाद्यच् ) ये पाँचों नाम जयपर्ण के हैं जिनमें प्रथम न०, तृ० चतु० स्त्री०, शेष दो पुं० हैं ।

[6]कुटजः ( कूटे शृंगे जायते स्म ड, पृषोदरादिः ) [7]शक्रः ( शक्नोति शक्लृ शक्तौ, रक् ) वत्सकः ( वदति वद व्यक्तायां वाचि, सः कन् च ) गिरिमल्लिका ( गिरिमल्लीव, कन् इवार्थे ) ये ४ नाम कटैया के हैं जिनमें प्रथम तीन पुं० तथा चतुर्थ स्त्री० हैं ॥ ६६ [१]/[२] ॥

कुटजस्य फले—कलिङ्गम् ( कलिं गच्छति, अन्तर्भावितण्यर्थात् डः ) [8]इन्द्रयवम् ( यवाकारबीजत्वात् यवम् इन्द्रसंज्ञस्य वृक्षस्य यवम् ) भद्रयवम् ( भद्रं च तद्यवं च ) ये तीनों नाम 'इन्द्रयव' के हैं जिनमें प्रथम त्रि०, द्वितीय तृतीय पुं० न० नाम हैं ।

कृष्णपाकफलम् ( कृष्णः पाकोऽस्य । कृष्णपाकं फलमस्य ) अविग्नः 'आविग्नः' ( आ विजतेरच

---

१. चाम्पेयश्चम्पके स्वर्णे किंजल्के नागकेसरे । इति मेदिनी ।
२. स्वर्णमसर्पाख्यो नागकेसरः षट्पदप्रियः । इति रभसः ।
३. जया जयन्ती तिथिभित्पथ्योमातत्सखीषु च । अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे, इति मेदिनी ।
४. जयन्ती वृक्षभिद्गौर्योरिन्द्रपुत्रीपताकयोः । पुमानैन्द्रौ हरे भीमे । इति मेदिनी ।
५. श्रीपर्णमग्निमन्थेऽब्जे श्रीपर्णी शाल्मलौ हठे । इति हैमः ।
६. कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि ।
७. शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः ॥
८. कलिङ्गेन्द्रयवः पुमान्, इत्यमरमालादर्शनादिन्द्रयवः पुमानपि । तत्रैव स्त्रीकाण्डपाठाद् कालिङ्गा च ॥

**कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुके ॥६८॥**
**सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ।**
**वेणी खरा गरी देवताडो जीमूत इत्यपि ॥६९॥**
**श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका ।**

---

ओविजीभयचलनयोः, क्तः, नत्वम् इण्निषेधस्च नञ् पूर्वकोऽपि ) [1]सुषेणः ( शोभना सेना यस्य, षत्वम्, णत्वम् ) करमर्दकः ( करं मृद्नाति अण् कन् च ) ये चार पुंलिंग नाम करोदा 'करवन' के हैं ॥ ६७ 1/2 ॥

[2]कालस्कन्धः ( कालः स्कन्धोऽस्य ) [3]तमालः ( ताम्यति इति कालन् ) तापिच्छः ( तापिनं छादयति, अण् पृषोदरादिः ) ये ३ पुं० नाम सुर्ती के हैं ।

[4]सिन्दुकः ( स्यन्दते स्यन्दू प्रस्रवणे. उः बाहुलकात् घो न ततः कन्+सिन्धुकः ) सिन्दुवारः ( सिन्दुं वृणोति, वारयति वा । कर्मण्यण् ) [5]इन्द्रसुरसः ( इन्द्रस्य सुरसः ) [6]निर्गुण्डी ( निर्गुडति । गुडरक्षायाम् कः, पृषोदरा० ) [7]इन्द्राणिका ( इन्द्रस्य जन्या, ङीषानुकौ, कन् ह्रस्वत्वम् ) ये पाँच नाम सिन्धुआर के हैं जिनमें प्रथम तीन पुं० तथा शेष दो स्त्री० नाम हैं ॥ ६८ १।२ ॥

[8]वेणी ( वेणीव ) [9]खरा ( तीक्ष्णत्वात् ) [10]गरी ( गृ शब्दे पचाद्यच् ) [11]देवताडः (देवमिन्द्रियं ताडयति, अण् ) जीमूतः ( जीमूत इव ) ये ५ नाम 'देवताल अर्थात्='वन्दाली', एक तरह के गुजराती वृक्ष के हैं जिनमें प्रथम ३ स्त्री० शेष दो पुं० हैं ।

[12]श्रीहस्तिनी ( श्रीहस्तो विद्यतेऽस्याः, इतिः ) भूरुण्डी ( भुवं रुण्डयति आच्छादयति, अण् ) ये दो स्त्री० नाम एक तरह के शाक विशेष के हैं ।

---

१. सुषेणः करमर्दे स्याद्विष्णुसुग्रीववैद्ययोः । इति मेदिनी ।
२. कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे । इति मेदिनी ॥
३. तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे । इति मेदिनी ।
४. सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्धुवारितः । नीलपुष्पः सीतसहो निर्गुण्डी नीलसिन्धुकः ॥ इति ।
५. इन्द्रसुरिसः । इति स्वामी ।
६. निर्गुण्डी नीलशेफाल्यां सिन्दुवारद्रुमेऽपि च । इति मेदिनी । निर्गुण्ठी इति वा ॥
७. इन्द्राणी करणे स्त्रीणां पौलोमीसिन्दुवारयोः, इति मेदिनी ।
८. देवताडेऽपि वेणी स्यात्प्रवेण्यामपि योषिति । इति रभसः ।
९. देवताडे खरा तीक्ष्णे त्रिषु स्याद्गर्दभे पुमान् । इति रभसः ॥ गरेत्यपि पाठः ।
१०. गरी खरायां करणे क्लीबं नागान्त्रिषं विषे । खरं विषमा गिरेति । मूषकविषघ्नत्वात् । 'खरागरी' इत्येकं वा नाम । गरमागिरति 'गरागरी' इति तु स्वामी ॥ तदुक्तम्—जीमूतको देवताडो वृन्तकोशो गरागरी इति ।
११. देवताडः सैंहिकेये जीमूते च हुताशने । इति मेदिनी ।
१२. हस्तिकर्णपत्रा शाक विशेष, इति स्वामी ।

**भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ॥७०॥**
**शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ।**
**सिताऽसौ श्वेतसुरसा भूतवेश्यथ मागधी ॥७१॥**
**गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका ।**

---

[1]तृणशून्यं ( तृणशून्ये स्थाने साधु, यत् यलोपश्च । तृणशूले गुल्मे साधु तृणशूल्यम् वा पाठः ) [2]मल्लिका ( मल्लते गन्धम्, इन्, कन् ) भूपदी ( भुवि पदमस्याः ) [3]शीतभीरुः ( शीताद्भीरुः, शत-भीरुः इति वा पाठः शतं वियोगिनो भीरवोऽस्याः ) ये ४ नाम छोटी वेला के हैं। जिनमें प्रथम न० शेष स्त्री० है ।

सैव = मल्लिकैव [4]आस्फोटा ( आस्फोटयति स्फुटिर् विकसने, अच्, टस्य तः आस्फोता इति वैकल्पिके ) यह एक स्त्री० नाम जंगली वेला का है

शेफालिका ( शेरते शेफाः = अलयोऽस्याम् । वा ङीष्, कन्, ) [5]सुवहा ( सुष्ठु वहत्यामोदम्, वह प्रापणे, अच् ) निर्गुण्डी ( निर्गुडति । गुड रक्षायाम् कः पृषो० ) [6]नीलिका ( नीलवर्णा, ङीष्, कन् ) ये ४ स्त्री० नाम काली नेवारी के हैं ॥ ७० १।२ ॥

असौ = निर्गुण्डी सिता = श्वेता चेत्—श्वेतसुरसा = ( शोभनो रसोऽस्याः । श्वेता चासौ सुरसा च ) भूतवेशी ( भूतानि विशति । विश प्रवेशने, अण् ) ये दो स्त्री० नाम सफेद फूलवाली नेवारी के हैं ॥

[7]मागधी ( मगधे देशे भवा अण् ) [8]गणिका ( चित्ताकर्षकत्वाद्गणिकेव ) यूथिका ( यूथमस्त्यस्याः ठन् ) अम्बष्ठा ( अम्बेव = मातेव तिष्ठति इति कः ) ये ४ स्त्री० नाम जही के हैं ॥

सा = मागधी पीता चेत्—[9]हेमपुष्पिका ( हेमवर्णं पुष्पमस्याः, ङीष् ) यह एक स्त्री० नाम पीले फूलवाली जूही का है ॥ ७१ १।२ ॥

---

१. तृणशून्यं मल्लिकायां तथा स्यात्केतकीफले । इति विश्व-मेदिन्यौ ॥
२. मल्लिको हंसभिद्यपि । मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः । इति मेदिनी ॥
३. मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका । शीतभीरुर्मदयन्ती भूपदी तृणशून्यकम् ॥ इति वाचस्पतिः ।
४. आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति । इति मेदिनी ।
५. सुवहा सल्लक्येलापर्णी गोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री, सुखवाह्येऽन्यलिङ्गः स्यात् ॥ इति मेदिनी ।
६. नीलिका नीलिनीक्षुद्ररोगशेफालिकासु च ।
७. मागधो मगधोद्भूते शुक्लजीरकवन्दिनोः । वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली ॥ इति हैमः ।
८. गणिका यूथीवेश्येभीतर्कारीषु ना तु दैवज्ञे । इति मेदिनी ।
९. स्याद्धेमपुष्पिका यूथ्यां चम्पको हेमपुष्पकः । इति मेदिनी ।

अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ॥७२॥
सुमना मालती जातिः सप्तला नवमालिका ।
माध्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः ॥७३॥

---

[1]अतिमुक्तः ( अतिक्रान्तो मुक्तां शौक्ल्यात् कृते तत्पुरुषे ह्रस्वः यद्वा मुक्तान् विरक्तान् ) पुण्ड्रकः ( पुण्डति इति रक् कन् च ) [2]वासन्ती ( वसन्ते पुष्यति, अण् ) [3]माधवी ( मधौ पुष्यति, अण् ) लता, ये पांच नाम वसन्त ऋतु में फूलने वाले कुन्द विशेष या माधवी के हैं जिनमें प्रथम दो नाम पुं० तथा शेष स्त्री० हैं ।

[4]सुमना ( सुष्ठु मन्यते, असुन्, वा शोभनं मनोऽस्याम् ) [5]मालती ( मां लक्ष्मीं लतति इति कः गौरादिः ) [6]जातिः ( जायते, जनी प्रादुर्भावे क्तिन् आत्वम् ) ये तीन स्त्री० नाम चमेली के हैं ।

[7]सप्तला = ( सप्तपर्णानि मनोबुद्धीन्द्रियाणि वा लाति कः ) नवमालिका ( नवा स्तुत्या मालाऽस्याः, कप्, ) ये दो स्त्री नाम वसन्ती नेवारी के हैं ॥ ७२ ।।२ ॥

माध्यम् ( माघे भवम्, साधु वा यत् ) [8]कुन्दम् ( कुं भुवं द्यति कः ) ये दो नाम कुन्द के हैं । जिनमें प्रथम पुं० तथा दूसरा पुं० न० नाम है ।

[9]रक्तकः ( रक्तपुष्पत्वाद्रक्तः कन् ) [10]बन्धूकः ( बध्नाति वित्तम्, बन्ध बन्धने, ऊकः ) बन्धुजीवकः ( बन्धुरिव जीवं जलमस्य ) ये तीन पुं० नाम दुपहरिया नामक पुष्पवृक्ष के हैं ॥ ७३ ॥

---

१. अतिमुक्तस्तु निःसंगे वासन्त्यां तिनिशेऽपि च । इति मेदिनी ।

२. वासन्ती माधवीयूथ्योरुष्ट्रे नावहिते त्रिषु । इति मेदिनी ।

३. माधवोऽजे मधौ राधे वसन्ते न स्त्रियां मिसौ । वासन्ती कुट्टनीमधमधुशर्करासु स्त्रियाम् ॥ इति मेदिनी ।

४. स्त्रियां सुमनसो भूम्नि पुष्पे जातौ तु भेदतः । विदुष्यपि यदा दृष्टस्तदा भेदेन शिष्यते ॥ इति व्याडिः ।

५. मालती युवतौ काकमाच्यां जातिविशल्ययोः । ज्योत्स्नायां निशि नद्यां च, इति हैमः ।

६. जातिः स्त्री गोत्रजन्मनोः । अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि । जातीफले च मालत्याम् ॥ इति मेदिनी ।

७. अथ सप्तला । नवमालाचर्मकषागुञ्जासु पाटलौ स्त्रियाम् । इति मेदिनी ।

८. कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना । इति मेदिनी ।

९. रक्तकोऽम्लानबन्धूकरक्तवस्त्रानुरागिषु । इति मेदिनी ।

१०. बन्धूकं बन्धुजीवे स्याद्बन्धूकः पीतसारके । इति मेदिनी ।

महा कुमारी तरणिरम्लानस्तु महासहा।
तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः ॥७४॥
नीली झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा।
सैरीयकस्तु झिण्टी स्यात्तस्मिन् कुरबकोऽरुणे ॥७५॥
पीता कुरण्टको झिण्टी तस्मिन् सहचरी द्वयोः।

---

[1]सहा ( आतपं सहते इति अच् ) [2]कुमारी ( कुमारीव इति ) [3]तरणिः ( तरत्यनया इति अनिः ) ये तीन स्त्रीलिङ्ग नाम घीकुआर के हैं।

[4]अम्लानः ( न म्लायति स्म इति क्तः ) [5]महासहा ( महती चासौ सहा च इति तत्पुरुषे आत्वम् ) ये दो नाम कटसरैया के हैं। जिनमें प्रथम पुंलिङ्ग तथा द्वितीय स्त्रीलिङ्ग है॥ ७३. ११२॥

शोणे = रक्ते तत्र = अम्लाने—[6]कुरबकः ( कुत्सित ईषद्वालीनां अल्पमकरन्दत्वात् रवोऽत्र इति कप् ) यह एक पुं० नाम लाल फूलवाली कटसरैया का है।

तत्र पीते इति सम्बन्धः—[7]कुरण्टकः ( रुण्टति इति क्वुन्, कुत्सितः कोर्वा रुण्टकः इति समासः ) यह १ पुंलिङ्ग नाम पीले फूलवाली कटसरैया का है॥ ७४॥

[8]वाणा ( वण्यते इति कर्मणि घञ् ) [9]दासी ( दस्यते इति कर्मणि घञ् ) आर्तगलः ( आर्तः क्षीणो गलति इति अच् ) ये तीन नाम काली कटसरैया के हैं, जिनमें १ पुंलिङ्ग स्त्री० और द्वितीय स्त्रीलिङ्ग है तथा ३ रा पुं० है।

[10]सैरीयकः ( सीरे भवः इति अण् पुनः भत्रार्थे छः, कन् च ) झिण्टी ( 'झिम्' इति रटति अच् ) पृषोदरादिः गौरादिङीष् च ) ये दो नाम कटसरैया के हैं जिनमें प्रथम पुंलिङ्ग, और द्वितीय स्त्री० है।

तस्मिन् सैरेयके अरुणे = रक्ते—कुरबकः, यह एक पुं० नाम लाल कटसरैया का है। पीले कटसरैया की सहचरी ( सह चरतीति ङीप् ) कहते हैं जो स्त्री० पुं० में प्रयुक्त होता है।

---

१. सहो बले न स्त्रियां स्यात्स्त्रियां तु नखभेषजे।
　दण्डोत्पलामुद्गपर्णी कुमारी पृथिवीषु च॥ इति मेदिनी।
२. कुमारी रामतरुण्यां नवमाल्ये नदीभिदि।
　कन्याऽपराजिता गौरीजम्बूद्वीपेषु च स्मृता॥ इति विश्वः।
३. तरणिर्घु मणौ पुंसि कुमारीनौकयोः स्त्रियाम्। इति मेदिनी।
४. अम्लानस्त्वमले झिण्टीभेदे। इति हैमः।
५. महासहा माषपर्ण्यामम्लानेऽपि च योषिति॥ इति मेदिनी।
६. कुरबकः शोणाम्लानझिंटीप्रभेदयोः। इति मेदिनी।
७. कुरुण्टकः पीतपुष्पाम्लानझिंटिकयोः पुमान्। इति मेदिनी।
८. वाणा तु वाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः। इति मेदिनी।
९. दासी वाणाभुजिष्ययोः। इति मेदिनी।
१०. सैरीयकः सहचरः सैरेयश्च सहाचरः। पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत्। पीतः कुरुण्टको ज्ञेयः रक्तः कुरबकः स्मृतः। नील आर्तगलो दासी वाणा ओदनपाक्यपि॥

ओड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत् ॥७६॥
प्रतिहासशतप्रासचण्डातहयमारकाः ।
करवीरे करीरे तु क्रकरग्रन्थिलावुभौ ॥७७॥
उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ।
मातुलो मदनश्चास्य फले मातुलपुत्रकः ॥७८॥

[1]ओड्रपुष्पम् ( आ ईषदुनत्ति इति रक् बाहुलकाद्दस्य ढत्वम् ओड्रं पुष्पमस्य ) [2]जपा ( जपति इति अच् ) ये दो नपुंसक नाम अड़उल के हैं ।

वज्रपुष्पं ( वज्रमिव पुष्पम् इति, तिलस्य यत् पुष्पं तत् वज्रपुष्पमिति सम्बन्धः ) यह एक नपुंसक नाम तिल के फूल का है ॥ ७६ ॥

प्रतिहासः ( प्रतीपो हासो विकासोऽस्य इति समासः ) शतप्रासः ( शतं प्रासाः कुन्ता इव पत्राण्यस्य, शतं पुष्पाणि-प्रास्यति वा इति कर्मण्यण् ) चण्डातः ( चण्डामतति इति कर्मण्यण् ) हयमारकः ( हयानां मारकः इति ) [3]करवीरः ( करं वीरयति इति कर्मण्यण् ) ये ५ पुंलिङ्ग नाम कनइल पुष्प वृक्ष के हैं ॥

[4]करीरः ( किरति इति ईरन् ) [5]क्रकरः ( 'क्र' इति करोति इति अच् टः वा ) [6]ग्रन्थिलः ( ग्रन्थिरस्यास्ति इति भलच् , ग्रन्थिं लाति वा ) ये ३ पुंलिङ्ग नाम करील वृक्ष के हैं ॥ ७७ ॥

[7]उन्मत्तः ( उन्मत्तयति इति णिच् पचाद्यच् ) [8]कितवः ( कितवाः सन्त्यस्य ग्राहकाः इति डः ) धूर्तः [9]( धूर्यते स्म इति कर्मणि क्तः ) [10]धत्तूरः ( धयति धातून् धेट् पाने इति धातोः बाहुलकादूरच् ) [11]कनकाह्वयः ( कनकमाह्वयो यस्य इति समासः ]मातुलः[12] ( मास्ति नास्ति तुला यस्य इति][13]मदनः

१. ओड्राःपुं भूम्नि नीवृति । ओड्रः स्यातो जपापुष्पे । ओड्रपुष्पेऽपि वृक्षेऽपि जवाशब्दः प्रकीर्तितः । इति त्रिकाण्डशेषः ।
२. जवायां तु जपा स्मृता । इति धर्मदासः ॥
३. करवीरः कृपाणे स्याद्दैत्यभेदाश्वमारयोः । करवीर्यदितीश्रेष्ठगवीपुत्रवतीषु च ॥ इति मेदिनी ।
४. वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् ।
   करीरो चीरिकायां च दन्तमूले च दन्तिनाम् ॥ इति मेदिनी ।
५. क्रकरः करीरवृक्षे दीने क्रकचे च पक्षिभेदे च । इति मेदिनी ।
६. ग्रन्थिलस्तु करीरद्रौ विकङ्कततरौ पुमान् । सग्रन्थौ त्रिषु । इति मेदिनी ।
७. उन्मत्त उन्मादवति धूस्तूरमुचुकुन्दयोः । इति मेदिनी ।
८. कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये । इति विश्वः ।
९. धूर्तं तु खण्डलवने धूस्तूरे ना विटे त्रिषु । इति मेदिनी ।
१०. धत्तूरस्तु स्मृतो धूर्तो देविता कितवः शठः । इति स्वामी ।
११. कनकं हेम्नि पुंसि स्यात्किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीयो चम्पकेऽपि च । इति मेदिनी ।
१२. मातुलो व्रीहिभिन्मातृभ्रात्रोश्च मदनद्रुमे । धत्तूरे । इति मेदिनी ।
१३. मदनः स्मरवसन्तद्रुमिद्धत्तूरसिह्लके । इति मेदिनी ।

फलपूरो बीजपूरो रुचको मातुलुङ्गके ।
समीरणो मरुवकः प्रस्थपुष्पः फणिज्झकः ॥७९॥
जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ ।
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः ॥८०॥
अर्काह्ववसुकास्फोटगणरूपविकीरणः ।

---

( मदयति इति ल्युः ) ये ७ पुंलिङ्ग नाम धतूरे के हैं ।

अस्य फले इति सम्बन्धः—[1]मातुलपुत्रकः ( मातुलस्य पुत्र इव इति कन् ) यह १ पुंलिङ्ग नाम धतूरे के फल का है ॥ ७८ ॥

[2]फलपूरः ( फलेन पूर्यते इति कः कर्मणि घञ् वा ) [3]बीजपूरः ( फलं बीजं च पूरयति इति कः ) [4]रुचकः ( रोचते इति क्वुन् ) [5]मातुलुङ्गकः ( मातुश्चासौ लुङ्गश्च इति स्वार्थे कन् ) ये ४ पुंलिङ्ग नाम बिजौरा नीबू के हैं ॥ ७८.१।२ ॥

[6]समीरणः ( समीरयति इति ल्युः ) [7]मरुवकः ( मरौ वाति इति क्वुन् ) प्रस्थपुष्पः ( प्रस्थे सानौ पुष्यति इति अच् ) फणिज्झकः ( फणी जातोऽस्मात् इति पृषो० ) [8]जम्बीरः ( जम्यते इति विच्, वीरयति इत्यच्, जम् चासौ वीरश्च इति समासः ) ये ५ पुंलिङ्ग नाम मरुवा के हैं ।

पर्णासः ( पर्णान्यस्यति इति कर्मण्यण् ) कठिञ्जरः ( कठिनं जरयति इति अण् पृषोदरादिः) कुठेरकः ( कुण्ठति इति एरक् ) ये तीन पुंलिङ्ग नाम पर्णास के हैं ॥ ७९. १।२ ॥

अत्र = पर्णासे सिते = शुक्ले इति सम्बन्धः । अर्जकः ( अर्जयति इति ण्वुल् ) यह १ पुंलिङ्ग नाम सफेद पर्णास का है ।

पाठी ( पाठोऽस्यास्ति इतीनिः ) [9]चित्रकः ( चित्तं बुद्धिं त्रायते इति कः ) वह्निसंज्ञकः ( वह्निः संज्ञा यस्य इति समासः ) ये ३ पुंलिङ्ग नाम चीता के हैं ।

[10]अर्काह्वः (अर्क आह्वा यस्य इति) [11]वसुकः (वसति इत्युः स्वार्थे कन्) [12]आस्फोटः (आस्फोट-

---

१. मातुलपुत्रक इत्यपि मामकतनये फले च धूर्तस्य । इति मेदिनी ।
२. ३. ४. ५. फलपूरो बीजपूरः केसरी बीजपूरकः । बीजकः केसराम्लश्च मातुलुङ्गश्च पूरकः ॥ सौवर्चलं मातुलुङ्गं शिलाचन्दनपेषणी । ग्रीवाभरणकं चैपु चतुर्पु रुचकस्मृतम् ॥ इति
६. समीरणस्तु पवने पथिके च फणिज्झके । इति मेदिनी ।
७. भवेन्मरुवकः पुष्पभिच्छल्यद्रुफणिज्झके ।
८. जंबीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे । इति मेदिनी ।
९. चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाठिपु । इति मेदिनी ।
१०. अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ । इति मेदिनी ।
११. वसुकं रोमके पुंसि शिवमल्ल्यर्कपर्णयोः । इति मेदिनी ।
१२. आस्फोतस्तु पुमानर्कपर्णे स्यात् कोविदारके । आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषित । इति मेदिनी ।

मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ॥८१॥
शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ।
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ॥८२॥
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ।
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ॥८३॥

---

यति इति अच् ) गणरूपः ( नानात्वाद् गणा बहूनि रूपाण्यस्य इति ) विकीरणः ( विकरति इति क्युन् इत्वं रपरत्वं बाहुलकाद्दीर्घः ) [1] मन्दारः ( मन्दैरर्यते, मन्दान् इयर्ति अण् घञ् वा ) अर्कपर्णः ( अर्का-भानि तीक्ष्णानि पत्राण्यस्य इति ) ये सात पुंलिङ्ग नाम आक ( मदार ) के हैं ।

अत्र शुक्ले—[2] अलर्कः ( अलति इति क्विप् अल्चासावर्कश्च इति समासः ) प्रतापसः ( प्रतापं चक्षुरतेज स्यति इति कः ) ये दो पुंलिङ्ग नाम सफेद फूलवाले आक के हैं ॥ ८१ ॥

शिवमल्ली ( शिवप्रिया मल्ली इति) [3] पाशुपतः ( पशुपतेरयम् तत्प्रियत्वात् इति अण् ) [4]एकाष्ठीलः (एकमस्थि लाति षत्वं दीर्घत्वं च) [5]बुकः (वाति बाहुलकात् क्वुन्, क्वुनोऽकारस्योत्वं) [6]वसु ( वस्ते वसति वा इत्युः ) ५ पुंलिङ्ग नाम गुम्मा के हैं ॥ ८१. ११२ ॥

[7]वन्दा ( वन्द्यते इत्यः ) [8]वृक्षादनी ( वृक्षमत्ति इति ल्युट् ) वृक्षरुहा ( वृक्षं रोहति इति कः ) [9]जीवन्तिका ( जीवति इति झच् पिच्च, पित्वात् ङीष् कन् ) ये ४ स्त्रीलिङ्ग नाम बन्दा के हैं ॥८२॥

वत्सादनी ( वत्सैरद्यते इति ल्युट् ) छिन्नरुहा ( छिन्ना रोहति इति कः ह्रस्वश्च ) गुडूची ( गुडति बाहुलकादूचट् ) तन्त्रिका(तन्त्रयति इति ण्वुल् ) [10]अमृता (न मृतमस्याः इति) [11]जीवन्तिका (जीवति इति झच् ) सोमवल्ली ( सोमस्य वल्ली इति ) [12]विशल्या ( विगतं शल्यमस्याः इति ) मधुपर्णी (मधु-मयानि पर्णान्यस्याः इति ङीप् ) ये ९ स्त्रीलिङ्ग नाम गुर्च के है ॥ ८३ ॥

---

१. मन्दारः स्यात्सुरद्रुमे । पारिभद्रेऽर्कपर्णे च मन्दारो हरितधूर्तयोः । इति मेदिनी ।
२. अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे । इति मेदिनी ।
३. पाशुपतो बकपुष्पेस्यात्पशुपत्यधिदैवते च तद्भक्ते । इति मेदिनी ।
४. एकाष्ठीला वनतिक्तकौषधौ पुंसि बकपुष्पे । इति मेदिनी ।
५. बकस्तु बकपुष्पे स्यात्कह्वे श्रीदे च रक्षसि । इति मेदिनी ।
६. वसुर्ना देवभेदाग्निभायोक्त्रबकराजसु । इति मेदिनी ।
७. बन्दा लतान्तरे स्मृता, भिक्षुक्यामपि बन्धां च । इति स्पर्शादौ मेदिनी ।
८. वृक्षादनी तु बन्दायां विदारीकन्दकेऽपि च । इति विश्व-मेदिन्यौ ।
९. जीवन्तिका गुडूच्यां च जीवाख्यशाकबन्दयोः । इति मेदिनी ।
१०. अमृता मागधीपथ्यागुडूच्यामलकीषु च । इति मेदिनी ।
११. जीवन्तिका गुडूच्यां च जीवाख्यशाकबन्दयोः । इति मेदिनी ।
१२. विशल्याऽग्निशिखादन्ती गुडूचीत्रिपुटासु च । इति मेदिनी ।

मूर्वा देवी मधुरसा मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥८४॥
पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ।
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ॥८५॥
कटुः कटंवराऽशोकरोहिणी कटुरोहिणी ।

---

मूर्वा ( मूर्वति इति अच् ) [१] देवी ( दीव्यतीति पचादौ देवट्' इति निपातनात ङीप् ) [२]मधुरसा ( मधु रसोऽस्याः इति ) [३]मोरटा ( मुरति इति अटन् ) तेजनी ( तेजति, तेज पालने इति ल्युट् ) [४]स्रुवा ( स्रवति, स्रु गतौ इति अच् ) मधूलिका ( मधु लाति इति कः दीर्घः ) मधुश्रेणी ( मधुनः श्रेणिरत्र इति ) [५]गोकर्णी ( गोः कर्ण इव, गौः कर्णो यस्याः इति वा, ङीष् ) [६]पीलुपर्णी ( पीलोरिव पर्णान्यस्याः इति ङीष् ) ये १० स्त्रीलिङ्ग नाम मूर्वा के हैं ॥ ८४ ॥

[७]पाठा ( पठ्यते इति कर्मणि घञ् ) [८]अम्बष्ठा ( अम्बे तिष्ठति कः ) विद्धकर्णी ( विद्धौ कर्णौ यया इति ) [९]स्थापनी ( स्थापयति इति ल्युट् ) [१०]श्रेयसी ( अतिशयेन प्रशस्ता इति श्रः,ईयसुन् ) [११]रसा ( रस्यते इति कर्मणि घञ् ) एकाष्ठीला ( एकमस्थि लाति षत्वं दीर्घत्वं च ) पापचेली ( पापे चलति इति 'चेलट्' निपातनात् ङीप् ) प्राचीना ( प्राची भवा इति खः ) वनतिक्तिका ( वने तिक्ता इति स्वार्थे कन् ) ये १० स्त्रीलिङ्ग नाम पाठा या पाढ़र के हैं ॥ ८५ ॥

[१२]कटु (कटति इति उः) [१३]कटंवरा ( कटति इति अच् कटं ( रोगम् )वृणोति इति खच् मुम् च ।

---

१. देवीकृताभिषेकायां तेजनीस्पृक्कयोरपि । इति मेदिनी ।
२. भवेन्मधुरसा द्राक्षामूर्विकादुग्धिकासु च । इति मेदिनी ।
३. मोरटं तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः । सप्तरात्रात्परक्षीरे, मूर्विकायां तु मोरटा । इति मेदिनी ।
४. स्रुवा द्वयोर्होमपात्रे सल्लकी मूर्वयोः स्त्रियाम् । इति मेदिनी ॥
५. गोकर्णोऽश्वतरेऽपि स्यान्मृगसर्पगणान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ ॥ विश्वः ।
६. पीलुपर्णी चिर्चिकायां मूर्वायामौषधीभिदि । इति मेदिनी ।
७. पाठस्तु पठने ख्यातो विद्धकर्ण्यां तु योषिति । इति मेदिनी ।
८. अम्बष्ठाऽप्यम्ललोण्यां स्यात् पाठायूथिकयोरपि । इति मेदिनी ।
९. स्थापनं रोपणे, पुंसि वने, पाठौषधौ स्त्रियाम् । इति मेदिनी ।
१०. श्रेयसी करिपिप्पल्यामभयापाठयोरपि । इति मेदिनी ।
११. रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान् । स्त्रियां तु रसनापाठासल्लकी कङ्गुभूमिषु । इति मेदिनी ।
१२. कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । इति मेदिनी ।
१३. कटंभरा प्रसारण्यां रोहिण्यां गजयोषिति । कलम्बिकायां गोलायां वर्षाभूमूर्वयोरपि । इति मेदिनी ।

**मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ॥८६॥**
**आत्मगुप्ताजहाऽव्यण्डा कण्डूरा प्रावृषायणी ।**
**ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छूश्च मर्कटी ॥८७॥**
**चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ।**

---

कटम्भरा इत्यपि पाठः ) [1]अशोकरोहिणी ( अशोक इव रोहति इति णिनिः ) [2]कटुरोहिणी ( कटुश्चासौ रोहिणी च इति समासः ) मत्स्यपित्ता ( मत्स्यानां पित्तमिव इति समासः ) [3]कृष्णभेदी ( कृष्णं मलं भिनत्ति इति अण् ङीप् च ) [4]चक्राङ्गी ( चक्राकारमङ्गमस्याः गौरादिः ) [5]शकुलादनी ( शकुलैर्मत्स्यभेदैरद्यते इति ल्युट् ) ये ८ स्त्रीलिङ्ग नाम कुटकी के हैं ॥ ८६ ॥

आत्मगुप्ता ( आत्मना गुप्ता दुःस्पर्शत्वात् तृतीया समासः ) जहा ( जडयति इति णिजन्तादच् ) [6]अजहा न जहाति इति वा पाठः ) [7]अव्यण्डा ( न विगतमण्डमस्याः ) [8] कण्डूरा ( कण्डूं राति इति कः, पृषोदरादित्वात् ह्रस्व त्वमपि ) [9]प्रावृषायणी ( प्रावृषामेति अयते, वा इति ल्युट्, णत्वम् ) [10]ऋष्यप्रोक्ता ( ऋष्यैर्मृगैः प्रोक्ता, ऋषिभिरप्रोक्ता, इति वा ) शूकशिम्बिः ( शूकयुक्ता शिम्बिः इति ) कपिकच्छुः ( कपीनां कच्छुः इति ) [11]मर्कटी ( मर्कटीव विविधचेष्टा हेतुत्वात् ) ये ९ स्त्रीलिङ्ग नाम केवांच के हैं ॥ ८७ ॥

[12]चित्रा ( चित्रं रूपमस्याः इति ) उपचित्रा ( उपगता चित्रम् ) [13]न्यग्रोधी ( न्यग् रुणद्धि इति अच्, ङीष् ) द्रवन्ती ( द्रवति इति शतृ ङीष् ) [14]शंबरी ( शंवृणोति इति, अच् गौरादिः ) [15]वृषा ( वर्षति

---

१. अशोकस्त्रिषु निःशोके पुंसि कङ्केलिपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम् । इति मेदिनी ।
२. कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी । इति निघण्टुः ।
३. कृष्णभेदाचण्डरुहा । इति निघण्टुः ।
४. चक्राङ्गो मानसौकसि । चक्राङ्गी कटुरोहिण्याम् । इति मेदिनी ।
५. शकुलादनी स्त्रियां कृष्णभेदे कटुकशाकयोः । इति मेदिनी ।
६. श्येया जाङ्गलिका सैव साऽजहा प्रावृषायणी । इतीन्दुः-इति स्वामी ।
७. अव्यण्डा वृषभी गुप्ता । इतीन्दुः ।
८. कपिकच्छूस्च कण्डूरा कण्डुराशूकशिम्बिका । इतीन्दुः ।
९. प्रावृषा तु जलार्णवे । इति त्रिकाण्डशेषः ॥
१०. ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिम्बिषु । इति मेदिनी ।
११. अथ मर्कटी । करञ्जमिच्छूकशिम्ब्योः पुंसि वानरलूतयोः । इति मेदिनी ।
१२. चित्राखुपर्णीगोडुम्बा सुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् । इति मेदिनी ।
१३. न्यग्रोधस्तु पुमान्व्योमवटयोश्च शमीतरौ । न्यग्रोधी तूपचित्रायाम् । इति मेदिनी ।
१४. शंबरी चाखुपर्ण्यां स्यात् । इति तालव्यादौ मेदिनी ।
१५. वृषा मूषिकापर्ण्यां च, यतीनामासने वृषी ।

**प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ॥८८॥**
**अपामार्गः शैखरिको धामार्गवमयूरकौ ।**
**प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरी ॥८९॥**
**हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ।**
**अङ्गारवल्ली बालेयशाकवर्वरवर्धकाः ॥९०॥**

---

इति कः ) [१]प्रत्यक्श्रेणी ( प्रतीची श्रेणी यस्याः इति ) सुतश्रेणी ( सुतानां श्रेणी यस्याः इति ) [२]रण्डा ( रमन्तेऽत्र समन्ताद्भुः ) मूषिकपर्णी ( मूषिकः पर्णमस्याः इति ङीष् ) ये १० स्त्रीलिङ्ग नाम मूसाकर्णी के हैं ॥ ८८ ॥

अपामार्गः ( अपमार्जन्त्यनेन इति घञ् निष्ठायामनिट्त्वात् कुत्वन् दीर्घश्च ) शैखरिकः ( शिखरे प्रायेण भवति इति ठक् ) [३]धामार्गवः, ( धाम्नोऽर्गः, धामार्ग वाति इति कः अधामार्गव इति वा ) [४]मयूरकः ( मयूरप्रतिकृतिः इति कन् ) प्रत्यक्पर्णी ( प्रत्यञ्चि पर्णान्यस्याः इति ) ङीष् ) [५]कीशपर्णी कपिलोमतुल्यानि लोमशानि पर्णान्यस्याः इति ) किणिही ( किणिनो व्रणान् जिहीते इति कः ङीष् च ) खरमञ्जरी ( खरा मञ्जरिरस्याः इति ङीष् ) ये ८ नाम चिचिढ़ा के हैं जिनमें १–४ पुंलिङ्ग और और ५–८ स्त्रीलिङ्ग हैं ॥ ८९ ॥

[६]हञ्जिका ( हन्ति रोगान् इति पचाद्यच्, पृषोदरादिः ) [७] ब्राह्मणी ( ब्रह्मण इयम् इति अण्, ङीप् ) [८]पद्मा ( पद्माभं पुष्पमस्याः इति ) भार्गी ( भर्जनम् इति अन् रमागमः कुत्वं च, भृजी धातोर्घञि मर्गः, सोऽस्त्यस्याः अण्, ङीप् ) ब्राह्मणयष्टिका ( ब्राह्मणयष्टिरिव इति कन् ) अङ्गारवल्ली ( अङ्गारवद्वल्ल्यस्याः इति ) बालेयशाकः (बालेयस्य शाकः ) वर्वरः ( वर्वर्ति इति यङ्लुगन्ताद् पचाद्यच् ) वर्धकः ( वर्धते इति ण्वुल् ) ये ९ नाम भारङ्गी के हैं जिनमें १-६ स्त्रीलिङ्ग और ७-९ पुंलिङ्ग हैं ॥ ९० ॥

---

१. प्रत्यक् श्रेणी वृषाचण्डा पुत्रश्रेण्याखुपर्णिका । इति निघण्टुः ।
२. रण्डामूषिकपर्ण्यां च विधवायां च योषिति । इति मेदिनी ।
३. धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके । इति मेदिनी ।
४. मयूरकोऽप्यपामार्गे क्लीबं तुत्थाञ्जने पुनः । इति मेदिनी ।
५. केशपर्णी । इति स्वामी ।
६. अङ्गारवल्ली हञ्जी च वर्दो वर्बरकस्तथा । इति निघण्टुः ।
७. ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम् । भूमिदेवे तु पुंलिङ्गः फञ्जिकापृक्कयोः स्त्रियाम् । इति मेदिनी ।
८. पद्मोऽस्त्री पद्मके व्यूहनिधि संख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचारटी पन्नगीषु च । इति मेदिनी ।

मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेशिका ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥९१॥
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ॥९२॥
पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ।
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ॥९३॥

---

[1] मञ्जिष्ठा ( मञ्जौ शोभने वर्णे तिष्ठति इति कः षत्वञ्च पृषोदरादिः ) विकसा ( विकसति इति अच् ) जिङ्गी ( जिङ्गति इति अच् ङीष् ) समङ्गा ( समन्ततोऽङ्गति इति अच् ) कालमेशिका ( काले मिश्यते इति मिश् शब्दे कर्मणि घञ् स्वार्थे कन् ) [2]मण्डूकपर्णी ( मण्डूकवत् पर्णमस्याः इति ङीष् ) [3]भण्डीरी भण्डति इति बाहुलकादीरन् गौरादि ) [4]भण्डी ( भण्डति पचाद्यच् गौरा० ) योजनवल्ली ( योजनगामिनी वल्ली इति ) ये ९ स्त्रीलिङ्ग नाम मंजीठ के हैं ॥ ९१ ॥

यासः ( यसनम् इति भावे घञ्, यासोऽस्त्यस्य अर्शआद्यच् याति बाहुलकादसच् वा ) यवासः ( यौति, यु मिश्रणामिश्रणयोः इत्यासः ) [5]दुःस्पर्शः ( दुःखेन स्पृश्यते इति घञ् खल् वा ) धन्वयासः ( धन्वनो यासः मरुभवत्वात् ) कुनाशकः ( कुं नाशयति इति ण्यन्तः पचाद्यच्, स्वार्थे कन् ) [6]रोदनी ( रोदयति इति ल्युट् ) [7]कच्छुरा ( कच्छूं राति इति कः ) [8]अनन्ता ( नान्तोऽस्याः इति ) [9]समुद्रान्ता ( समुद्रान्तोऽस्त्यस्या इति अर्शआद्यच् ) दुरालभा ( दुःखेनालभ्यते इति खल् ) ये १० नाम जवासा के हैं, जिनमें १–५ पुंलिङ्ग और ६–१० स्त्रीलिङ्ग हैं ॥ ९२ ॥

पृश्निपर्णी ( पृश्निरल्पं पर्णमस्याः इति ङीष् ) पृथक्पर्णी ( पृथगसक्तं पर्णमस्याः इति ङीष् ) चित्रपर्णी ( चित्रं पर्णमस्याः इति ङीष् ) [10]अङ्घ्रिवल्लिका ( अङ्घ्रिमूलमारभ्य वल्लिरस्या इति ) क्रोष्टुविन्ना क्रोष्टुभिर्विन्ना विचारितेव इति ङीष् ) सिंहपुच्छी ( सिंहपुच्छमस्याः इति ङीष् ) [11]कलशिः ( कलं स्यति इति इन् बाहुलकादकारलोपः ) धावनिः ( धावति इति बाहुलकादनिः ) गुहा ( गूहति इति कः ) ये ९ स्त्रीलिङ्ग नाम पिठिवन के हैं ॥ ९३ ॥

---

१. मञ्जिष्ठा कालमेषी च, इति निघण्टुः ।
२. मण्डूकपर्णो मञ्जिष्ठा ब्राह्मण्योर्ना तु शोणके । इति मेदिनी ।
३. हेमपुष्पी च भाण्डीरी । इति रभसः ।
४. भण्डी योजनवल्ल्यादि । रक्ता भण्डीरिका च । इतीन्दुः ।
५. दुःस्पर्शो धन्वयासे ना कण्टकार्यां स्त्रियां त्रिषु । खरस्पर्शे । इति मेदिनी ।
६. रोदनं क्रन्दनेऽस्रेऽपि दुरालम्भौषधी स्त्रियाम् ।
७. कच्छुरा शूकशिम्ब्यां च शटीदुःस्पर्शयोरपि । इति मेदिनी ।
८. अनन्ता च विशल्यायां शारिवादूर्वयोरपि । कणादुरालभापथ्यापार्वत्यामलकीषु च । इति मेदिनी ।
९. समुद्रान्ता तु कार्पासी पृक्कादुरालभासु च । इति मेदिनी ॥
१०. अङ्घ्रिवल्लिका इति मुकुटः । ११. कलं शुक्रे त्रिष्वजीर्णे । इति मेदिनी ।

निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ।
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ॥९४॥
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ॥९५॥
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ।

---

निदिग्धिका ( निदिह्यते स्म, क्तः, टाप् ) स्पृशी ( स्पृशति इति कः ) व्याघ्री ( व्याजिघ्रति इति कः, गौरादिः ) [1]बृहती ( बृहति इति शतृप्रत्ययान्तो निपातः बृहत्-शब्द उगित्वाम्ङीप् ) कण्टकारिका ( कण्टकानियर्ति इति कर्मण्यण् स्वार्थे कन् ) प्रचोदनी ( प्रचोदयति इति ल्युट् ) कुळी ( कोलति इति कः [2]क्षुद्रा ( क्षुणत्ति, क्षुदिर् संपेषणे-धातोरक् ) दुःपर्शा ( दुःस्पृश्यते इति खल् ) [3]राष्ट्रिका ( राष्ट्रमस्त्यस्याः इति ठन् ) ये १० स्त्रीलिङ्ग नाम भटकटैया के हैं ॥ ९४ ॥

[4]नीली ( नीलती ति अच् ओषधौ ङीष् ) काला ( कल्यते, कल क्षेपे इति कर्मणि घञ् वर्णत्वाभावान्न ङीप् ) क्लीतकिका ( क्रीतकं क्रयोऽस्त्यस्याः कपिलकादित्वात् लत्वम् ठन् च ) [5]ग्रामीणा ( ग्रामे भवा इति खञ् ) [6]मधुपर्णिका ( मधुराणि पर्णान्यस्याः इति ङीष् ततः कन् ) [7]रञ्जनी ( रञ्जयति ल्युट् णिलोपस्य स्थानिवद्भावात् नलोपो न ) [8]श्रीफली ( श्रीमत् फलमस्याः इति ङीष् ) [9]तुत्था ( तुद्यते इति थक् ) द्रोणी ( द्रवति इति निः ) [10]दोला ( दोलयति इति अच् ) नीलिनी ( नीलो वर्णोऽस्त्यस्या इतीनिः ) ये ११ स्त्रीलिङ्ग नाम नील के हैं ॥ ९५ ॥

अवल्गुजः ( अवल्गोरशोभनाज्जातः इति डः ) सोमराजी ( सोम इव सौमेन वा राजत इति णिनिः ) सुवल्लिः ( शोभना वल्लिरस्याः इति ) सोमवल्लिका ( सोमस्य वल्लिः इति स्वार्थे कन् ) कालमेषी

---

१. क्षुद्रायां क्षुद्रवार्ताक्यां बृहती छन्दसि क्वचित् । इति शाश्वतः ।
२. क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि ॥ इति मेदिनी ।
३. राष्ट्रं स्यात्तूपवर्तने । उपद्रवे क्लीबपुंसीः । इति मेदिनी ।
४. नीली रुग्भेदनीलिन्योः । इति मेदिनी ।
५. ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत् । इति मेदिनी ।
६. मधुपर्णी तु गंभार्यां नीलसंज्ञौषधावपि । इति मेदिनी ।
७. गुडारोचनिकानीलीमञ्जिष्ठासु च रञ्जनी । रजनी नीलिनीरात्रिहरिद्राजतुकासु च ॥ इति मेदिनी ।
८. श्रीफलः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम् । इति मेदिनी ।
९. तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम् । इति मेदिनी ।
१०. दोला नील्यां यानान्तरेऽपि च । इति मेदिनी ।

कालमेषी कृष्णफला बाकुची पूतिफल्यपि ॥९६॥
कृष्णोपकुल्या वैदेही मागधी चपला कणा ।
उषणा पिप्पली शौण्डी कोलाऽथ करिपिप्पली ॥९७॥
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ।
चव्यं तु चविका काकचिञ्चागुञ्जे तु कृष्णला ॥९८॥

---

( कालं मिषति = स्पर्धते इति अण् ) कृष्णफला ( कृष्णं फलमस्याः इति अजादित्वात् टाप् ) बाकुची ( वातं कोचयति इति कः पृषोदरादिः ) पूतिफली ( पूतिः दुर्गन्धः फलेष्वस्याः इति ङीष् ) ये ८ नाम बाकुची के हैं जिनमें १-२ पुंलिङ्ग और शेष ६ स्त्रीलिङ्ग हैं ॥ ९६ ॥

[१]कृष्णा ( कृष्णो वर्णोऽस्त्यस्याः इति अच् ) उपकुल्या ( उपकोलति इति, यगन्ता अघ्न्यादित्वात् ) [२]वैदेही ( विदेहेषु भवा इति अण् ) [३]मागधी ( मगधेषु भवा इति अण् ) [४]चपला ( चपति इति चप् सान्त्वने-धातोः वृषादित्वात् कलच् ) [५]कणा ( कणति इति अच् ) [६]उषणा ( ओषति, उष दाहे बाहुलकात् क्युन्, दीर्घादिरपि ऊषति ) [७]पिप्पली ( पिपर्ति इति बाहुलकादलच् पृषोदरादिः, गौरादिः ) [८] शौण्डी ( शुण्डायां मद्यपानगृहे भवा इति अण् ) [९]कोला ( कोलति इति पचाद्यच् ) ये १० स्त्रीलिङ्ग नाम पिप्पली ( पीपरि ) के हैं ।

करिपिप्पली ( करीव पिप्पली इति ) कपिवल्ली ( कपिरि ववल्ली इति ) कोलवल्ली ( कोल इव वल्ली इति ) [१०]श्रेयसी ( अतिशयेन प्रशस्ता ईयसुन् श्रेयादेशश्च ) [११]वशिरः ( वस्ते, वस आच्छादने, इति बाहुलकात्किरच् ) ये ५ नाम गजपीपरि के हैं जिनमें ४ स्त्रीलिङ्ग और १ पुंलिङ्ग हैं ।

चव्यम् [१२]( चर्व्यते, चर्व अदने इति ण्यत् पृषोदरादिः ) चविका ( क्वुन् चविकम् स्त्रीत्वात् टाप् )

---

१. कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति । इति मेदिनी ।
२. वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु च । इति मेदिनी ।
३. मागधी स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे । पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकबन्दिनोः ॥ इति मेदिनी ।
४. चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च । इति मेदिनी ।
५. कणा जीरककुम्भीरमक्षिकापिप्पलीषु च । इति मेदिनी ।
६. ऊषणं मरिचे क्लीबं कणायाभूषणा स्त्रियाम् । इति मेदिनी ।
७. पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ । निर्गले पक्षिभेदे कणायां पिप्पली स्मृता । इति मेदिनी ।
८. शौण्डी मत्ते च विख्याते पिप्पल्यां तु भवेत्स्त्रियाम् । इति मेदिनी ।
९. कोलं कोलफले क्लीबं पिप्पलीचव्ययोः स्त्रियाम् । इति मेदिनी ।
१०. श्रेयसी करिपिप्पल्यामभयापाठयोरपि ।
११. वशिरः पुमान् । किणिहीहस्तिपिप्पल्योः, क्लीबेऽब्धिलवणे स्मृतम् । इति मेदिनी ।
१२. चव्यं तु चविके क्लीबं वचायामपि योषिति । इति मेदिनी । चव्या कोला च चविका चव्यं कुञ्जरपिप्पली । इति हेमचन्द्रः ।

पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥९९॥
विश्वा विषा प्रतिविषाऽतिविषोपविषाऽरुणा ।
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे ॥१००॥

---

ये २ नाम चाम ( चव्य ) के हैं । जिनमें १ नपुं० शेष स्त्री० हैं । चन्द्रनन्दन के मत में ये दोनों नाम भी पूर्वान्वयी हैं । अतः 'तु' के स्थान पर 'च' पढ़ना चाहिए ।

काकचिञ्चा ( काकवर्णा चिञ्चा इति ) सभी ने गौरादि मानकर 'ई' कारान्त पढ़ा है । [1]गुञ्जा ( गुञ्जति इति पचाद्यच् ) कृष्णला ( कृष्णवर्णं लाति इति कः ) ये तीन स्त्रीलिंग नाम गुंजा के हैं ॥९८॥

[2]पलङ्कषा ( पलं मासं कषति, कष हिंसार्थः, इति कः पृषोदरादिः ) इक्षुगन्धा ( [3]इक्षुगन्ध इव गन्धोऽस्याः इति ) [4]श्वदंष्ट्रा ( शुनो दंष्ट्रेव इति, दीर्घाभावश्च ) स्वादुकण्टकः ( स्वादुः कण्टकोऽस्य इति ) [5] गोकण्टकः ( गोर्धेनोः पृथिव्या वा कण्टकः इति ) गोक्षुरकः ( क्षुरति क्षुर विलेखने, इति कः स्वार्थे कन् च, गोर्गौर्वा क्षुरकः ) वनशृंगाटः ( वनस्य शृंगाट इव इति ) ये ७ नाम गोखरू के हैं जिनमें १–३ स्त्रीलिंग, शेष ४ पुंलिग हैं ॥ ९९ ॥

[6]विश्वा ( विशति 'विश प्रवेशने' इति क्वन् ) [7]विषा ( वेवेष्टि 'विष्लृव्याप्तौ' इति कः ) प्रतिविषा ( प्रतीपं विषमस्याः इति ) अतिविषा ( विषमतिक्रान्ता इति ) उपविषा ( विषमुपगता इति ) [8]अरुणा ( अरुणो वर्णोऽस्याः इति ) [9]शृंगी ( शृणाति 'शॄ हिंसायाम्' इति गन् कित् नुट् च ) [10]महौषधम् ( महच्च तदौषधं च इति) ये ७ स्त्रीलिङ्ग नाम और महौषधम् १ न० नाम अतीस के हैं ॥

क्षीरावी ( क्षीरमवति इति कर्मण्यण् ) दुग्धिका ( दुग्धमस्त्यस्याः इति ठन् ) ये दो स्त्रीलिङ्ग नाम दुधिया घास के हैं ॥ १०० ॥

---

१. गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ । इति मेदिनी ।

२. पलङ्कषा गोक्षुरके रास्नागुग्गुलुकिंशुके । तु ( मु ) ण्डीरीलाक्षयोश्च स्त्री राक्षसे तु पलंकषः । इति विश्व–मेदिन्यौ ।

३. इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे । इति मेदिनी ।

४. श्वदंष्ट्रो गोक्षुरस्त्रिकण्टकपुरः श्वदंष्ट्रा स्वादुकण्टकः । इति रभसः ।

५. गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे । इति मेदिनी ।

६. विश्वं समस्ते जगति, विश्वेदेवेषु नागरे । विश्वा चातिविषायां स्यात्, इति विश्वः ।

७. विषं जलेऽतिविषायां स्त्रियां, क्ष्वेडे तु न स्त्रियाम् ।

८. अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च । इति मेदिनी ।

९. शृङ्गी विषायामृषभे स्वर्णमीनविशेषयोः । इति विश्वः ।

१०. महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च । इति मेदिनी ।

शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ।
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ॥१०१॥
अहेरुरथ पीतद्रुकालेयकहरिद्रवः ।
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ॥१०२॥
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ।
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ॥१०३॥

---

शतमूली ( शतं मूलान्यस्या इति ङीष् ) बहुसुता ( बहवः सुता यस्याः इति ) अभीरुः ( न भीरुः इति ) [1]इन्दीवरी ( इन्दीवरमस्त्यस्याः इति अर्शआद्यच् ) वरी ( गन्धेनेन्द्रियम् वृणोति इति पचाद्यच् ङीष् ) [2]ऋष्यप्रोक्ता ( ऋष्यैः कृष्णसारैः प्रोक्ता इति ) अभीरुपत्री ( अभीरूणि पत्राण्यस्याः इति ङीष् ) [3]नारायणी ( नारायणाज्जाता इति ) [4]शतावरी ( शतेनावृणोति इति पचाद्यच् गौरादिः ) अहेरुः ( न हिनोति इति बाहुलकाद् उः ) ये १० स्त्रीलिङ्ग नाम शतावर के हैं ॥

पीतद्रुः ( पीतं द्रवति 'द्रु-गतौ' इति डुः ) [5]कालेयकः ( कलेरयम् इति ढक् स्वार्थे कन् च । कालीयकः इति वा पाठः, कालस्य वर्णस्यायम् छः ) [6]हरिद्रुः ( हरिः पिङ्गः पीतो वा द्रुरस्य इति ) [7]दार्वी ( दीर्यते इति घुग् ङीष् ) [8]पचम्पचा ( पचति इति पचाद्यच् पृषोदरादिः ) दारुहरिद्रा ( दारु चासौ हरिद्रा च इति द्वन्द्वसमासः ) पर्जनी ( पिपर्ति 'पृ पालनपूरणयोः' इति विच्, पर्, चासौ जनी च । परं पालकं स्वास्थ्यं जनयति वा 'जनी प्रादुर्भावे' ण्यन्तः कर्मण्यण् ) ये ७ नाम दारुहल्दी के हैं जिनमें १–३ पुंलिङ्ग ४–७ स्त्रीलिङ्ग हैं ॥ १०२ ॥

[9]वचा ( वक्ति वचेरन्तर्भावितण्यर्थात् पचाद्यच् ) [10]उग्रगन्धा ( उग्रो गन्धोऽस्याः इति ) [11]षड्ग्रन्था ( षड् ग्रन्थाः = ग्रन्थयो यस्याः इति ) [12]गोलोमी ( गोर्लोमास्याः, गोशब्दो गोलोमसदृशे लाक्षणिकः, अच् इति योगविभागात् समासान्तः, गौरादित्वान्ङीष् ) [13]शतपर्विका ( शतं पर्वाण्यस्याः इति व्रीह्यादित्वात् ठन्, डाबन्तात्स्वार्थे कन्वा ) ये ५ स्त्रीलिंगनाम घुड़बच के हैं ।
[14]हैमवती ( हिमवति भवा इति अण् ) यह स्त्रीलिंग नाम खुरासानी वच का है ॥

---

१. इन्दीवरं कुवलये शतावर्यां तु योषिति । इति मेदिनी । २. ऋष्यप्रोक्ता शतावर्यातिवलाशूकशिम्बिषु । इति मेदिनी । ३. नारायणोऽच्युतेऽभीरुगौर्योर्नारायणी मता । इति मेदिनी । ४. शतावरी तु शच्यां स्यादिन्दीवर्यामपि स्त्रियाम् । इति मेदिनी । ५. निर्दिष्टा वै कण्टकिनी सच कालेयकः स्मृतः । कालीयको दारुनिशा । इति रुद्रः । ६. हरिद्रुः पीतचन्दमम । इति निघण्टुः ॥ ७. दार्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ । इति मेदिनी । ८. पीतदारु पचम्पचा, इति निघण्टुः ।

९. वचः कीरे वचौषधौ । शारिकायां च । इति मेदिनी । १०. उग्रगन्धाऽजमोदायां वचायां छिक्किकौषधौ । इति मेदिनी । ३. षड्ग्रन्था तु वचायां स्त्री स्यात्करञ्जान्तरे पुमान् । इति मेदिनी । ११. गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः । इति मेदिनी । १२. शतपर्विका तु दूर्वायां वचायामपि योषिति । इति मेदिनी । १३. हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोभयोः । इति मेदिनी ।

वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ।
आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता ॥१०४॥
इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुरा ।
शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ॥१०५॥

---

वैद्यमाता ( वैद्यस्य मातेव इति ) [1] सिंही ( हिनस्ति 'हिसि हिंसायाम्' इति पचाद्यच् पृषोदरादिः, गौरादित्वाद् ङीष् ) [2] वाशिका ( वाश्यते 'वाशृ शब्दे' इत्यः स्वार्थे कन् च ) [3] वृषः ( वर्षति मधु 'वृषु सेचने' इति कः ) [4] अटरूषः ( अटान् गच्छतो रोषति 'रुष हिंसायाम्' कः ) सिंहास्यः ( सिंह आस्यमस्य इति सिंहास्यसदृशपुष्पत्वात् इति ) वासकः ( वासयति इति ण्वुल् ) वाजिदन्तकः ( वाजि दन्तोऽस्य इति वाजिदन्ताभकेसरत्वात् ) ये ८ पुंलिंग नाम अडूसा ( वासक ) के हैं जिनमें १–२ स्त्रीलिंग और ४–८ पुं हैं ॥ १०३ ३।२ ॥

[5] आस्फोटा ( आस्फोटयति 'स्फुटिर विकसने' इति ण्यन्तः, अच् , पृषोदरादिः ) गिरिकर्णी ( गिरिर्वल्लिमूषिका कर्णोऽस्याः, तत्कर्णतुल्यपत्रत्वात् इति ) विष्णुक्रान्ता ( विष्णुना क्रान्ता इति ) [6] अपराजिता ( न पराजिता इति ) ये ४ स्त्रीलिङ्ग नाम अपराजिता के हैं ॥ १०४ ॥

[7] इक्षुगन्धा ( इक्षुः गन्धोऽस्य इति इक्षुशब्दः इक्षुगन्धसदृशे लाक्षणिकः ) काण्डेक्षुः ( काण्डेनेक्षुरिव इति ) कोकिलाक्षः ( कोकिलोऽक्षिः यस्य इति अच् । कोकिलशब्दः कोकिलाक्षिसदृशे लाक्षणिकः ) इक्षुरः ( इक्षुमिक्षुगन्धं राति इति कः ) [8] क्षुरः ( क्षुर इव इति ) ये ५ नाम तालमखाना के हैं जिनमें प्रथम स्त्रीलिङ्ग, २–५ पुंलिङ्ग हैं ॥

[9] शालेयः ( शालीनां भवनं क्षेत्रं शालेयम् तदस्यास्ति अर्शआद्यच् ) [10] शीतशिवः (शीतमस्यास्ति इति अच्, शिवमस्यास्ति इति अच् शीतश्चासौ शिवश्च) [11] छत्रा (छत्रमस्यास्ति इति अच्) [12] मधुरिका ( मधुरो रसोऽस्त्यस्याः इति ठन् ) [13] मिसिः ( मस्यते इति इन् बाहुलकादत इः ) मिश्रेया ( मिश्रयति इति अच् , ईयते, 'इण गतौ' इति यत् , मिश्रा चासावेया च शकन्ध्वादिः ) ये ६ नाम वनसौंफ के हैं जिनमें १–२ पुंलिङ्ग हैं और ३–६ स्त्रीलिङ्ग हैं ॥

---

१. सिंही स्वर्भानुमातरि । वासाबृहत्योः क्षुद्रायाम् । इति हैमः । २. वासो गृहेऽप्यवस्थाने, वासा स्याद्वाटरूषके । इति रुद्रः । ३. वृषः स्याद्वासके धर्मे सौरभेये च शुक्रले । इति मूर्धन्यान्ते विश्वः । ४. वैद्यमाता परूषकः । सिंहास्यो वाजिदन्तकः । इति रभसः । वृषो वासाटरूषकः, इति माधवः ।

५. आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति । इति मेदिनी । ६. अपराजिता ईशाज्येष्ठ्यन्तरे नाऽजिते त्रिषु । गिरिकर्णीजयादुर्गाशालपर्णीषु योषिति ॥ इति मेदिनी । ७. इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे । इति मेदिनी । ८. क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे । इति विश्वः । ९. शालेयः स्यान्मिसौ पुमान् । त्रिषु शाल्युद्भवे क्षेत्रे १०. अथ शीतशिवं क्लीबं शैलेयमणिमन्थयोः । पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ ॥ इति मेदिनी । ११. छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः । नपुंसकं चातपत्रे । इति मेदिनी । १२. मधुरा शतपुष्पायां मिश्रेयानपरीभिदोः । मधुकुक्कुटिकामेदामधुलीयष्टिकासु च ॥ क्लीबं विषे पुंसि रसे तद्वत्स्वादुप्रियेऽन्यवत् । १३. स्यान्मांस्यां शतपुष्पायां मधुरायां मिसिः स्त्रियाम् । इति दन्त्यान्ते रभसः ।

मिश्रेयाऽप्यथ सीहुण्डो वज्रद्रुः स्नुक् स्नुही गुडा ।
समन्तदुग्धाऽथो वेल्लममोघा चित्रतण्डुला ॥१०६॥
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ।
बला वाट्यालका घण्टारवा तु शणपुष्पिका ॥१०७॥
मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ।
सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ॥१०८॥

---

[1]सीहुण्डः ( सी इति हुण्डते 'हुडी वरणे' इति पचाद्यच् ) [2]वज्रद्रुः ( वज्रनामा द्रुः ) स्नुक् ( स्नुह्यति, क्विप्, कुत्वम्, ) स्नुही ( स्नुह्यति, इन्, कित्, ङीष् वा ) [3]गुडा ( गुडति 'गुड वेष्टने' इति कः ) समन्तदुग्धा ( समन्ताद् दुग्धमस्याः इति ) ये ६ नाम सेंहुड़ के हैं जिनमें १-२ पुं० और ३-६ स्त्री० हैं ।

[4]वेल्लम् ( वेल्लति इति अच् ) [5]अमोघा ( न मोघा इति ) चित्रतण्डुला ( चित्रास्तण्डुला अस्याः इति ) [6]तण्डुलः ( तङ्ते इति निपातः ) [7]कृमिघ्नः—( कृमीन् हन्ति इति टक् ) [8]विडङ्गम् ( विडति इत्यङ्गच् ) ये ६ नाम वायविडङ्ग के हैं । जिनमें १ नपुंसक, २–३ स्त्रीलिंग, ४–५ पुंलिङ्ग, ६ठा पुंलिङ्ग नपुंसक हैं ।

[9]बला ( बलति इति पचाद्यच् ) वाट्यालका ( वाटीमलति इति कर्मण्यण् स्वार्थे कन् च वाट्या आलकः, पुंलिंगोऽपि ) ये २ स्त्रीलिङ्ग नाम बरिआरा के हैं ॥

घण्टारवा ( घण्टेवारौति इति अच् ) शणपुष्पिका ( शणः पुष्पं यस्याः इति ङीष् । स्वार्थे कन् च । शणशब्दः तत्पुष्पसदृशे लाक्षणिकः ) ये २ स्त्रीलिङ्ग, नाम सनई के हैं ॥

मृद्वीका (मृद्नाति मृद्यते वा इति निपातः) [10]गोस्तनी ( गौः स्तनोऽस्याः इति ङीष् गोस्तनसदृशे गोशब्दो गौणः ) द्राक्षा (द्राङ्क्ष्यते इति कर्मणि घञ् आगमशास्त्रस्यानित्यत्वान्न नुम् ) [11]मधुरसा ( मधु रसोऽस्याः इति ) ये ५ स्त्रीलिंग नाम दाख के हैं ॥ १०७. १/२ ॥

[12]सर्वानुभूतिः ( सर्वा अनुभूतयोऽस्य.म् ) सरला ( सरति इति बाहुलकादालन्, शरणा इति पाठे युच् ) [13]त्रिपुटा ( त्रयः पुटा यस्याः इति ) त्रिवृता ( त्रिभिरवयवैर्वृता इति ) त्रिवृत् ( त्रीनवयवान्

---

१. सिंहतुण्डस्यापभ्रंशोऽयम्—इति स्वामी । २. वज्रः स्नुक् स्त्री स्नुही गुडा । इति स्वामी । वज्रा स्नुह्यां गुडूच्यां च वज्री स्नुह्यन्तरे स्मृता ॥ इति मेदिनी । ३. गुडौ गोलेक्षुविकृती स्नुहीगुडिकयोर्गुडा । इति रुद्रः । ४. अथ वेल्लं कृमिघ्नतण्डुलौ । इति रभसः । ५. अमोघं सफले वाच्यवत् स्त्री पथ्याविडङ्गयोः । इति मेदिनी । ६. कृमिघ्नं तण्डुलं मोघा । इति वाचस्पतिः । ७. तण्डुलः स्याद्विडङ्गेऽपि धान्यादिनिकरे पुमान् । इति मेदिनी । ८. विडङ्गास्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुंनपुंसकम् । इति मेदिनी । ९. बल्युक्तेन्यलिङ्गः स्याद्बला वाट्यालके स्त्रियाम् । इति मेदिनी । १०. गोस्तनो हारभेदे ना द्राक्षायां गोस्तनी स्त्रियाम् । इति मेदिनी ।

११. भवेन्मधुरसा द्राक्षामूर्वीकादुग्धिकासु च । इति मेदिनी । १२. सर्वानुभूतिः सरला त्रिपुटारेचनी सरा । इति वाचस्पतिः । १३. त्रिपुटा मल्लिकायां च सूक्ष्मैलात्रिवृतोः स्त्रियाम् । इति मेदिनी । त्रिपुटीत्यपि । त्रिपुटी महती स्वाशा इति वाचस्पतिः ।

त्रिभण्डी रोचनी श्यामापालिन्द्यौ तु सुषेणिका ।
काला मसूरविदलाऽर्धचन्द्रा कालमेषिका ॥१०९॥
मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ।
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु यासिता ॥११०॥
अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ।
लाङ्गली शारदी तोयपिप्पली शकुलादनी ॥१११॥

---

वृणोति इति क्विप् तुक् च ) त्रिभण्डी ( त्रीन् दोषान् भण्डते इति अण् ) [1]रोचनी ( रोचते इति ल्युट् ) ये ७ स्त्रीलिंग नाम सफेद निशोथ के हैं ॥ १०८ ॥

श्यामा ( श्यायते इति मक् ) पालिन्दी ( पालयति इति बाहुलकात् किन्दच् ) सुषेणिका ( सुष्ठु सेनया याति इति सेनाशब्दात् णिच् पचाद्यच् षत्वम् स्वार्थे कन् ) काला ( कालयति इति ण्यन्तः पचाद्यच् ) मसूरविदला ( मसूरवद् विदलमस्याः इति ) अर्द्धचन्द्रा ( अर्धश्चन्द्रो यस्याः इति ) कालमेषिका ( कालं मिषति इति कर्मण्यण् ) ये ७ स्त्रीलिंग नाम काला निशोथ के हैं ॥ ९ ॥

[2]मधुकम् ( मध्विव इति कन् ) क्लीतकम् ( क्लीतं कलति इति डः ) [3]यष्टिमधुकम् ( यष्टी मध्विवास्याः इति कप् ) मधुयष्टिका ( मधुयष्टीव इति कन् ) ये ४ नाम मुलहठी के हैं जिनमें १–३ नपुंसक और ४र्थ नाम स्त्रीलिङ्ग हैं ॥ १०९ १/२ ॥

[4]विदारी ( विदारयति इति ण्यन्तः पचाद्यच् गौरादिः ) क्षीरशुक्ला ( क्षीरमिव शुक्ला इति ) इक्षुगन्धा ( इक्षुगन्धोऽस्याः इति इक्षुशब्दः तद्गन्धसदृशे गौणः । समासान्तविधेरनित्यत्वान्नेत्वम् ) ? [5]क्रोष्ट्री ( क्रोशति इति तुन् तृज्वद्भावात् ङीप् च ) ये ४ स्त्रीलिङ्ग नाम *कृष्णभूमिकूष्माण्ड के हैं ॥ ११० ॥

क्षीरविदारी ( क्षीरवती विदारी इति ) महाश्वेता ( महती चासौ श्वेता च ) ऋक्षगन्धा ( ऋक्षान् गन्धयति इति कन् ) ये ३ स्त्रीलिङ्ग नाम शुक्ल भूमिकूष्माण्ड के हैं ॥ ११० १/२ ॥

[6]लाङ्गली ( लाङ्गलाकारोऽस्त्यस्याः इति अर्शआद्यच् गौरादिः ) [7]शारदी ( शरदि भवा इति अण् ) तोयपिप्पली ( तोयस्य पिप्पलीव इति ) [8]शकुलादनी ( शकुलैरद्यते इति ल्युट् ङीप्, युचि तु गौरादित्वम् ) ये ४ स्त्रीलिङ्ग नाम जलपीपरि के हैं ॥ १११ ॥

---

१. रोचनी कर्कशे स्मृता । इति मेदिनी । २. मधुकं क्लीतके खगे । वन्यन्तरे ना । इति मेदिनी । ३. मधुयष्टी च यष्टी मधुकमेव च । इति वाचस्पतिः ।

४. विदारी शालपर्ण्यां च रोगभेदेक्षुगन्धयोः । इति मेदिनी । ५. क्रोष्ट्री शृगालिकाकृष्णविदारीलाङ्गलीषु च । इति मेदिनी । *मुकुटने–शुक्ल भूमिकूष्माण्ड के विदारी आदि ४रों नामों को कहा है जो मेदिनी से विरुद्ध होने के कारण उपेक्ष्य है । ६. लाङ्गली तोयपिप्पल्यां क्लीवं तु कुसुमान्तरे । गोदारणे तृणराजग्रहदारुविशेषयोः ॥ इति मेदिनी । ७. शारदा वत्सरे नवे । शरद्भवे पीतमुद्गे शालीनेऽप्यथ शारदी । सप्तपर्णाम्बुपिप्पल्योः । इति हैमः । ८. शकुलादनी स्त्रियां कृष्णभेदीकचटशाकयोः । इति मेदिनी ।

खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ।
गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ॥११२॥
योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ।
कदली वारणबुसा रम्भा मोचांशुमत्फला ॥११३॥
काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ।

---

खराश्वा ( खरमश्नुते इति उल्वादयश्चेति वः ) [1]कारवी ( करवस्य मयूरस्येयम् इति अण् ) दीप्यः ( दीपे साधुः इति यत् ) [2]मयूरः ( मीनाति रोगम् इति अरन् ) लोचमस्तकः ( लोच्यते इति घञ्, लोचो दर्शनीयो मस्तकोऽस्य ) ये ५ नाम अजमोदा के हैं जिनमें १—२ स्त्रीलिङ्ग हैं और ३—५ पुंलिङ्ग हैं ॥ १११.१/२ ॥

[3]गोपी ( गोपायति इति आयाभावे पचाद्यच् ङीष् च ) श्यामा ( श्यायते इति मक् ) शारिवा ( शारिरस्त्यस्याः इति वः ) [4]अनन्ता ( न अन्तोऽस्याः इति ) उत्पलशारिवा ( उत्पलमस्त्यस्याः इति अर्शआद्यच्, उत्पला चासौ शारिवा च ) ये ५ स्त्रीलिंग नाम शारिवा के हैं ॥ ११२ ॥

[5]योग्यम् ( युज्यते इति ण्यत् योगाय प्रभवति इति, यत् ) [6]ऋद्धिः ( ऋध्नोति इति क्तिन् ) [7]सिद्धिः ( सिध्यति इति क्तिन् ) [8]लक्ष्मीः ( लक्षयति, लक्ष्यते वा इतीः मुट् च ) ये ४ नाम सिद्धि-नामक औषधविशेष के हैं जिनमें प्रथम न० शेष स्त्रीलिङ्ग हैं ।

इमे उक्ताश्चत्वारो वृद्ध्याख्यौषधेराह्वयाः । [9]वृद्धिः ( वर्धतेऽनया इति क्तिन् ) यह एक स्त्रीलिङ्ग और पूर्वोक्त चार नाम वृद्धिनामक औषध विशेष के हैं ॥ ११२. १/२ ॥

[10]कदली ( केन वायुना दल्यते घः ङीप् च ) वारणबुसा ( वारणानां बुसा, बुस्यति, बुस्यते इति वा कः ) [11]रम्भा ( रभंति इति पचाद्यच् नुम् च ) [12]मोचा ( मुञ्चति इति पचाद्यच् ) अंशुमत्फला ( अंशु-मन्ति सूक्ष्मावयववन्ति फलान्यस्याः इति टापि ) काष्ठीला ( काष्ठिना इल्यते इति घञ् ) ये ६ स्त्रीलिंग नाम केला के हैं ।

---

१. कारवी मधुरा दीप्यत्वक्पत्री कृष्णजीरके । इति मेदिनी । २. मयूरो नीलकण्ठेऽपि स्यान्मयूर-शिखौषधौ । इति रभसः । ३. गोपी श्यामा गोपवल्ली गोपा गोपालिका च सा । इति वाचस्पतिः । ४. अनन्ता च विशल्यायां शारिवादूर्वयोरपि । इति मेदिनी । ५. योग्यः प्रवीणयोगार्होपायिशक्तेषु वाच्यवत् । क्लीबमृद्ध्यौषधौ पुष्पे नास्त्र्यभ्यासार्कयोषितोः । इति मेदिनी । ६. ऋद्धिः स्यादौषधीभेदे समृद्धावपि योषिति । इति मेदिनी । ७. सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्द्धिवृद्धिषु । इति मेदिनी । ८. लक्ष्मीः संपत्तिशोभयोः । ऋद्ध्योषधौ च पद्मायां वृद्धिनामौषधेऽपि च ॥ इति मेदिनी । ९. वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे । कालान्तरे चाभ्युदये समृद्धावपि योषिति । इति मेदिनी ।

१०. कदला कदली पृश्न्यां कदली-कदली पुनः । रम्भावृक्षेऽथ कदली पताकामृगभेदयोः । कदला डिम्बिकायां च शाल्मलीभूरुहेऽपि च । इति मेदिनी । कदलश्च कदल्यसौ, इति व्याडिः ।

११. रम्भा कदल्यप्सरसोर्ना वेणौ वास्यान्तरे । इति मेदिनी । १२. मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः । इति मेदिनी ।

वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ॥११४॥
नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ॥११५॥
विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा ।
तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ॥११६॥

---

मुद्गपर्णी ( मुद्गः पर्णमस्याः इति ङीष् । अत्र मुद्गाशब्देन मुद्गापर्णसदृशं पर्णं लक्ष्यते ) काकमुद्गा ( काकेनेषज्जलेन मुदं गच्छति इति डः ) [1]सहा ( सहते इति पचाद्यच् ये ३ स्त्रीलिङ्ग नाम वनमूँग के हैं ॥ ११३. १/२ ॥

[2]वार्ताकी ( वार्तमारोग्यमाकयति इति ण्यन्तः कर्मण्यण् च ) [3]हिङ्गुली ( हिङ्गु लाति इति कः गौरादित्वाद् ङीष् च [4]सिंही ( हिनस्ति इति पचाद्यच् पृषोदरादिः ) भण्टाकी ( भट्यते इति निपात० ) दुष्प्रधर्षिणी ( दुःखेन प्रधृष्यते इति कर्मणि ल्युट् ) ये ५ स्त्रीलिङ्ग नाम वनभंटा के हैं ।

[5]नाकुली ( नकुलानामियम् इति अण् ) [6]सुरसा ( शोभनो रसोऽस्याः इति ) [7]रास्ना ( राति इति निपातनात् ) सुगन्धा ( सुगन्धोऽस्त्यस्याः ) गन्धनाकुली ( गन्धवती नाकुली इति ) नकुलेष्टा ( नकुलानामिष्टा ) भुजङ्गाक्षी ( भुजंगानक्षति व्याप्नोति इति अण् ङीप् च ) छत्राकी ( छत्रमकति इति कर्मण्यण् ) [8]सुवहा ( सुष्ठु वहति इति पचाद्यच् ) ये ९ स्त्रीलिङ्ग नाम रासना के हैं ॥ ११५ ॥

विदारिगन्धा ( विदार्या गन्धः इति, ह्रस्वः, सोऽस्त्यस्याः अच् ) [9]अंशुमती ( अंशवः सन्त्यस्याः इति, दीर्घमूलत्वात् ) सालपर्णी ( सालः पर्णमस्याः इति सालशब्दस्य सालपर्णसदृशे लक्षणा ) [10]स्थिरा ( तिष्ठति इति निपात० ) [11]ध्रुवा ( ध्रुवति इति अच् ) ये ५ स्त्रीलिङ्ग नाम सरिवन के हैं ॥ ११५. १/२ ॥

तुण्डिकेरी ( तुण्डिकान्शरीराणि ईरयति इति कर्मण्यण् ) समुद्रान्ता ( समुद्रोऽन्तो यस्याः इति ) कार्पासी ( करोति क्रियते वा इति कुङः पासः विल्वादित्वादण् च, जातित्वाद् गौरादित्वाद् वा ङीष् ) बदरा ( वदति बद स्थैर्ये, इति बाहुलकादरः ) ये ४ स्त्रीलिङ्ग नाम कपास के हैं ॥ ११६ ॥

---

१. सहो बले न स्त्रियां स्यात् स्त्रियां तु नखभेषजे । दण्डोत्पला मुद्गपर्णीकुमारीपृथिवीषु च । इति मेदिनी । २. वातिङ्गणस्तु वार्ताङ्गी वार्ताकः शाकबिल्वकः । इति रभसात् पुंस्यपि । ३. हिङ्गुली वर्णकद्रव्ये ना भण्टाक्यां न हिङ्गुली । इति मेदिनी । ४. सिंहस्तु राशिभेदे मृगाधिपे । श्रेष्ठे स्यादुत्तरस्थश्च सिंही स्वर्भानुमातरि । वासावृहत्योः क्षुद्रायाम् । इति हैमः ।

५. नाकुली कुक्कुटीकन्दे रास्नायां चव्यके स्त्रियाम् । इति मेदिनी । ६. सुरसं तु त्रिषु स्वादौ, पर्णासे तु नपुंसकम् । स्त्री रास्नानागमात्रोश्च । इति मेदिनी । ७. रास्ना तु स्याद् जङ्गाख्यामेलापर्ण्यामपि स्त्रियाम् । इति मेदिनी । ८. सुवहा सल्लक्येलापर्णीगोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री सुखवाह्येऽन्यलिङ्गः स्यात् । इति मेदिनी । ९. अंशुमान् भास्करे सालपर्ण्यामंशुमती स्मृता । इति मेदिनी । १०. स्थिरा भूसालपर्ण्योर्ना शनौ मोक्षेऽचले त्रिषु । इति मेदिनी । ११. मूर्वाशालपर्ण्योः स्त्री भेदे गीतभिदपि । ध्रुवो वटे । ध्रुवं खेऽजस्रतर्कयोः । इति हैमः ।

भारद्वाजी तु सा वन्या शृङ्गी तु ऋषभो वृषः ।
गांगेरुकी नागबला झषा ह्रस्वगवेधुका ॥११७॥
धामार्गवो घोषकः स्यान्महाजाली स पीतकः ।
ज्योत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ॥११८॥

---

[1]भारद्वाजी ( भरद्वाजस्य मुनेरियम् । तेन निर्मितत्वात् इति अण् ) यह १ स्त्रीलिङ्ग नाम वन-कपास का है ।

शृंगी ( शृणाति गदम् इति गन्, नुम् च गौरादित्वाद् ङीष् ) [2]ऋषभः ( ऋषति इति 'ऋषी गतौ' इत्यमच् ) वृषः ( वर्षति 'वृषु सेचने' इति कः ) ये ३ नाम काकरासिंगी के हैं जिनमें १ स्त्रीलिङ्ग २–३ पुंलिङ्ग हैं ।

गाङ्गेरुकी ( गाङ्गं जलमीरयति मृगय्यादिः । 'ईर गतौ क्षेपणे च' इति कन् गौरादित्वान्ङीष् ) नागबला ( नागानां हस्तिनां बला इति ) [3]झषा ( झषति वातम् इति पचाद्यच् ) ह्रस्वगवेधुका ( गवि भूमावेधते इति बाहुलकादुः, कन्, ह्रस्वा चासौ गवेधुका च ) ये ४ स्त्रीलिङ्ग नाम गँगेरन के हैं ॥ ११७ ॥

[4]धामार्गवः ( धाम ऋच्छति 'ऋ गतौ' इति क्विन् धामार् चासौ गौश्च इति टच् ) [5]घोषकः ( घोषति इति पचाद्यच् कन् च ) ये २ पुंलिङ्ग नाम सफेद फूलवाली तरोई के हैं ।

महाजाली ( जालयति इति पचाद्यच् गौरादित्वाद् ङीष् च महती चासौ जाली च ) यह १ स्त्री-लिङ्ग नाम पीले फूल वाली तरोई का है ॥ ११७ १/२ ॥

[6]ज्यौत्स्नी ( ज्योत्स्नाऽस्त्यस्याः इति अण् ) [7]पटोलिका ( पटति 'पटगतौ' इत्योलच्, ङीप् कन् ) [8]जाली ( जलति 'जल धान्ये' इति णः गौरादित्वान् ङीष् ) ये ३ स्त्रीलिंग नाम चिचिड़ा नामक तरकारी के हैं ।

[9]नादेयी ( नद्या भवा इति ढक् ) भूमिजम्बुका ( भूमिलग्ना जम्बुका इति शाकपार्थिवादिः ) ये दो स्त्रीलिङ्ग नाम भुंई जामुन के हैं ॥ ११८ ॥

---

१. वनकार्पासिकायां तु सहा चन्दनवीजिका । भारद्वाजी महावीर्या कष्ठला कुष्ठनाशिनी । इति हैमः । २. ऋषभस्त्वौषधान्तरे । स्वरभिद् वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः । इति मेदिनी । ३. झषा नाग-बलायां स्त्री तापमत्स्याटवीषु नः । इति मेदिनी । ४. धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके । इति मेदिनी । ५. घोष आभीरपल्ल्यां स्याद् गोपालध्वानघोषके । कांस्ये चाम्बुदनादे ना घोषा मधुरिकौ-षधौ ॥ इति मेदिनी । ६. ज्योत्स्नी पटोली ज्योत्स्नाविशोः । इति हैमः । ७. पटोलं वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति । इति मेदिनी ।

८. जालं गवाक्ष आनाये क्षारके दम्भवृन्दयोः । जालो नीपद्रुमे जाली पटोलिकौषधौ स्त्रियाम् ॥ इति मेदिनी ९. नादेयी नागरङ्गे स्याज्जयायां जलवेतसे । भूमिजम्ब्वां च जम्ब्वां च अङ्गुष्ठेऽपि च योषिति । इति मेदिनी ।

स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ।
गोधापदी तु सुवहा मुसली तालमूलिका ॥११९॥
अजशृङ्गी विषाणी स्याद् गोजिह्वादार्विके समे ।
ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा ॥१२०॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ।

---

लांगलिकी ( लांगलं पुष्पविशेषोऽस्त्यस्या इति ठन् जातित्वाद् गौरादित्वाद् वा ङीष् ) [1]अग्निशिखा ( अग्नेरिव शिखाऽस्याः इति ) ये दो स्त्रीलिंग नाम करिहारी के हैं ।

काकांगी ( काकस्येवांगं नासारूपं फलमस्याः इति गौरादित्वान् ङीष् ) काकनासिका ( काकस्येव नासिका यस्याः इति ) ये दो स्त्रीलिङ्ग नाम कौवाठोंठी के हैं ॥ ११८ ।१२ ॥

गोधापदी ( गोधाया इव पादो मूलमस्याः इति निपात० ) सुवहा ( सुवहति इति पचाद्यच् ) ये दो स्त्रीलिङ्ग नाम लजालू के हैं ।

[3]मुसली ( मुस्यति इति वृषादि ) तालमूलिका ( तालो मूलमस्याः इति ङीष् स्वार्थे कन् ) ये दो स्त्रीलिङ्ग नाम मुसलीकन्द के हैं ॥ ११९ ॥

अजशृङ्गी ( अजः शृङ्गमस्याः इति गौरादित्वान् ङीष् अजशब्दो अजशृंगसदृशे लाक्षणिकः ) [4]विषाणी ( विषाणमस्त्यस्याः इति गौरादित्वान् ङीष् ) ये २ स्त्रीलिंग नाम मेढ़ासिङ्गी के हैं ॥

गोजिह्वा ( गोर्जिह्वेव इति ) दार्विका ( दारयतीति उल्वादिः दर्विकेति पाठे दर्वीव इति कन् ) ये २ स्त्रीलिङ्ग नाम गोभी के हैं ॥ ११९.१२ ॥

[5]ताम्बूलवल्ली ( ताम्यति इति क्विप् दीर्घश्च, बोलति इति चुरादीनां णिज्वा कः, ताम् चासौ बुली च पृषोदरादिः ताम्बूलाख्या वल्ली शाकपार्थिवादिः ङीष् च ) नागवल्ली ( नागलोकस्य वल्ली इति ) ये ३ स्त्रीलिङ्ग नाम पान के हैं ।

[6]द्विजा ( द्विर्जाता इति डः ) हरेणुः ( हरति इति एणुः ) [7]रेणुका ( रेणुरस्या अस्ति इति कः ) कौन्ती ( कुन्तिषु देशेषु भवा इति अण् ) [8]कपिला ( कपिलो वर्णोऽस्त्यस्याः इति अर्शआद्यच् ) भस्मगन्धिनी ( भस्मनो गन्धः इतीनिः ) ये ६ स्त्रीलिङ्ग नाम रेणुका बीज के हैं ॥ १२०.१२ ॥

---

१. अग्निज्वाला लाङ्गलिकी । इति वाचस्पतिः । २. गोधापदी तु सुवहा त्रिफला हंसपद्यपि । इति कोषान्तरम् । ३. मुसलं स्यादयोग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि । इति मेदिनी । ४. विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति । कुष्ठनामौषधे क्लीवं त्रिषु शृङ्गेभदन्तयोः । इति मेदिनी ।

५. ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम् । इति मेदिनी । ६. द्विजो विप्रक्षत्रियवैश्ये दन्ते विहंगमे । द्विजा भार्गीरेणुकयोः । इति हेमचन्द्रः । ७. रेणुकापि हरेणौ च जामदग्न्यस्य मातरि । इति मेदिनी । ८. कपिला रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् ॥ नानले वासुदेवे च मुनिभेदे च कुक्कुरे । इति मेदिनी ।

एलावालुकमैलेयं सुगन्धि हरिवालुकम् ॥१२१॥
वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ।
वालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ॥१२२॥
कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ।
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ॥१२३॥
गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ।
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ॥१२४॥

---

एलावालुकम् ( एलयति इति पचाद्यच् टाप् , एला इव वलति इति बाहुलकादुण् स्वार्थे कन् च ) ऐलेयम् ( इलाया अपत्यम् इति ढक् ) सुगन्धि ( शोभनो गन्धोऽस्य इतीत्वम् ) हरिवालुकम् ( हरिवर्णं वालुकम् इति ) [1]वालुकम् ( वलति इति उण् कन् च ) ये ५ नपुंसक नाम एलुआ के हैं ॥

पालङ्की ( पालनम् इति संपदादिः ) मुकुन्दः ( मुक्तिं ददाति इति कः पृषोदरादिः ) [2]कुन्दः ( कुं भूमिमुनत्ति इति अण् शकन्ध्वादिः ) कुन्दुरुः ( कुमुनत्ति, उन्दयति वा इति जन्वादिः ) ये ४ पुंलिङ्ग नाम पालक के हैं ॥ १२१.१।२ ॥

[3]वालम् ( वालयति इति पचाद्यच् ) ह्रीवेरम् ( ह्री युक्तं वेरमस्य इति ) बर्हिष्ठम् ( बर्हिषि कुशे तिष्ठति इति कः षत्वञ्च ) उदीच्यम् ( उदीचि जातम् इति यत् ) केशाम्बुनाम ( केशाम्बुनोर्नाम यस्य इति ) ये ५ नपुंसक नाम नेत्रवाला के हैं ।

कालानुसार्यम् ( कालेनानुस्रियते इति ण्यत् ) [4]वृद्धम् ( वर्धते स्म इति क्तः ) अश्मपुष्पम् ( अश्मनः पुष्पमिव इति ) शीतशिवम् ( शीतं च तच्छिवं च इति ) [5]शैलेयम् ( शिलायां भवम् इति ढक् ) ये ५ नपुंसक नाम सिलाजीत के हैं ।

तालपर्णी ( तालः पर्णमस्याः इति ङीष् ) दैत्या ( दितेरियम् इति ण्यः ) गन्धकुटी ( गन्धस्य कुटीव इति ) [6]मुरा ( मुरति 'मुर वेष्टने' इति इगुपधत्वात् कः ) गन्धिनी ( प्रशस्तो गन्धोऽस्याः इति इन् ) ये ५ स्त्रीलिङ्ग नाम मुरा ( मरोड़फली ) के हैं ॥ १२३ ॥

गजभक्ष्या ( गजैर्भक्ष्यते इति ण्यत् ) सुवहा ( सुवहति इति पचाद्यच् ) [7]सुरभिः ( सुष्ठु रमते इति इन्, आगमशास्त्रानित्यत्वान्न नुम् ) [8]रसा ( रस्यते इति अण् ) महेरणा ( महदीरणमस्या इति ल्युः )

---

१. वालुका सिकतासु स्याद्वालुकं त्वेलवालुके । इति मेदिनी । २. कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना । इति मेदिनी ।

३. वालो ना कुन्तलेऽश्वस्य करिणश्चापि वालधौ । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम् । अलंकारान्तरे मेध्ये वाली बाला त्रुटौ स्त्रियाम् ॥ इति स्पर्शादौ मेदिनी । ४. वृद्धो जीर्णे प्रवृद्धे च त्रिषु क्लीवं तु शैलजे । इति मेदिनी । ५. शैलेयं तालपर्ण्यां च सैन्धवे । शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम् । इति मेदिनी । ६. मुरा गन्धद्रव्ये दैत्यान्तरे पुमान् । इति मेदिनी । ७. सुरभिः सल्लकी मातृभिन्मुरागोषु योषिति । इति मेदिनी । ८. रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च ॥ इति हैमः ।

अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका।
पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुलाऽथ सा ॥१२५॥
सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः।
व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ॥१२६॥
शङ्खिनी चोरपुष्पी स्यात् केशिन्यथ वितुन्नकः।

---

कुन्दुरुकी ( कुन्दुरुरिव प्रतिकृतिः इति कन् ) [१]सल्लकी ( सलति 'षल गतौ' इति क्वुन् पृषोदरादिः गौरादिः ) ह्लादिनी ( 'ह्लादी सुखे च' इति णिनिः ) ये ८ स्त्रीलिङ्ग नाम सनई के हैं ॥ १२४ ॥

अग्निज्वाला ( अग्नेर्ज्वालेव इति ) सुभिक्षा ( सुष्ठु भिक्षते इति घञ् ) धातकी ( धातुं करोति इति ण्यन्तात् ण्वुल् ) धातुपुष्पिका ( धातुपुष्पमस्याः इति कप् ) ये ४ स्त्रीलिङ्ग नाम धवा के हैं ॥ १२४. १/२ ॥

पृथ्वीका ( प्रथते 'प्रथ प्रख्याने' इति ईकन् पृथुरादेशश्च ) चन्द्रवाला ( चन्द्रस्य कर्पूरस्य वालेव इति ) एला ( एलयति 'इल 'प्रेरणे' इति पचाद्यच् ) निष्कुटिः—निश्चिता कुटिः कौटिल्यमस्याः इति [२]बहुला ( बहूनि बीजानि लाति इति कः ) ये ५ स्त्रीलिङ्ग नाम बड़ी इलायची के हैं ॥

उपकुञ्चिका ( उपकुञ्चति इति ण्वुल् ) तुत्था ( तुदति इति थक् ) कोरङ्गी ( कुरति इति बाहुलकादङ्गच्, गौरादित्वात् ङीष् च ) [३]त्रिपुटा ( त्रयः पुटाः यस्याः इति ) [४]त्रुटिः ( त्रुटति 'त्रुट छेदे' इतीन् ) ये ५ स्त्रीलिङ्ग नाम छोटी इलायची के हैं ॥ १२५. १।२ ॥

[५]व्याधिः ( विगत आधिरनेन इति ) कुष्ठम् ( कुष्णाति रोगम् इति क्थन् ) पारिभाव्यम् ( परिभावे साधुः इति यत् स्वार्थेऽण् ) वाप्यम् ( वाप्यां भवं—इति, उप्यते इति ण्यत् व्याप्यमिति वा पाठः ) [६]पाकलम् ( पाकं लाति इति ) [७]उत्पलम् ( उत्पलति इति अच् ) ये ६ नाम कूठ संज्ञक औषधिविशेष के हैं, जिनमें १ पुं० और ५ नपुंसक हैं ॥ १२६ ॥

[८]शङ्खिनी ( शङ्खाः सन्त्यस्याः इति इनिः ) चोरपुष्पी ( चोर इव पुष्पं यस्याः इति—ङीष् ) [९]केशिनी ( केशाः सन्त्यस्याः इतीनिः ) ये ३ स्त्रीलिङ्ग नाम शङ्खाहुली नामक वृक्षविशेष के हैं।

---

१. सल्लकी सिल्लकी ह्लादा। इति रुद्रः। २. बहुला नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियाँ भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः। इति मेदिनी। ३. त्रिपुरा मल्लिकायां च सूक्ष्मैलात्रिवृतोः स्त्रियाम्। सतीनके च तीरे च त्रिपुटः समुदाहृतः॥ इति मेदिनी। ४. त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः। इति मेदिनी। ५. व्याधिः कुष्ठे च रोगे ना। इति मेदिनी। कौबेरं भास्वरं कुष्ठं पारिभाव्यं गदाह्वयम्। इति रभसः। ६. पाकलं कुष्ठभैषज्ये पुंसि स्यात्कुञ्जरे। इति मेदिनी। ७. उत्पला तुषपर्ण्यां क्लीबं कुष्ठप्रसूनयोः। इति मेदिनी। ८. शङ्खिनी श्वेतचुक्रायां चोरपुष्प्यां वधूभिदि। इति मेदिनी। ९. केशी इत्यपि यथा—केशी केशवति त्रिषु। दैत्ये ना चोरपुष्प्यां स्त्री। इति मेदिनी।

**झटामलाऽज्झटा ताली शिवा तामलकीति च ॥१२७॥**
**प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः ।**
**कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी ॥१२८॥**
**चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः ।**
**व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ॥१२९॥**

---

वितुन्नकः ( वितुद्यते स्म 'तुद व्यथने' इति क्तः स्वार्थे कन् च ) झटा ( झट्यते 'झट संघाते' इति घञ् ) अमला ( न मलोऽस्याः ) अज्झटा ( झटति इति अच्—टाप्, अच्चासौ झटा च अद्व्ययमाश्चर्यं, अतः आश्चर्यस्य झटः = संघातोऽस्यां वा ) [1]ताली ( तालयति 'तले प्रतिष्ठायाम्' इति ण्यन्तादच् ) [2]शिवा ( शिवमस्त्यस्याम् इति अर्शआद्यच् ) ये ६ नाम छोटा आँवरा ( हर्फा ) के हैं। जिनमें १म पुंलिङ्ग अन्य स्त्रीलिंग हैं।

[3]प्रपौण्डरीकम् ( पुण्डरीकेण सदृशम् इति अण्, प्रकृष्टं पौण्डरीकम् ) पौण्डर्यम् ( पुण्डयति इति अच्, पुण्डस्य अयं प्रधानम् शकन्ध्वादिः ) ये २ नपुंसक नाम पुण्डरीया वृक्ष के हैं।

तुन्नः ( तुद्यते स्म इति क्तः ) [4]कुबेरकः ( कुत्सितं वेरमस्य इति कः ) [5]कुणिः ( कुंलति इतीन् ) कच्छः ( कचति इति बाहुलकाच्छः ) कान्तलकः ( काम्यते इति क्तः, लकति इति अच् कान्तश्चासौ लकश्चेति ) नन्दिवृक्षः ( नन्दनम् इति इन् ङीप् वा नन्द्याः वृक्षः ) ये ६ पुंलिङ्ग नाम तणी या तुन के हैं।

राक्षसी ( रक्षस इयम् इत्यण् ) [6]चण्डा ( चण्डते इति अच् ) [7]धनहरी ( धनं हरति इति गौरादित्वात् ङीप् ) [8]क्षेमः ( क्षिणोति 'क्षिणु हिंसायाम्' इति मन् ) दुष्पत्रः ( दुष्टानि पत्राण्यस्य इति ) गणहासकः ( गणं हासयति इति ण्वुल् ) ये ६ नाम चोरानामक गन्धद्रव्य के हैं, जिनमें १-३ स्त्री ४-६ पुं० हैं ॥ १२८. १/२ ॥

व्याडायुधम् ( व्याडस्य = व्याघ्रस्यायुधमिव इति ) [9]व्याघ्रनखम् ( व्याघ्रस्य नखमिव इति ) करजम् करजं नखम् तदिव ) चक्रकारकम् ( चक्रस्य कारकम् इति ) ये ४ नपुंसक नाम बघनखा के हैं ॥१२९॥

---

१. तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते। गीतकालक्रियामाने करस्फाले द्रुमान्तरे ॥ वाद्यभाण्डे च कांसस्य त्सरौ ताली झटौषधौ । क्लीबं तु हरिताले स्यात् । इति मेदिनी । २. शिवाझटामलौषधौ । अभयामलकीगौरीफेरुसक्तुफलासु च । इति मेदिनी । ३. साधु पुष्पं स्थलपद्मं दृष्टिकृत् पुण्डरीककम् । इति रभसः । ४. कुबेरकः कुबेरे स्यात्पुंसि नन्द्याख्यपादपे । कुबेरः स्यात्पुंसि नन्दिवृक्षे पुण्यजने खरे । इति मेदिनी । ५. कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत् । इति मेदिनी । तुणिः ( तुणयति इति इः, पृषोदरादिः ) इति क्वचित्पाठः । ६. चण्डा धनहरी शङ्खपुष्प्योस्त्रिष्वतिकोपने । तीव्रेऽपि । मेदिनी । ७. दुष्कुलीना धनहरी विरोकः क्रोधमूर्छितः । इति वाचस्पतिः । ८. क्षेमोऽस्त्री लब्धरक्षणे । चण्डायां ना शुभे न स्त्री कात्यायन्यां च योषिति । इति मेदिनी । ९. भवेद् व्याघ्रनखं कन्दगन्धद्रव्यविशेषयोः । नखक्षतान्तरे क्लीबम् । इति मेदिनी ।

**शुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली।**
**धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ॥१३०॥**
**शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी।**
**काक्षी मृत्स्ना तुवरिका मृतालकसुराष्ट्रजे ॥१३१॥**
**कुटन्नटं दाशपुरं वानेयं परिपेलवम्।**

शुषिरा ( शुषिरमस्त्यस्याः इति रः ) विद्रुमलता ( विद्रुमस्येव लता इति ) कपोताङ्घ्रिः ( कपोतस्याङ्घ्रिरिव इति ) नटी ( नटति 'नट स्पन्दने' इति गौरादित्वात् ङीष् ) नली[1] ( नलति इति ) ये ५ स्त्रीलिङ्ग नाम माल- काँगनी के हैं ॥ १२९.१।२ ॥

[2]धमनी ( धम्यते 'धमिः सौत्रः' इत्यनिः ङीप् ) अञ्जनकेशी ( अञ्जनमिव केशाः यस्याः इति ) [3]हनुः ( हन्ति इत्युः ) हट्टविलासिनी ( हट्टे विलसति तच्छीला इति णिनिः ) ये ४ स्त्रीलिङ्ग नाम अञ्जनकेशी के हैं ॥ १३० ॥

[4]शुक्तिः ( शोषति 'शुच शोके' इति क्तिन् ) [5]शङ्खः ( शाम्यति इति खः ) [6]खुरः ( खुरति 'खुर च्छेदने' इति कः ) कोलदलम् ( कोलस्य बदर्या इव दलम् इति ) [7]नखम् ( न खनति इति डः ) ये ५ नाम नखनामक गन्धद्रव्य के हैं। जिनमें प्रथम स्त्री० २-३ पुं० ४-५ नपुंसक हैं।

[8]आढकी ( आढकमस्त्यस्याः परिच्छेदकत्वेन 'ढौकृ गतौ' इति अच् पृषोदरादिः गौरादिः ) [9]काक्षी ( कक्षे भवा इत्यण् ) [10]मृत्स्ना (मृत्स्नाऽस्त्यस्याः क्षेत्रत्वेन इति अच्) [11]तुवरिका ( तुवरोऽस्त्यस्याः ठन् टाप् च ) [12]मृतालकम् मृतमालयति इति ण्यन्तादण् ) सुराष्ट्रजम् ( सुराष्ट्रे जातम् इति डः ) ये ६ नाम अरहर के हैं। जिनमें १-४ स्त्रीलिङ्ग और ५-६ नपुंसक हैं ॥ १३१ ॥

[13]कुटन्नटम् ( कुटन् वक्रीभवन् नटति 'नट स्पन्दने' इति अच् ) [14]दाशपुरम् ( दाशान् कैवर्तान्

---

१. नलः पोटगले राशि पितृदेवे कपीश्वरे। कमलेऽपि च नल्यां च क्रमेण क्लीबयोषितोः। इति मेदिनी।
२. धमनो नाऽनले भस्त्रा ध्मापकक्रूरयोस्त्रिषु। धमनी तु शिराहट्ट विलासिन्योश्च योषिति। इति मेदिनी।
३. हनुर्हट्टविलासिन्यां मृत्यावस्त्रे ( नृत्यारम्भे ) गदे स्त्रियाम्। द्वयोः कपोलावयवे। इति मेदिनी।
४. शुक्तिः शङ्खनखे शङ्खे कपालखण्डदृग्रुजोः। नख्यस्वावर्तयोर्मुक्ता स्फोटदुर्नामयोरपि। इति हैमः।
५. शङ्खः कम्बौ निधेर्भेदे स्यान्नख्यामलिकास्थनि। इति हेमः। ६. खुरः शफे कोलदले इति हैमः।
७. नखं पुनर्गन्धद्रव्ये नखः करजपण्ढयोः। इति हैमः। नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्। इति मेदिनी। ८. आढकी तु तुवर्यां स्त्री परिमाणान्तरे त्रिषु। इति मेदिनी ९. काक्षी तुवरिकायां च सौराष्ट्रमृद्यपि स्त्रियाम्। इति मेदिनी। १०. मृत्सा मृत्स्नातुवर्योः स्त्री। इति मेदिनी। ११. वार्षिका मल्लिका तूवर्याढकी कच्छुरा छटी। इति वोपालितात् तूवरी च १२. अजिता तुवरा स्तुत्या मृत्स्ना मृत्तालकम्। इति कोशात् द्वितकारकमपि तत्र मृदि तालः प्रतिष्ठाऽस्य इति बोध्यः।
१३. परिपेलवं प्लवं वन्यं तत् कुटन्नटसंज्ञकम्। जायते मण्डुकाकारं शैवालदलसंचये। कैवर्तीमुस्तके क्लीबं शोणकेता कुटन्नटः। इत्यजयः। १४. दशपूरं दशपुरं प्लवनं जीविताह्वयम्। इति वाचस्पतेः दशपूरं इति दशपुरं, इति च पाठः।

**प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ॥१३२॥**
**ग्रन्थिपर्णं शुकं बर्हिपुष्पं स्थौणेयकुक्कुरे ।**
**मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ॥१३३॥**
**समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ।**
**तपस्विनी जटामांसी जटिला लोमशा मिसी ॥१३४॥**

---

पिपर्ति 'पृ पालनपूरणयोः' इति मूलविभुजादित्वात् कः ) वानेयम् ( वने पानीये जायते इति ढक् ) परिपेलवम् ( परितः पेलवं मृदु इति ) [१]प्लवम् (प्लवते 'प्लुङ् गतौ' इति अच् ) गोपुरम् ( गां जलं पिपर्ति 'पृ पालने' मूलविभुजादित्वात् कः ) गोनर्दम् ( गां जलं नर्दयति 'नर्द शब्दे' इति कर्मण्यण् ) कैवर्तीमुस्तकम् ( कैवर्तानां जातिः कैवर्ती, कैवर्त्या मुस्तकम्, इति ) ये ८ नपुंसक नाम जलमोथा के हैं ॥ १३२ ॥

[२]ग्रन्थिपर्णम् ( ग्रन्थौ पर्णान्यस्य इति ) [३]शुकम् ( शोचति 'शुच शोके' इति निपात० ) [४]बर्हिः ( बर्हं पत्रं प्रशस्तमस्य इति इनिः ) पुष्पम् ( पुष्प्यति 'पुष्प विकसने' इति अच् ) स्थौणेयम् ( स्थूणाया अपत्यम् इति ढक् ) कुक्कुरम् ( कुक्कुरोऽस्यास्ति इति अच्, कुक्कुरशब्दस्तद्गन्धे लाक्षणिकः ) ये ६ नपुंसक नाम कुकरौन्धा के हैं ॥ १३२. १।२ ॥

[५]मरुन्माला ( म्रियते इति उतिः, मरुद्भिर्मल्यते 'मल धारणे' इति घञ् ) [६]पिशुना ( पिंशति 'पिश अवयवे' इति उनन् ) स्पृक्का ( स्पृश्यते 'स्पृश स्पर्शने' इति बाहुलकात्कक् ) देवी ( दीव्यति इति ) [७]लता ( लतति इति सौत्रो धातुस्तस्मात् अच् ) [८]लघुः ( लङ्घते 'लघि गतौ' इति उः ) समुद्रान्ता ( समुद्रोऽन्तोऽस्याः इति ) [९]वधूः ( वहति इत्यूः धस्च ) कोटिवर्षा ( कोटिभिरग्रैर्वर्षति इति ) लङ्कोपिका ( लङ्कायामुप्यते इति क्वुन् वस्य सम्प्रसारणं च ) ये १० स्त्रीलिङ्ग नाम असवर (शाक) विशेष के हैं ॥१३३.१।२॥

तपस्विनी ( तपोऽस्त्यस्याः इति विनिः ) जटा ( जटाऽस्त्यस्याः इति अच् ) मांसी ( मन्यते, मने-

---

१. प्लवः कारण्डवे मेके कुलके भेलके कपौ । शब्दे प्लुतिगतौ प्लक्षे चण्डालजलकाकयोः । प्लवं गन्धतृणे प्रोक्तं कैवर्तीमुस्तकेऽपि च ॥ इति विश्वः । २. ग्रन्थिपर्णे शिरीषे च शुकः स्यात् । इति विश्वः । ३. शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् । इति मेदिनी । शुकबर्हम् । इति समस्तं नाम इत्येके । ४. बर्हपुष्पम्, बर्हिपुष्पम्—इत्यपि पाठान्तरम् । 'बर्हम्' इत्यपि । 'मरुत्' इत्यत्राप्यन्वेति तेन—मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम् । इति मेदिनी संगच्छते । ५. व्यस्तं समस्तं च नामेदम् । वाचस्पतिनाप्युक्तम्-स्पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघुः । समुद्रान्ता वधूः । कोटिवर्षा लङ्कोपिका मरुत् । मुनिर्माल्यवती माला मोहना कुटिला लता । इति । ६. पिशुनं कुङ्कुमेऽपि च । कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात् इति मेदिनी । ७. लता प्रियङ्गुशाखयोः । पृक्का ज्योतिष्मतीवल्लीलताकस्तूरिकारिकासु च । माधवीदूर्वयोः । इति मेदिनी ८. लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागरुणि पृक्कानामौषधौ तु स्त्री । इति मेदिनी । ९. वधूः स्त्री शारिवौषधी । स्नुषाशटीनवोढासु भार्यापृक्काङ्गनासु च । इति मेदिनी । पृक्का च मञ्जिला वधूः । इति त्रिकाण्डशेषः ।

त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ।
कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ॥१३५॥
ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ।
शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः ॥१३६॥

---

दीर्घश्चेति सः, दीर्घश्च गौरादित्वात् ङीष् च ) जटिला [1]( जटाऽस्त्यस्याः इति पिच्छादित्वादिलच् ) लोमशा [2]( लोमानि सन्त्यस्याः इति शः ) मिसी ( मस्यति 'मसी परिणामे' इति इन् ङीष्च पृषोदरादिः ) ये ५ स्त्रीलिङ्ग नाम जटामांसी के हैं ॥ १३४ ॥

[3]त्वक्पत्रम् ( त्वगिव पत्रमस्य इति ) उत्कटम् ( अन्यत उत्कटगन्धित्वात, संप्रोदश्चेति कटच् ) भृङ्गम् ( बिभर्ति 'भृञः किन्नुट् च' इति गन नुम् च ) त्वचम् ( प्रशस्ता त्वगस्यास्ति इति अच् ) [4]चोचम् ( प्रशस्तं चोचमस्यास्ति इति अच् ) वराङ्गकम् ( वरमङ्गमस्य 'शेषाद्विभाषा' इति कप् ) ये ६ नपुंसक नाम तज ( दालचीनी ) के हैं ॥ १३४. १।२ ॥

कर्चूरकः ( कर्जति 'कर्ज व्यथने' इत्यूरः कन् च ) द्राविडकः ( द्रविडे देशे जातः इति अण् ) काल्पकः ( कल्पे विधौ भवः इति अण् ) वेधमुख्यकः ( वेधे मुख्यः इति कन् ) कचूर के ये ४ पुंलिङ्ग नाम हैं ॥ १३५ ॥

जातिमात्र विवक्षा में ओषधी शब्द का प्रयोग होता है। ओषधी यह एक स्त्रीलिङ्ग नाम जातिवाचक दवा अर्थ में प्रयुक्त होता है।

द्रव्य मात्र की विवक्षा में—औषधम् ( ओषधेरजातौ इत्यण् ) यह १ नपुंसक नाम औषध के अर्थ में प्रयुक्त होता है। 'सर्वमौषधम्' शब्द से घृत-तैलादि सभी औषध शब्दवाच्य हैं ॥ १३५. १।२ ॥

[5]शाकम् ( शक्यते भोक्तुम् 'शक्लृ शक्तौ' इति घञ् ) यह १ नपुंसक नाम साग ( आदि से फल फूल आदि का भी ग्रहण होता है ) का है ॥

[6]तण्डुलीयः ( तण्डुलाय हितः इति छः ) [7]अल्पमारिषः ( अल्पश्चासौ मारिषश्च इति ) ये २ पुंलिङ्ग नाम चौराई शाक के हैं ॥ १३६ ॥

---

१. जटिला पिप्पली मांस्योर्जटायुक्तं तु वाच्यवत्। इति मेदिनी। २. 'लोमशो मुनिमेषयोः, लोमान्विते स्त्रियां काकजङ्घामांसीवचासु च। शूकशिम्बी महाभेदा कासीसे डाकिनीभिदि। इति मेदिनी। ३. त्वगपि पाठान्तरम्। त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः। इति मेदिनी। ४. त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रके। इति धरणिः। ५. मूलपत्रकरीराग्रफलकाण्डाधिरूढकम्। त्वक् पुष्पं कवकं चैव शाकं दशविधं स्मृतम् ॥ मूलकादेः मूलम्, वास्तुकादेः पत्रम्, वंशांकुरम् करीरम्, वेत्रादेः अग्रम्, कूष्माण्डादेः फलम्, उत्पलादेर्नालम् काण्डम्, मतुलुङ्गादेः त्वक्, तिन्तिडी कोविदारादेः पुष्पम्, छत्राकम् कवकम्। अधिरूढकम् = तालवीजांकुरास्थिमज्जादि।

६. तण्डुलीयः शाकभेदे विडङ्गतरुताप्ययोः। इति हैमः। ७. मारिष शाकभिद्यार्ये नाट्योक्त्या पुंसि। इति मेदिनी।

विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका ।
स्याद्दृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः ॥१३७॥
जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ।
पट्टपर्णी हैमवती स्वर्णक्षीरी हिमावती ॥१३८॥
हयपुच्छी तु काम्बोजी माषपर्णी महासहा ।

---

[1]विशल्या ( विगतं शल्यमनया इति ) [2]अग्निशिखा ( अग्नेरिव शिखा संतापो यस्याः इति ) अनन्ता ( न अन्तो यस्याः इति ) [3]फलिनी ( फलानि सन्त्यस्याः इति इनिः ) शक्रपुष्पिका ( शक्रोऽर्जुनतरुः पुष्पमस्याः इति ङीष् कन् च शक्रशब्दः पुष्पे लाक्षणिकः ) ये ५ स्त्रीलिङ्ग नाम अग्निशिखा के हैं ॥

[4]ऋक्षगन्धा ( ऋक्षस्येव गन्धोऽस्याः इति समासान्तविधेरनित्यत्वादिन्न ) [5]छगलान्त्री ( छगलस्येवान्त्रमस्याः इति ) आवेगी ( आवेगोऽस्त्यस्याः इति अच् , ङीष् ) वृद्धदारकः ( वृद्धो दारकोऽस्मात् इति ण्वुल् ) जुङ्गः ( जुङ्गति 'जुगि वर्जने' इति अच् ) ये ५ नाम विधारा के हैं । जिनमें १—३ स्त्रीलिङ्ग और ४—५ पुंलिङ्ग हैं ॥

ब्राह्मी ( ब्रह्मण इयम् इत्यणि टिलोपश्च ) मत्स्याक्षी ( मत्स्याक्षीव पुष्पमस्याः इति षच् ङीष् च, मत्स्यशब्दः स्वावयवे गौणः ) [6]वयस्था ( वयसि तिष्ठत्यनया इति कः ) सोमवल्लरी ( सोमस्य वल्लरी इति ) ये ४ स्त्रीलिङ्ग नाम ब्राह्मी के हैं ॥ १३७. १।२ ॥

पट्टपर्णी ( पट्टानि पर्णान्यस्याः इति ङीष् ) हैमवती ( हिमवति जाता इत्यण् ) स्वर्णक्षीरी ( स्वर्णमिव क्षीरमस्याः इति ) [7]हिमावती ( हिममस्त्यस्याः इति मतुप् दीर्घश्च ) ये ५ स्त्रीलिङ्ग नाम मकोय के हैं ॥

हयपुच्छी ( हयपुच्छमिव पर्णान्यस्याः इति ङीप् ) काम्बोजी ( कम्बोजे देशे भवा इति अण् ) माषपर्णी ( माषस्येव पर्णान्यस्याः इति ङीष् ) [8]महासहा ( महती सहा इत्याद्यम् ) ये ४ स्त्रीलिङ्ग नाम वनउड़द के हैं ॥

---

१. विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च । शल्येन रहितायां च प्रियायां लक्ष्मणस्य च । इति हेमचन्द्रः । २. अथाग्निशिखमुद्दिष्टं कुसुम्भे कुंकुमेऽपि च । लाङ्गलिक्याख्यौषधौ च योषिति । इति मेदनी । ३. फलिन्यग्निशिखायां स्त्री फलिन्यां फलिने त्रिषु । इति मेदिनी ।

४. ऋष्यगन्धा इत्यपि पाठः । ५. छगला । इति पृथक् नाम । छागे तु छगलश्छागी वृद्धदारकयोः स्त्रियाम् । इत्यनेकार्थकोशः । ६. वयस्था तु स्त्रियाँ ब्राह्मी गुडूच्यामलकीषु च । सूक्ष्मैलायां च काकोल्यां पथ्यायां तरुणे त्रिषु ॥ इति मेदिनी ।

७. हेमवर्णं पयस्तस्या हिमवद्भूमिसंभवा । सा नागजिह्विकाकारा तन्मूलं वणिजौषधम् । ८. महासहा माषपर्ण्यामम्लानेऽपि च योषिति । इति मेदिनी ।

**तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ॥१३९॥**
**बर्बरा कबरी तुङ्गी खरपुष्पाऽजगन्धिका ।**
**एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ॥१४०॥**
**चांगेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ।**
**सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ॥१४१॥**

---

[1]तुण्डिकेरी ( तुण्डं = चञ्चुरस्ति येषाम् इति ठन् तुण्डिकानीरयति, कर्मण्यण् ) रक्तफला ( रक्तं फलमस्याः इति टाप् ) बिम्बिका ( बिम्बीं कायति 'कै शब्दे' इति कः ह्रस्वश्च ) पीलुपर्णी ( पीलोरिव पर्णमस्याः इति ङीष् ) ये ४ स्त्रीलिङ्ग नाम कुन्दरू के हैं ॥

[2]बर्बरा ( वृणोति 'वृञ् वरणे' इति ष्वरच् । अनित्यः षितां ङीष् ) [3]कबरी ( वृणोतीति अच् ङीष्, कस्य शिरसो वरी इति ) [4]तुङ्गी ( तुञ्जति 'तुजि हिंसायाम्' इति अच् न्यङ्क्वादिः ) खरपुष्पा ( खरं पुष्पमस्याः इति ) अजगन्धिका ( अजस्येव गन्धोऽस्याः इति ) ये ५ स्त्रीलिङ्ग नाम पवई नामक शाक के हैं ॥ १३९.१।२ ॥

एलापर्णी ( एलाया इव पर्णान्यस्याः इति ङीष् ) [5]सुवहा ( सुवहति इति अच् ) रास्ना ( रासते 'रासृ शब्दे' इति निपातना० ) युक्तरसः ( युक्तो रसो यस्याः इति ) ये ४ स्त्रीलिङ्ग नाम एलापर्णी के हैं ॥ १४० ॥

चाङ्गेरी ( चाङ्गमीरयति 'ईर् गतौ' इति अण् ) चुक्रिका ( चुक्रमिवेति कन् ) [6]दन्तशठा ( शठति इति अच् शठा, दन्तानां शठा ) [7]अम्बष्ठा ( अम्बे तिष्ठदि इति कः षत्वञ्च ) अम्ललोणिका ( अम्ललेभ्य ऊना इति कन् पृषोदरादित्वात णः कन् च ) ये ५ स्त्रीलिङ्ग नाम नोनी शाक के हैं ॥ १४०.१।२ ॥

सहस्रवेधी ( सहस्रं वेधितुं शीलमस्य 'विध विधाने' इति णिनिः ) चुक्रः ( चुक्कयत्यनेन इति निपात० ) अम्लवेतसः ( अम्लश्चासौ वेतसश्च इति ) शतवेधी ( शतं वेधितुं शीलमस्य ) ये ४ पुंलिङ्ग नाम अमलबेंत के हैं ॥ १४१ ॥

---

१. तुण्डकेरी इत्यपि पाठः । प्रशस्तं तुण्डं तुण्डकम्, तुण्डकमीर्तं अण् । २. वर्वरः पामरे केशे चक्रले नीवृदन्तरे । फञ्जिकायां पुमान्, शाकभेदपुष्पभिदोः स्त्रियाम् । इति मेदिनी । वर्वरः पामरे केशविन्यासे नीवृदन्तरे । वर्वरः फञ्जिकायान्तु वर्वरा शाकपुष्पयोः । इति विश्वः ३. कवरं लवणाम्लयोः कवरी केशविन्यासशाकयोः । इति हैमः । ४. तुङ्गः पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत् । तुङ्गी प्रोक्ता हरिद्रायां वर्वरायामपीष्यते । इति हैमः ।

५. सुवहा शल्लक्येलापर्णीगोधापदीषु वीणायाम् । रास्नाशेफालिकयोः स्त्री सुखवाह्येऽन्यलिङ्गं स्यात् । इति मेदिनी । ६. स्याद्दन्तशठा जम्बीरे कपित्थे करमर्दके । नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यां च योषिति । इति मेदिनी । ७. अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च । अम्बष्ठाप्यम्ललोण्यां स्यात्पाठायूथिकयोरपि । इति मेदिनी ।

**नमस्कारी गण्डकाली समङ्गा खदिरेत्यपि ।**
**जीवन्ती जीवनी जीवा जीवनीया मधुःस्रवाः ॥१४२॥**
**कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ।**
**किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला ॥१४३॥**
**विमला सातला भूरिफेना चर्मकषेत्यपि ।**

---

नमस्कारी ( नमस्करणशीला इति णिनिः ) गण्डकाली ( गण्डेषु ग्रन्थिषु काली इति ) समङ्गा ( समङ्गति 'अगि गतौ' इति अच् ) [1]खदिरा ( खदति 'खद स्थैर्ये' इति निपा० ) ये ४ स्त्रीलिङ्ग नाम लजालू के हैं ॥ १४१.१।२ ॥

[2]जीवन्ती ( जीवति इति शतृ ङीष् ) [3]जीवनी ( जीव्यतेऽनया इति ल्युट् युच् वा ) [4]जीवा ( जीवयति इति अच् ) जीवनीय ( जीवनाय हिता इति छः ) [5] मधुः ( मन्यते 'मन' ज्ञाने' इत्युः धस्च ) स्रवा ( स्रवति 'स्रु गतौ' इति अच् ) ये ६ स्त्रीलिङ्ग नाम जीवन्ती के हैं ॥ १४२ ॥

कूर्चशीर्षः ( कूर्चं श्मश्रु, तद्वच्छीर्षमस्य इति ) [6]मधुरकः ( मधुर एव इति कन् ) [7]शृङ्गः ( शृणाति 'शॄ हिंसायाम्' इति गन् ह्रुट् ह्रस्वश्च ) ह्रस्वाङ्गः ( ह्रस्वान्यङ्गान्यस्याः इति [8]जीवकः ( जीवयति इति ण्वुल् ) ये ५ पुंलिङ्ग नाम जोवक के हैं ॥ १४२ १ २ ॥

किराततिक्तः ( किरातदेशाऽस्ति जन्मस्थानमस्य इति अच्, किरातश्चासौ तिक्तश्च ) भूनिम्बः ( भुवो निम्ब इव इति ) [9]अनार्यतिक्तः ( अनार्यप्रियश्चासौ तिक्तश्च इति शाकपार्थिवादिः ) ये ३ पुंलिङ्ग नाम चिरायता के हैं ।

[10]सप्तला ( सप्त लाति इति कः ) [11]विमला ( विगता मला यस्या इति ) सातला ( सातं सुखं लाति इति कः ) भूरिफेना ( भूरयः फेना यस्याः इति ) चर्मकषा ( चर्मणः कषा इति ) ये ५ स्त्रीलिङ्ग नाम सेहुँड़ के हैं ॥ १४३ १ २ ॥

---

१. खदिरा शाकभेदे स्त्री ना चन्द्रे दन्तधावने । इति मेदिनी ।

२. जीवन्ती जीवनीशम्योर्गुडूचीवन्द्योरपि । इति मेदिनी । ३. जीवनी जीवना चापि जीवन्ती-भेदयोः क्रमात् । इति मेदिनी । ४. जीवा जीवन्तिका मौर्वी वचाशिञ्जितभूमिषु । न स्त्री तु जीविते । इति मेदिनी । ५. मधुः पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति । इति मेदिनी । मधुश्रवा इत्येकम् नाम पाठा० । ६. स्याद्ध्रस्वाङ्गो मधुरको मुकुरश्चिरजीवकः, इति रभसः । ७. शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ भृङ्गं स्यात् कूर्चशीर्षके । स्त्री विषाण्यां स्वर्णमीनभेदयोर्ऋषभौषधौ । इति मेदिनी । ८. जीवकः प्राणके पीतसारक्षपणयोरपि । कूर्चशीर्षे च पुंसि स्यादाजीवे जीविका मता । त्रिपु सेविनि वृद्धयाशीर्जीविनोराहितुण्डिके । इति मेदिनी । ९. चिरातिक्तः अपि पाठान्तरम् । किरातश्चिरात्तिक्तश्च भूनिम्बहिमकावपि । इति रभसः १०. अथ सप्तला । वनमालाचर्मकषागुञ्जासु पाटलौ स्त्रियाम् । इति मेदिनी । ११. स्याद्विमला स्त्रियाम् । सातलायां भुवो भेदे निर्मले त्वभिधेयवत् । इति मेदिनी ।

**वायसोली स्वादुरसा वयस्थाऽथ मकूलकः ॥१४४॥**
**निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ।**
**अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ॥१४५॥**
**मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ।**
**अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ॥१४६॥**
**काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ।**

---

वायसोली ( वायसान् ओलण्डति 'ओलडि उत्क्षेपणे' इति डः, शकन्ध्वादिः ) स्वादुरसा ( स्वादू रसोऽस्याः इति ) वयस्था ( वयसि स्थीयतेऽनया इति कः ) ये ३ स्त्रीलिङ्ग नाम काकोली के हैं ॥

मकूलकः ( मङ्कते 'मकि मण्डने' इति ऊलच् कन्, पृषोदरादित्वादुत्वे 'मुकूल' इत्यपि ) [१]निकुम्भः ( कुं भूमिं बिभर्ति इति खच्, नियतः कुम्भः ) दन्तिका ( दाम्यति 'दमु उपशमे' इति तन् स्वार्थे कन् च ) प्रत्यक्श्रेणी ( प्रत्यञ्ची श्रेण्यस्याः इति ) उदुम्बरपर्णी ( उदुम्बरस्येव पर्णान्यस्याः इति ङीष् ) ये ५ नाम दन्तीनामक औषध के हैं । जिनमें १–२ पुं० और ३–५ स्त्रीलिङ्ग हैं ॥ १४४ १।२ ॥

अजमोदा ( अजं मोदयति इति ण्यत्, अजादित्वात् टाप् च ) [२]उग्रगन्धा ( उग्रो गन्धोऽस्याः इति ) ब्रह्मदर्भा ( ब्रह्मणा दृभ्यते 'दृभी ग्रन्थे' इति घञ् 'कर्तृकरणे कृता' इति समासश्च ) यवानिका ( दुष्टो यवः इति ङीषानुकौ, इवार्थे स्वार्थे वा कन्, समकारपाठे यमेनानिति यमनिका. अनधातोण्वुल् ) ये ४ स्त्रीलिङ्ग नाम अजवाइन के हैं ॥

पौष्करे मूले इति सम्बन्धः–[३] पुष्करम् ( पुष्णाति पुष्यति वा 'पुष पुष्टौ' इति करन् ) काश्मीरम् ( कश्मीरेषु भवम् इति अण् ) पद्मपत्रम् ( पद्मस्येव पत्रमस्य इति ) ये ३ नपुंसक नाम पुष्करमूल के हैं ॥ १४५ १।२ ॥

[४]अव्यथा ( न व्ययते इति अच् ) अतिचरा ( अतिचरति इति अच् ) पद्मा ( पद्यते इति मन् ) चारटी ( चारयतिं इत्यटन् ) पद्मचारिणी ( पद्मे चरितुं शीलमस्याः इति णिनिः ( ये ५ स्त्रीलिंग नाम स्थलकमलिनी के हैं ॥ १४६ ॥

काम्पिल्यः ( काम्पिलाया अदूरभवः इति ण्यः ) कर्कशः ( करे कशति 'कश शब्दे' इति पचाद्यच् शकन्ध्वादिः ) [५] चन्द्रः ( चन्दति 'चदि आह्लादने' रक् ) [६]रक्तांगः ( रक्तमंगमस्य इति ) [७]रोचनी ( रोचते 'रुच दीप्तौ' इति ल्युट् ) ये ५ नाम कबीला के हैं, जिनमें १–४ पुं० शेष स्त्री हैं ॥

---

१. निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ । इति मेदिनी । २. उग्रगन्धा वचा क्षेत्रयवान्योश्छिक्किकौषधौ । इति हैमः । ३. पुष्करं पङ्कजे व्योम्नि पयः करिकराग्रयोः । औषधिद्वीपविहगतीर्थरागोरगान्तरे । पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च । इति विश्वः ।

४. अव्यथो निर्व्यथे सर्पे चारटीपथ्ययोः स्त्रियाम् । इति विश्वमेदिन्यौ ।

५. चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु । इति मेदिनी ।

६. रक्ताङ्गस्तु महीसुते कम्पिल्ले स्त्री तु जीवन्त्यां क्लीबं विद्रुमधीरयोः । इति मेदिनी ।

७. रोचनी कर्कशे स्त्रियाम् । इति मेदिनी । रचनी इति वा पाठः ।

प्रपुन्नाडस्त्वेडगजो ददुघ्नश्चक्रमर्दकः ॥१४७॥
पद्माट उरणाख्यश्च पलाण्डुस्तु सुकन्दकः ।
लतार्कदुर्द्रुमौ तत्र हरितेऽथ महौषधम् ॥१४८॥
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ।
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ॥१४९॥

---

प्रपुन्नाडः ( पुमांसं नाडयति 'भ्रंशयति' इति कर्मणि अण् प्रगतः पुन्नाडः ) एडगजः ( एडे स्वप्ने गजति शब्दायते अच् ) दद्रुघ्नः ( दद्रुं हन्ति इति टक् ) चक्रमर्दकः ( चक्रं दद्रुं मृद्नाति 'मृद क्षोदे' अस्मात् कर्मण्यण् ) पद्माटः ( पद्ममिव पद्मां वा पद्मसमूहं वाऽटति इति अण् ) उरणाख्यः ( उरणस्य मेषस्याख्याऽस्य इति अच् ) ये ६ पुंलिङ्ग नाम चकवढ़ के हैं।

पलाण्डुः ( पलति = रक्षति बाहुलकाद् आण्डुप्रत्ययः ) सुकन्दकः ( शोभनमतीव वा कन्दयति भक्षकजातिभ्रंशकत्वात् 'कदि रोदने' अस्मात् अच् स्वार्थे कन् ) ये २ पुंलिङ्ग नाम प्याज के हैं ॥ १४७ १।२ ॥

तत्र = पलाण्डौ हरिते इति सम्बन्धः । लतार्कः ( लतासु अर्च्यते 'अर्क स्तवने' इति घञ् ) दुर्द्रुमः ( दुष्टो द्रुमः इति ) ये २ पुंलिङ्ग नाम हरे प्याज के हैं ॥

[1]महौषधम् ( महच्च तदौषधं च इति ) लशुनम् ( अश्नाति 'अश भोजने' अशेर्लशादेशे उनन् प्रत्यये च ) [2]गृञ्जनम् ( गृञ्जयते = कथ्यते 'गृजि शब्दे' इति ल्युट् ) [3]अरिष्टं ( न रिष्टम् = अशुभमस्मात् इति ) महाकन्दः ( महत् कन्दमस्य इति ) रसोनकः ( रसे आस्वादने ऊन्यते पातकहेतुकत्वात्, 'ऊन परिहाणे अस्मात् घञ् कन् च ) ये ६ नाम लहसुन के हैं, जिनमें १–२ नपुं० शेष ४ पुं० हैं।

पुनर्नवा ( पुनरभीक्ष्णं नवा । नूयते इति अप् ) शोथघ्नी शोथं हन्ति इति टक् ङीप् च ) ये २ स्त्रीलिङ्ग नाम गदहपूर्ना के हैं ॥

[4] वितुन्नम् ( विगतं तुन्नं = व्यथनमस्मात् इति ) सुनिषण्णकम् ( सुष्ठु निषण्णमस्मात् इति ) ये २ नपुंसक नाम विसखपरिया के हैं ॥ १४९ ॥

---

१. महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च । इति मेदिनी । २. गृञ्जनम् । विषदिग्धपशोर्मांसे क्लीबं, पुंसि रसोनके । इति मेदिनी । लसुनं गृञ्जनं चैव पलाण्डुकवकानि च । वृत्ताकारालिकालाबुजातीया जातिदूषितम् । इति । श्वेतकन्दः पलाण्डुविशेषो गृञ्जनम् । लसुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लतार्कश्चापराजिता । गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः । इति सुश्रुतेन उक्तत्वात् गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना । दीर्घनालाग्रपत्रत्वात् भिद्यतेऽसौ पलाण्डुः ॥ ३. अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे। शुभे मरणचिह्ने च । इति मेदिनी । ४. वितुन्नं सुनिषण्णे च शैवाले च नपुंसकम् इति । मेदिनी ।

स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ।
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।
वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ॥१५०॥
विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ।
मार्कवो भृङ्गराजः स्यात् काकमाची तु वायसी ॥१५१॥

---

वातकः ( वातं करोति इति डः ) [१]शीतलः ( शीतं लाति इति कः 'शीतलवातक' इत्यपि नाम ) [२]अपराजिता ( न पराजिता इति ) शणपर्णी ( शणः पर्णान्यस्याः इति ङीष् । शणशब्दः शणपर्णासदृशे लाक्षणिकः ) ये ४ नाम पटुआ के हैं, जिनमें प्रथम और द्वितीय पुं० शेष स्त्रीलिङ्ग हैं ।

पारावताङ्घ्रिः ( पारावत इवांघ्रिरस्याः इति ) कटभी ( कटवद्भाति इति डः ङीष् च ) पण्या पण्यते इति यत् ) ज्योतिष्मती ( ज्योतिरस्यस्याः इति मतुप् ङीप् च ) लता ( लतति 'लतिः' इति अच् ) ये ५ स्त्रीलिङ्ग नाम मालकांगनी के हैं ॥ १४९ ॥२ ॥

[३] वार्षिकम् ( वर्षासु भवं जातं वा इति ठक् ) [४]त्रायमाणा ( त्रायते इति शानच् चानश् वा ) त्रायन्ती ( त्रा त्राणम् सम्पदादिः, त्रा अयति इति शतृ ङीष् तुम् च ) बलभद्रिका ( बलेन भद्रा इति कन् ) ये ५ नाम त्रायमाणा के हैं, जिनमें १ नपुंसक और २–५ स्त्रीलिङ्ग हैं ॥ १५० ॥

विष्वक्सेनप्रिया ( विष्वक्सेनस्य प्रिया इति ) गृष्टिः[५] ( गृह्णाति इति क्तिच् पृषोदरादिः ) [६]वाराही ( वराहस्येयम् इति अण् ) [७]बदरा ( बदति 'बद स्थैर्ये' इति बाहुलकादरन् ) ये ४ स्त्रीलिङ्ग नाम वाराहीकन्द के हैं ॥

[८]मार्कवः ( मारयति इति क्विप्, कूयते इति अप् मार् चासौ कवश्चेति । 'मारि केशशौक्ल्यनाशने' ) [९]भृङ्गराजः ( भृङ्ग इव राजते 'राजृ दीप्तौ इति अच् ) ये २ पुंलिङ्ग नाम भृङ्गराज के हैं ॥

काकमाची ( काकान् मञ्चते 'मचि धारणोच्छ्रायपूजनेषु' इति अण् आगमशास्त्रस्यानित्यत्वान्न नुम् ) [१०]वायसी ( वायसानामियम् इति अण् ङीप् ) ये २ स्त्रीलिंग नाम मकोय के हैं ॥ १५१ ॥

---

१. शाणपर्णी शीतलवातकः इति धन्वन्तरिः । २. अपराजित ईशा ज्येष्ठयन्तरे नाजिते त्रिषु । गिरिकर्णी जया दुर्गाऽशनपर्णीषु योषिति' इति मेदिनी ।

३. वार्षिकं त्रायमाणायां क्लीबं वर्षाभवे त्रिषु । इति मेदिनी । ४. त्रायमाणा वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत् इति मेदिनी । ५. अथ गृष्टिः सकृत्प्रसूतगोबदरयोः स्त्रियाम् । इति मेदिनी । घृष्टिः इति पाठान्तरम् । घृष्टिः स्त्री घर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ । इति मेदिनी ।

६. वाराही मातृभेदे स्याद्विष्वक्सेनप्रियौषधौ । इति मेदिनी ।

७. बदरा ( वदरा ) गृष्टिकार्पास्योरेलापर्ण्यां स्त्रियां, पुमान् । कार्पास्यास्थिन, बदरी कोले क्लीबं तु तत्फले । इति मेदिनी ।

८. मारि केशशौक्ल्यनाशने । ९. अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे । इति मेदिनी । भृङ्गरजः इत्यपि पाठः सान्तोऽदन्तोऽदन्तोऽपि । भृङ्ग इव रजोऽस्येति विग्रहः । स्यान्मार्कवो भृङ्गरजः भृङ्गराज. सुजागरः । इति रभसात् । १०. काकोदुम्बरिकायां च काकमाच्यां च वायसी । इति मेदिनी ।

शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ।
अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ॥१५२॥
तस्यां कटंभरा राजबला भद्रबलेत्यपि ।
जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥१५३॥
संस्पर्शाऽथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ।
कर्चूरोऽपि पलाशोऽथ कारवेल्लः कठिल्लकः ॥१५४॥

---

शतपुष्पा ( शतं पुष्पाण्यस्याः इति टाप् ) सितच्छत्रा ( सितं बद्धं शुभ्रं वा छत्रमस्याः इति समासः ) अतिच्छत्रा ( छत्रमतिक्रान्ता इति समास ) [1]मधुरा ( मधुरस्त्यस्या इति रः ) [2]मिसिः ( मस्यति 'मसी परिणामे' इति इन् पृषोदरादित्वात्साधुः ) अवाक्पुष्पी ( अवाञ्चि पुष्पाण्यस्याः इति ङीष् ) [3]कारवी ( के आरौति इति पचाद्यच् ) ये ७ स्त्रीलिंग नाम सौंफ के हैं ॥

[4]सरणा ( सरति 'सृ गतौ' इति युच् ) [5]प्रसारिणी ( प्रसार्यतेऽङ्गमनया इति ल्युट् ) कटम्भरा ( कटं विभर्ति इति खच् ) राजबला ( बलानां बलप्रदानां राजेव इति राजदन्तादिः ) भद्रबला ( भद्रं बलमस्याः इति ) ये ५ स्त्रीलिंग नाम आकाशबेल के हैं )

[6]जनी ( जायते आरोग्यमनया इति इण् , जनिवध्योश्चेति वृद्धिनिषेधः ङीष् च ) [7]जतूका ( जायते इति उलूकादयश्चेति साधुः । जतुशब्दात् कन् जतुका इत्यपि ) रजनी ( रज्यतेऽनया 'रञ्ज रागे' इति क्युन् कित्वान्नलोपः गौरादिः ) जतुकृत् ( जतु करोति इति क्विप् ) चक्रवर्तिनी ( चक्रं चक्रमिव वा वर्तितुं शीलमस्याः इति णिनिः ) संस्पर्शा ( सम्यक् स्पृशति स्पृश्यते वा इति घञ् पचाद्यच् वा ) ये ६ स्त्रीलिंग नाम चकवत के हैं ॥ १५२–१५३ ॥

शटी ( शटति इति गौरादित्वात् ङीषि ) गन्धमूली ( गन्धं मूलमस्याः इति ङीष् ) षड्ग्रन्थिका ( षड् = बहवो ग्रन्थयोऽस्याः इति ) [8]कर्चूरः ( कर्चति 'कर्चं गतौ' खर्जादित्वात् ऊरः ) [9]पलाशः ( पलमश्नाति 'अश् भोजने' इति कर्मण्यण् । पले मांसे आशा यस्य वा ) ये ५ नाम आमाहल्दी के हैं । जिनमें १–३ स्त्री ४–५ पुं० हैं ।

[10]कारवेल्लः ( कारं वेल्लति 'वेल्ल चलने' इति अण्) [11]कठिल्लकः ( कठति 'कठ शोके' इति इल्लः

---

१. मधुरा शतपुष्पायां मिश्रेयानागरीभिदोः । इति मेदिनी । २. मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः । इति मेदिनी । ३. कारवी मधुरादीप्यत्वक्पत्री कृष्णजीरके । इति मेदिनी ।

४. सरणा सरणी चार्वी कटंभरा महाबला । इति रुद्रः । सरणी इत्यपि पाटः ।

५. 'सारणी' 'सारिणी' इत्यपि पाठः । सारणो राक्षसान्तरे । रुग्भेदे ना प्रसारण्यां स्वल्पनद्यां च सारिणी । इति मेदिनी । ६. जनी सीमन्तिनीवध्वीरुत्पत्तावोषधीभिदि । इति मेदिनी ।

८. रजनी नीलिनी रात्रिहरिद्राजतुकासु च । ७. कर्चूरः स्यात् पुमान् शट्यां सुवर्णे तु नपुंसकम् । इति मेदिनी । ९. पलाशः किंशुकः शटी । हरिद्वर्णो राक्षसश्च पलाशं छदने मतम् । इति विश्वमेदिन्यौ । १०. कारो वधे निश्चये च बलौ यत्ने यतावपि । ( तुषारशैलेऽपि पुमान् स्त्रियां दूत्यां प्रसेवके । सुकर्णकारिकायां च बन्धनागारबन्धयोः ) ॥ इति मेदिनी । ११. कठिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयोः ) । इति विश्वमेदिन्यौ ।

सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः।
कूष्माण्डकस्तु कर्कारुरीर्वारुः कर्कटी स्त्रियौ ॥१५५॥
इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे।
चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी ॥१५६॥

---

स्वार्थे कन् च ) [1]सुषवी ( सु सुवति 'पू प्रेरणे' इति अच्, षत्वं ङीष् च ) ये ३ नाम करैला के हैं, जिनमें १–२ पुंलिंग और ३य स्त्रीलिंग हैं।

[2]कुलकं ( कोलति इति कः ) [3]पटोलः ( पटति 'पट गतौ' इत्योलच् ) तिक्तकः ( तिक्त एव इति कन् ) [4]पटुः ( पाटयति इति उः पटिरादेशश्च ) ये ४ नाम परवल के हैं, जिनमें १ नपुंसक २–४ पुं० हैं।

[5]कूष्माण्डकः ( कु ईषद् ऊष्मा अण्डेषु बीजेषु यस्य इति ) कर्कारुः ( कर्कं शुक्लवर्णमृच्छति इति बाहुलकादुण् ) ये २ पुंलिङ्ग नाम कोहड़ा के हैं।

[6]ईर्वारुः ( ईरं वृणोति इति बाहुलकादुण् ) कर्कटी ( करं कटति 'कटे वर्षादौ' इति इन् शकन्ध्वादिः, ङीष् वा ) ये २ स्त्रीलिंग नाम ककड़ी के हैं ॥ १५४–१५५ ॥

[7]इक्ष्वाकुः ( इक्षुमाकरोति इति मितद्र्वादित्वात् डुः ) कटुश्चासौ तुम्बी च इति ) ये २ स्त्रीलिंग नाम तोता कद्दू के हैं ॥

[8]तुम्बी ( तुम्बति रुचिम् 'तुबि अर्दने' इति अच् गौरादित्वात् ङीष् ) *अलाबूः ( न लम्बते जले इत्यूः णिश्च मलोपश्च ) ये २ स्त्रीलिंग नाम लौकी के हैं।

[9]चित्रा ( चीयते इति क्त्रः ) [10]गवाक्षी ( गां भूमिमक्ष्णोति 'अक्षू व्याप्तौ' इति कर्मण्यण् ) गोडुम्बा ( गां भुवं तुम्बति इति टाप् पृषोदरादित्वात्साधुः ) ये ३ स्त्रीलिङ्ग नाम जेठ महीने में होने वाली ककड़ी के हैं ॥

[11]विशाला ( वि शलति = चलति इति णः टाप् ) इन्द्रवारुणी ( इन्द्रं वारयति इति बाहुलकात् ण्यन्तादपि उनन् ङीप् च ) ये दो स्त्री० नाम इनारुन् के हैं ॥ १५६ ॥

---

१. सुषवी कृष्णजीरके। कारवेल्ले च नीरे च। इति हैमः। २. कुलकं तु पटोले स्यात् संवद्धश्लोक संहतौ। पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते ॥ इति मेदिनी। ३. पटोलं वस्त्रभेदे, नौषधौ ज्यौत्स्न्यां तु योषिति। इति मेदिनी। ४. पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत्। पटोले तु पुमान् क्लीबे छत्रालवणयोरपि ॥ इति मेदिनी। ५. कूष्माण्डयु मायां स्त्री, पुंसिः कर्कारौ च गणान्तरे। इति मेदिनी। ६. तुर्यस्वरादिर् ईर्वारुः कर्कट्यां पठ्यते बुधैः। ह्रस्वादिरपि। उन्मत्तो धुस्तुर इर्वारुः कर्कटिः स्यात्। इति रत्नकोशात् 'इर्वारुः'। उर्वारुकमिव बन्धनादिति श्रुतेः पृषोदरादित्वेनादेरुत्वे 'उर्वारुः' इति च पाठः। ७. इक्ष्वाकुः कटुतुम्ब्यां स्त्री सूर्य्यवंशनृपे पुमान्। इति मेदिनी। ८. अलाम्बुस्तु पिण्डफला तुम्बिस्तुम्बी महाफला। तुम्बा तु वर्तुलाऽलाबू निम्बचूर्णा तु लाबुका। इति वाचस्पतिः। * अलाबूस्तुम्बकः प्रोक्तः। इति चन्द्रः। ९. चित्राखुपर्णी गोडुम्बासुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् ॥ इति मेदिनी। १०. गवाक्षी त्विन्द्रवारुण्यां गवाक्षो जालके कपौ। इति हैमः। ११. विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति। नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत् ॥ इति मेदिनी।

अर्शोघ्नः सूरणः कन्दो गण्डीरस्तु समष्ठिला ।
कलम्ब्युपोदिकाऽस्त्री तु मूलकं हिलमोचिका ॥१५७॥
वास्तूकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ।
सहस्रवीर्याभार्गव्यो रुहाऽनन्ताऽथ सा सिता ॥१५८॥
गोलोमी शतवीर्या च गण्डाली शकुलाक्षका ।

---

अर्शोघ्नः ( अर्शांसि हन्ति इति टक् ) सूरणः ( शूर्यते इति युच् ) [1]कन्दः ( कन्दति इति अच् ) ये तीन पुं० नाम सूरन के हैं ।

[2]गण्डीरः ( गण्डति 'गडि वदनैकदेशे' धातोः बाहुलकादीरन् ) समष्ठिला ( सम्यगष्ठिला बीजं यस्याः ) ये दो नाम गांडर शाक के हैं, जिनमें प्र० पुं०, द्वि० स्त्रीलिंग हैं ।

[3]कलम्बी ( के जले लम्बते अवस्र सनार्थकलविघातोरच् गौरादिः ) यह एक स्त्री० नाम करेमू शाक का है ।

उपोदिका ( उप = अधिकम् उदकम् अस्याम् इति उदकस्योदः कप् टाप् इत्वं च ) यह एक स्त्री० नाम पोई का है ।

मूलकम् ( मूलतीति क्वुन् ) यह एक पुं०, न० नाम मूली का है ।

हिलमोचिका ( हिलतीति कः मोचयतीति ण्वुल्, हिला चासौ मोचिका चेति आपो ह्रस्वः ) यह एक स्त्री० नाम हिलसाल का हैं ॥ १५७ ॥

वास्तूकम् ( वसति देहे उलूकादयश्चेति साधुः ) यह एक न० नाम बथुआ साग का है ।

*कलम्बाद्याः पञ्च शाकभेदाः स्युरिति सम्बन्धः । दूर्वा ( दूर्वति इति अच् दीर्घश्च ) [4]शतपर्विका ( शतं पर्वाण्यस्याः इपि कप् ) सहस्रवीर्या ( सहस्रं वीर्याण्यस्याः इति ) [5]भार्गवी ( भृगोरियम् इति ) रुहा ( छिन्नापि रोहति इति कः ) [6]अनन्ता ( न अन्तो यस्याः इति ) ये ६ स्त्रीलिंग नाम दूब के हैं ॥ १५८ ॥

[7]गोलोमी ( गोलोमसु जाता इत्यण् ) शतवीर्या ( शतं वीर्याण्यस्याः इति ) गण्डाली ( गण्डति इति बाहुलकादालन् ) शकुलाक्षका ( शकुलस्य मत्स्यस्येवाक्षि यस्य इत्यच् स्वार्थे कन् च ) ये ४ स्त्रीलिंग नाम सफेद दूब के हैं, इनमें चौथा पुंलिंग भी है ।

---

१. कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान् । इति मेदिनी । २. गण्डीरो ना समष्ठिला इति अमरमाला । ३. कलम्बी शाकभेदेऽपि कदम्बशरयोः पुमान् । इति मेदिनी । कलम्बी तु शतपर्वाकलम्बूर्वासु वीरुधः । इति वाचस्पतिः कलम्बी शाकभेदेऽपि । *शाकाख्यं पत्रपुष्पादि इत्यत आरभ्य—मण्डूकपर्णी शालञ्चया चिल्लिका चाप्युपोदिका । चाङ्गेरी हिलमोचा च कलम्बी शाकजातयः ॥ इति माला । ४. शतपर्विका तु दूर्वायां वचायामपि योषिति । इति मेदिनी । ५. भार्गवी पार्वतीश्रियोः । दूर्वायाम् । इति मेदिनी । ६. अनन्ता च विशल्यायां शारिवादूर्वयोरपि । कणा दुरालभापथ्या पार्वत्यामलकीषु च ॥ विश्वम्भरागुडूच्योः स्यादनन्तं सुरवर्त्मनि । अनन्तः केशवे शेषे पुमान् निरवधौ त्रिषु ॥ इति मेदिनी । ७. गोलोमी श्वेतदूर्वायां स्याद् वचा भूतकेशयोः । इति मेदिनी ।

कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥१५९॥
स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा ।
वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥१६०॥
शतपर्वा यवफलो वेणुमस्करतेजनाः ।
वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥१६१॥
ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः ।

---

[1]कुरुविन्दः ( कुरून् विन्दति इति शः ) मेघनामा ( मेघनामानि नामान्यस्य इति ) मुस्ता ( मुस्तयति संघीभवतीति अच् , ण्वुल्-पक्षे मुस्तकम् ) ये ४ नाम मोथा के हैं, जिनमें १-२ पुंलिंग, ३ स्त्री, ४ न० पुं० हैं ॥ १५९ ॥

[2]भद्रमुस्तकः भन्दते इति निपा० भद्रः, स चासौ मुस्तकश्चेति भद्रमुस्तकम् नपुंसकमपि ) [3]गुन्द्रा ( गां जलं द्राति पृषोदरादिः ) ये दो नाम नागरमोथा के हैं, जिनमें प्रथम पुं० और द्वितीय स्त्रीलिंग हैं ।

[4]चूडाला ( चूडाऽस्त्यस्याः इति लच् ) चक्रला ( चक्रं लाति इति क. ) उच्चटा ( उच्चटतीति अच् अन्तर्भावितण्यर्थः ) ये ३ स्त्री० नाम मोथा विशेष के हैं ।

[5]वंशः ( उश्यते घञ् , संज्ञापूर्वकविधेरनित्यत्वान्न वृद्धिः, संख्या वंश्येन इति निर्देशान् नुमागमः ) त्वक्सारः ( त्वचि सारोऽस्य ) कर्मारः ( कर्म क्रियाम् ऋच्छतीति अण् ) त्वचिसारः ( सप्तम्या अलुक् विकल्पेन, तेन त्वक्सारोऽपि ) तृणध्वजः ( तृणेषु ध्वज इव ) शतपर्वा ( शतं पर्वाण्यस्य ) [6]यवफलः ( यव इव फलान्यस्य ) [7]वेणुः ( वेणतीति उः ) मस्करः ( मस्कते अनेन इति अरः ) तेजनः ( तेजयति शस्त्रमग्निं वेति ल्युः ) ये १० पुं० नाम बाँस के हैं ॥ १६०.१/२ ॥

ये वेणवः अनिलेन = पवनेन उद्धताः = ताडिताः स्वनन्ति = शब्दायन्ते ते कीचकाः स्युरिति सम्बन्धः । [8]कीचकः ( कीच इति अव्यक्तं कायति = शब्दायते इति मूलविभुजादित्वात् कः ) यह एक पुं० नाम उस बाँस का है जिसके छिद्रों में हवा के भरने से शब्द होने लगता है ॥ १६१ ॥

[9]ग्रन्थिः ( ग्रन्थते इति इन् ) [10]पर्व ( पर्वतीति कनिन् ) परुस् ( पिपर्तीति उस् बाहुलकात्, उप्रत्यये उदन्तोऽपि [11]परुशब्दः ) ये ६ नाम वंशादि के पोर ( ग्रन्थि ) के हैं जिनमें प्रथम पुं० शेष २ नं० स्त्री० हैं ।

---

१. कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान् । इति विश्वमेदिन्यौ । २. भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे । इति रुद्रः । ३. गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके । इति मेदिनी । ४. चूडाला तूच्चटायां स्त्री चूडावति च वाच्यवत् । इति मेदिनी । ५. वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च । इति विश्वः । ६. यवफलो मांसिकायां कुटजत्वचिसारयोः । इति हेमः । ७. वेणुर्नृपान्तरे । त्वक्सारेऽपि च पुंसि स्यात् इति मेदिनी ।

८. कीचको दैत्यभिद्वाताहतसस्वनवंशयोः । इति मेदिनी । ९. ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः । इति मेदिनी । १०. पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ॥ इति मेदिनी । ११. मज्जा सारो, ग्रन्थिः परुः, परागः कुसुमरेणुः । इति रत्नकोशः

**नडस्तु धमनः पोटगलोऽथो काशमस्त्रियाम् ॥१६२॥**
**इक्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः ।**
**रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ॥१६३॥**
**स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ।**
**अभयं नलदं सेव्यममृणालं जलाशयम् ॥१६४॥**

---

[1]गुन्द्रः ( गोदते इति क्रीडार्थकगुदधातोर्बाहुलकात् रक्, पृषोदरादित्वात् साधुः ) तेजनकः ( तेजयति चौरादिकतिज-धातोर्ण्वुल् ) [2]शरः ( शृणातीति अच्, दन्त्यादिश्च ) ये ३ पुं० नाम सरकण्डा के हैं )

नडः ( नडतीति अच् ) [3]धमनः ( धमतीति युच् ) [4]पोटगलः ( पोटेन = संश्लेषेण गलति = अक्षि इति अच् ) ये ३ पुं० नाम नरकट के हैं।

[5]काशः ( म् ) ( काशते इति अच् ) [6]इक्षुगन्धा (इक्षुवद् गन्धोऽस्याः अनित्यत्वान्नेत्वम् ) पोटगलः, ये ३ नाम काश नामक घासविशेष के हैं, जिनमें प्रथम पुं० न०, द्वि० स्त्री० और तृ० पुं० है।

बल्वजाः ( वलते = संवृणोति क्विप् वल्, वजति = गच्छति अच् वज, वल् चासौ वजश्च ) यह एक पुं० नित्य बहुवचनान्त नाम वगई का है। 'एको वल्वजः' इति भाष्यप्रयोगात् एकवचनान्तोऽपि।

[7]रसालः ( रसेनालति = भूषयति अच् ) इक्षुः ( इष्यते इति क्सुः ) ये दो पुं० नाम ऊख के हैं।

[8]पुण्ड्रः ( पुण्ड्यन्ते इति 'पुडि खण्डने' धातोः रक्, अणि कृते पौण्ड्रः ) कान्तारकः ( कान्तं = रसम् ऋच्छति इति अण् स्वार्थे कन् च ) ये दो पुं० नाम ईख के विशेष भेद के हैं। आदिपद से 'इक्षुः कर्कोटको वंशः कान्तारो वेणुनिःसृतः। इक्षुरन्यः पौण्ड्रकस्च रसालः सुकुमारकः' का संग्रह है।१६२-१६३।

[9]वीरणम् ( वीं पक्षिणमीरयतीति युच् ) वीरतरम् ( अतिशयितं वीरम् इति तरप् ) ये दो नपुं० नाम गांडर तृणविशेष के हैं।

अस्य वीरणस्य मूले—उशीरम् (उश्यते इतीरन् ) [11]अभयम् (न भयमस्मात्) [12]नलदम् ( नलं = गन्धं ददाति इति कः ) [13]सेव्यम् ( सेवितुमर्हम् यत् ) अमृणालम् ( मृणालमिव सादृश्येऽत्र नञ् )

---

१. गुन्द्रस्तेजनके स्त्री तु प्रियंगौ भद्रमुस्तके। इति मेदिनी। २. शरस्तेजनके बाणे दध्यग्रे ना शरं जले। इति मेदिनी। शरस्तु मुञ्जो बाणाख्यो गुन्द्रस्तेजनकः शरः। इति वाचस्पतेर्दन्त्यादिश्च।

३. धमनो नले। क्रूरे भस्त्राध्मापके च धमनी कंधरा शिरा। हरिद्रा च। इति हैमः।

४. अथ पोटगलः पुंसि नले च काशमत्स्ययोः। इति मेदिनी।

५. काशस्तृणे रोगभेदे। इति हैमः। काशी काशश्च तृणवाचकः, काशी वाराणसी पुरी। इति मेदिनी। ६. इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे। इति मेदिनी। ७. रसालं सिल्हके वाले रसालश्चेक्षुचूतयोः। इति मेदिनी। ८. पुण्ड्रकः सेव्यः पौण्ड्रकाऽतिरसो मधुः इति वाचस्पतिः। पुण्ड्रं दैत्यविशेषेक्षुभेदयोरतिमुक्तकः। इति मेदिनी। ९. स्याद् वीरणे वीरतरं वीरश्रेष्टे शरे च ना। इति मेदिनी। १०. अभया स्त्री हरीतक्यामुशीरे च नपुंसकम्। निर्भये वाच्यलिङ्गः स्यात्। इति मेदिनी। ११. नलदं स्यात्पुष्परसोशीरमांसीषु न द्वयोः। इति मेदिनी। १२. सेव्यं क्लीवमुशीरे स्यात् सेवार्हे पुनरन्यवत्। इति मेदिनी।

लामज्जकं लघुलयमवदाहेष्टकापथे ।
नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥१६५॥
अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ।
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥१६६॥
छत्राऽतिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ।

---

[1]जलाशयम् ( जले आशेते इति अच् ) [2]लामज्जकम् ( लाति दोषान् अच्, मज्जतीति मज्जा ला मज्जा सारोऽस्य, कन् च ) लघुलयम् ( लघु लीयते = श्लिष्टो भवति इति अच् ) अवदाहम् ( अवदीयते दाहो अनेन ) इष्टकापथम् ( इष्टं कापथमस्य, इष्टकायामपि पन्था यस्य वा ) ये १० नाम खस के हैं जिनमें प्रथम पुं० नपुं० है और शेष ९ नाम नपुंसक हैं ॥ १६४.१।२ ॥

नलादयः ( नल आदयो येषां ते ) तृणम् ( तृण्यते इति घञ् संज्ञापूर्वकत्वान्न गुणः घञर्थे कप्रत्ययेऽपि परिगणनान्न ) गर्मुत् ( गिरति = निगरति इति ग्रीमुट् केति उति प्रत्यये मुट् च ) [3]श्यामाकः ( श्यायते इति पिनाकादयश्चेति साधुः, यद्वा श्यामं वर्णं अकति = गच्छति इति अण् ) ये २ पुं० नाम तृण जाति धान्य के हैं । प्रमुख शब्द से नीवार का संग्रह है । कोद्रवादि का संग्रह करने से उसमें भी हविष्यत्व आजायगा ॥ १६५ ॥

[4]कुशम् ( कौ शेते इति डः ) [5]कुथः ( कुथ्यते = पूतीभवति इति कः ) दर्भः ( दृभ्यते = ग्रन्थभवति इति घञ् ) [6]पवित्रम् ( पूयतेऽनेन इति इत्रः ) ये ४ नाम कुशा के हैं जिनमें प्रथम न० पुं०, और चतुर्थ नपुं० हैं ।

[7]कत्तृणम् ( कुत्सितं तृणम् कोः कादेशः ) [8]पौरम् ( पुरे भवम् इति अण् ) [9]सौगन्धिकम् (शोभनो गन्धः सुगन्धः, सुगन्धः प्रयोजनमस्येतिठञ् ) [10]ध्यामम् (ध्यायन्ते पशुभिः इति बाहुलकान्मक् ) देवजग्धकम् ( देवैरद्यते स्म इति क्तः ) [11]रौहिषम् ( रोहतीति टिषच्, वृद्धिश्च ) ये ६ नपुंसक नाम रोहिषनामक सुगन्धित घास के हैं ।

[12]छत्रा ( वदति = अपवृणोति इति त्रन् ) अतिच्छत्रः ( अतिक्रान्तश्छत्रम् ) पालघ्नः ( पालं = क्षेत्रम् हन्तीति टक् ) ये ३ नाम जल में होने वाले तृण विशेष के हैं जिनमें प्रथम स्त्री०, शेष पुं० हैं ।

मालातृणकम् ( मालाकाराणि तृणान्यस्य ) भूस्तृणम् ( भुवस्तृणम् पारस्करादित्वात् सुट् ) ये दो

---

१. जलाशयो जलाधारे स्यादुशीरे नपुंसकम् । २. लामज्जकं सुनालः स्यादमृणालं लयं लघु । इति सुश्रुतः । ३. श्यामाकः श्यामकोऽपि च । इति हलायुधः । तत्र मूलविभुजादित्वात पररूपम् । ४. कुशो रामसुते द्वीपे पापिष्ठे योक्त्रमत्तयोः । कुशी फाले कुशी दर्भे कुशा वल्गा कुशं जले ॥ इति हैमः । ५. कुथः स्त्रीपुंसयोर्वर्णे कम्बले पुंसि बर्हिषि । इति मेदिनी । ६. पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत् । इति मेदिनी ।

७. कत्तृणं तृणभित्पुंस्न्योः । इति मेदिनी । ८. पौरं त्रिषु पुरोद्भूते कत्तृणे पुंनपुंसकम् । इति मेदिनी । ९. सौगन्धिको गन्धवणिक् सौगन्धिकं तु कत्तृणे । गन्धोत्पले पद्मरागे कल्हारे । इति हैमः । १०. ध्याम दमनके गन्धतृणे श्यामेऽभिधेयवत् । इति विश्वः । ११. कत्तृणं रौहिषं वलाणं पुंलिङ्गो हरिणान्तरे, इति रभसः । १२. छत्रा मिसा वातिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः । नपुंसकं चातपत्रे । इति मेदिनी ।

**शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ॥१६७॥**
**तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ।**
**तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली ॥१६८॥**
**घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ।**

---

नपुं० नाम तृणविशेष के हैं। भानुदीक्षितने·····'भूस्तृणौ' पाठ रखा है उनके मत से दोनों पुं० हैं। क्षीरस्वामीने छत्रादि पांचों को पर्य्याय माना है।

[१]शष्पम् ( शस्यते नि० ) बालं तृणम् ( बालतृणम् ) ये दो नपुंसक नाम कोमल और नयी घास के हैं।

घासः ( अद्यते घञ् घस्लादेशश्च ) यवसम् ( यौतीति असच् णिच्च संज्ञापूर्वकत्वाद् वृद्ध्यभावः ) ये दो नाम बैलों के खाने योग्य घास और भूसा के हैं जिनमें प्रथम पुं०, द्वि० न० हैं।

तृणम् ( तृण्यते घञ् संज्ञापूर्वकत्वात् गुणाभावः ) [२]अर्जुनम् ( अर्ज्यते इत्युनन् ) ये दो नपुं० नाम तृण ( घास ) मात्र के हैं ॥ १६७ ॥

तृण ( घास ) की ढेरीको—तृण्या ( तृणानां संहतिः, समूहार्थे पाशादिभ्यो यः इति यप्रत्यये ) कहते हैं—जो स्त्रीलिंग है।

नड्या ( नडानां संहतिः यः ) नडसमूह का यह एक स्त्रीलिंग नाम है।

तृणराजाह्वयः ( तृणानां राजा टः, इति आह्वयो यस्य ) [३]तालः ( तालयतीति अच् ) ये दो पुं० नाम ताल के हैं।

नालिकेरः ( नलतीति इण् केन=वायुना ईर्य्यते=प्रेर्य्यते घञ् नालिश्चासौ केरश्च ) लाङ्गली ( लङ्गतीति अलच् दीर्घश्च गौरादित्वात् ङीष् ) ये दो नाम नारियल के हैं, जिनमें प्र० पुं०, द्वि० स्त्री० हैं ॥ १ ८ ॥

[४]घोण्टा ( घोणाते इति टः ) [५]पूगः ( पवते इति गन् किच्च ) [६]क्रमुकः ( क्रामतीति उः क्रन् च ) [७]गुवाकः ( गुरुत्यनेन पिनाकादयश्चेति साधुः ) [८]खपुरः ( खमिन्द्रियं पिपर्तीति मूलविभु-

---

१. शष्पं बालतृणे स्मृतम्। पुंसि स्यात् प्रतिभाहानौ इति मेदिनी।

२. अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः। मातुरेकसुतेऽपि स्यात् धवले पुनरन्यवत्॥ नपुंसकं तृणे नेत्ररोगे स्याद् अर्जुनीगवि। उषायां बाहुदानद्यां कुट्टिन्यामपि च क्वचित्॥ इति मेदिनी।

३. तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते। गीतकालक्रियामाने करस्फाले द्रुमान्तरे। वाद्यभाण्डे च कांसस्य त्सरौ तालीं जटौषधौ॥ क्लीबं तु हरिताले स्यात्। इति मेदिनी। तलश्चपेटे तालद्रौ तलं व्याघातवारणे। त्सरौ स्वभावधरयोस्तन्त्रीघाते च सम्मतम्॥

४. घोण्टा तु बदरीपूगवृक्षयोरपि योषिति। इति मेदिनी। ५. पूगः क्रमुकसंघयोः। इति हैमः।

६. क्रमुकस्तु पुमान् भद्रमुस्तके ब्रह्मदारुणि। फले कार्पासिकायाश्च महिलालोध्रपूगयोः इति मेदिनी।

७. गुवाकोऽपि च गूवाकः। इति तारपालः। गूवाकेत्यत्र बाहुलकाद्दीर्घः।

८. खपुरः क्रमुके भद्रमुस्तकेऽलसकेऽपि च। इति मेदिनी।

फलमुद्वेगमेते च हिन्तालसहितास्त्रयः ॥१६९॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।

# ५. अथ सिंहादिवर्गः

सिंहो मृगेन्द्रः पंचास्यो हर्यक्षः केसरी हरिः ।
'कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः ।
पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः' ॥प्र०॥
शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ॥१॥

---

जादित्वात्कः, उदोष्ठ्यपूर्वस्येति उत्वे साधुः ( ये ५ नाम सुपारी वृक्ष के हैं जिनमें प्र० स्त्री०, शेष ४ पुं० हैं ।

यस्या = पूगस्य फलम्—उद्वेगः ( उद्विजन्ते अनेन ओविजीवातोर्हलश्चेति ढञ् ) यह एक पुं० नाम सुपारी का है ।

एते = नारिकेलाद्यास्त्रयश्चतुर्थेन हिंतालेन सहिताश्चत्वारो खजूराद्याः तृणजातीया द्रुमाः = वृक्षाः इति सम्बन्धः । हिन्तालः ( हीनोऽल्पः तालः [1]खजूरः ( खर्जतीति ऊरः ) केतकी ( केतयति = निवासयति क्वुन् ङीष् च ) ताली ( तालयति इति अच् ) ये ५ नाम तृण वृक्षों के १–१ पृथक् पृथक् हैं जिनमें १–२ पुं०, शेष ३–५ स्त्रीलिङ्ग हैं ॥ १६९ १।२ ॥ इति वनौषधिवर्गः ॥

[2]सिंहः ( सिञ्चतीति षिच्-धातोः संज्ञायां हन्नुमौ कस्य ) मृगेन्द्रः ( मृगाणामिन्द्रः ) पञ्चास्यः ( पञ्चते पञ्च, पञ्चं = विस्तृतम् आस्यम् अस्य ) हर्यक्षः ( हरिणी = पिङ्गले अक्षिणी मस्य ) [3]केसरी ( केसराः स्कन्धवालाः सन्त्यस्येति इनिः ) हरि ( हरति इति इः ) ये ६ पुं० नाम सिंह के हैं ।

[4]शार्दूलः ( शारयति क्विप्, दूयते = परितापयतीति लक् ) द्वीपी द्वौ वर्णौ ईयते इति पः गुणाभावश्च, द्वीपकाररेखावत्त्वात् द्वीपं = चर्म अस्ति अस्येति इनिः ) [5]व्याघ्रः व्याजिघ्रतीति कः ) ये तीन पुं० नाम बाघ के हैं ।

तरक्षुः ( तरं = मार्गं क्षिणोतीति डुः ) मृगादनः ( मृगम् अत्तीति ल्युः ) ये २ पुं० नाम तेंदुआ बाघके हैं ॥ १ ॥

---

१. खजूरं रूप्यफलयोः खजूरः कीट- वृक्षयोः । इति हैमः ।

२. सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितिः । सिंही तु कण्टकार्यां स्यात् । इति मेदिनी । सिंही स्वर्भानुमातरि । वासवृहत्योः क्षुद्रायाम् । इति हैमः । ३. केसरी तुरगे सिंहे पुंनागे नागकेसरे । इति । मेदिनी । केशरी इति तालव्यमध्योऽपि पाठान्तरम् । तत्र विग्रहस्तु—के वारि शीर्य्यते = हिंस्यते इति अप्, अलुक्, इन् च । ४. हरिश्चन्द्रार्कवातास्वकभेकयमाहिषु । कपौ सिंहे हरेऽजंशौ शक्रे लोकान्तरे पुमान् ॥ वाच्यवत् पिङ्गहरितोः । इति मेदिनी । ५. शार्दूलो रक्षसान्तरे । व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः । इति मेदिनी । ५. व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठे नरादुत्तरस्थाः कण्टकार्यां तु योषिति ॥ इति मेदिनी ।

वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः ।
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥२॥
कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।
मर्कटो वानरः कीशो वनौका अथ भल्लुके ॥३॥
ऋक्षाच्छभल्लभालूका गण्डके खड्गखड्गिनौ ।

---

[1]वराहः ( वरं = श्रेष्ठम् आहन्ति इति डः ) [2]सूकरः ( सवनम् = गर्भविमोचनम् इति क्विपि सुव् , सुव = प्रसवम् करोतीति टः पृषो० ) [3]घृष्टिः (घर्षतोति क्तिन् ) [4]कोलः ( कोलतीति अच् ) पोत्री ( पोत्रं मुखाग्रम् अस्ति अस्य इति इनिः ) [5]किरः ( किरति = विक्षिपति इति कः ) किटिः ( केटति = गच्छति इति क्वि ) दंष्ट्री ( दंष्ट्रा अस्ति अस्येति इनिः ) घोणी ( घोणा = नासा अस्ति अस्येति इनिः ) स्तब्धरोमा ( स्तब्धानि रोमाणि अस्य ) क्रोडः ( क्रूडनम् घञ् क्रोडः, क्रोडो अस्या-स्तीति अर्शआद्यच् ) भूदारः ( भुवं दारयतीति अण् ) ये १२ पुं० नाम सूअर के हैं ॥ २ ॥

[6]कपिः ( कम्पते इति इन् नलोपश्च ) प्लवङ्गः ( प्लवनम्, अप् , प्लयेन गच्छतीति खच् मुम्, डित्वाट्टिलोपः, डित्वाभावे [7]प्लवङ्गमः इत्यपि पाठः ) [8]प्लवगः ( प्लवेन गच्छति इति डः ) शाखा-मृगः ( शाखाचारी मृगः शाकपार्थिवादित्वात् समासः ) वलीमुखः ( वलीयुक्तो मुखः ) मर्कटः ( मर्कति = गृह्णाति इति अटन् ) वानरः ( वमे भयम् अण् वानत् = फलादि, वानं रातीति कः ) कीशः ( कस्य = वायोः अपत्यम् , किः = हनूमान् ईशः = स्वामी यस्य ) वनौकाः ( वनम् ओकः = गृहं यस्य ) ये ९ पुं० नाम वानर के हैं ।

[9]भल्लुकः (भल्यते इति उः संज्ञायां कन्) [10]ऋक्षः (ऋक्ष्णोति इति अच् ) [11]अच्छभल्लः ( अच्छ आभिमुख्येन भल्लते = हन्ति इति, अच् ) भालूकः ( भालयते निरूपयति भलधातुश्चुरादिराकुस्मीयः

---

१. वरागो नाणके विरौ । मेवे मुस्ते गिरौ विष्णौ । इति हैमः २. तालव्योऽपि । तालव्या अपि दन्त्याश्च शम्बशूकरपांसवः । इति अभियुक्तोक्तेः । ३. घृष्टि स्त्री घर्षणस्पर्धाविष्णुक्रान्तासु ना किरौ । इति मेदिनी । ४. कोलो भेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ । कोलं च बदरे कोला पिप्पल्यां चव्य-मेषजे । इति हैमः । ५. किरिः इति पाठान्तरम् । तत्र बाहुलकात् किः बोध्यः । अथ किरः किरिः । भूदारखूकरः । इति विश्वः । ६. कपिर्ना सिह्लके शाखामृगे च मधुसूदने । इति विश्व-मेदिन्यौ ।

७. प्लवंगमश्च मण्डूके तथा शाखामृगेऽपि च । इति मेदिनी । ८. प्लवगः कपिभेकयोः । अर्क-सूते । इति हैमः । ९. उलूकादित्वात् दीर्घमध्योऽपि । दधति कुहरभाजां यत्र भल्लूकयूनाम्, इति प्रयोगात् । भल्लूको भल्लुको भल्ल इत्युलूकादयश्च सः । इति पुरुषोत्तमोऽपि । 'भाल्लूकः' 'भाल्लुकः' च पाठः । तत्र तत्र प्रज्ञाधिण बोध्यः ।१०. ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गं नक्षत्रे च नपुंसकम् ॥ इति मेदिनी ।

११. समस्तं व्यस्तं चेदं नाम, तेन अच्छः, भल्लः इत्यपि । अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छम-व्ययम् । आभिमुख्ये । इति मेदिनी । भल्लः स्यात् पुंसिः भल्लूके शस्त्रभेदे तु न द्वयोः । भल्ला- तक्यां स्त्रयां भल्ली । इति मेदिनी ।

लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥४॥
स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ।
शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥५॥
ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ।

---

निरूपणार्थकः, 'मलः आमण्डने' आमण्डनम् = निरूपणम् इति तत्त्वबोधिनीकाराः ) ये ४ पुं० नाम भालू के हैं।

[1]गण्डकः ( गच्छतीति डः, स्वार्थे कन् च ) खड्गः ( खडतीति नन् ) [2]खड्गी ( खड्गः = शृङ्गमस्त्यस्येति इतिः ) ३ पुं० नाम गेंड़ा के हैं।

[3]लुलायः ( लुडति पंके कः डलयोरेकत्वम् लुलमाप्नोतीति अच् ) महिषः ( मह्यते = पूज्यते इति टिषच् ) वाहद्विषन् ( वाहेषु द्विषन् ) कासरः ( के = जले आसरति इति अच् ) सैरिभः ( सीरोऽस्त्येषाम् इति इनिः सीरिणां = कर्षकाणामिभ इव इति शकन्ध्वादिः ततः प्रज्ञाद्यण् ) ये ५ पुं० नाम भैंसा के हैं ॥ ४ ॥

[4]शिवा ( शिवः देवताऽस्त्यस्याः अर्शआद्यच् ) भूरिमायः ( भूरयो मायाः यस्य ) गोमायुः ( गाम् = विकृतां वाचम् मिनोति = प्रक्षिपति इति उण् ) मृगधूर्तकः ( मृगेषु धूर्त इव संज्ञायाम् कन् ) [5]सृगालः ( सृजति मायाम् इति कालन्, न्यङ्क्वादित्वात् कुत्वम् ) [6]वञ्चकः ( वञ्च्यते, ण्वुल् ) क्रोष्टुः (क्रोशतीति तुन्) [7]फेरुः ( 'फे' इत्यव्यक्तम् रौतीति डुः ) फेरवः ( फे इत्यव्यक्तो रवो यस्य ) [8]जम्बुकः ( जमतीति, मृगय्वादित्वात् निपातनात् साधुः ) ये १० नाम सियार के हैं जिनमें प्रथम नित्य स्त्री० शेष ९ नाम पुंलिंग हैं ॥ ५ ॥

ओतुः ( अवति = रक्षति विष्ठाम् इति तुन्, ऊठ्दीर्घो गुणः ) [9]विडालः ( वेडति = अक्रोशतीति कालन् ) [10]मार्जारः ( मुखं मार्ष्टि = शुध्यति इति मृजूधातोः आरन् ) वृषदंशकः ( वृषान् = मूषकान् देशतीति अण्, स्वार्थे कन् च संज्ञापूर्वकत्वाद् वृद्ध्यभावः ) आखुभुक् ( आखून् भुंक्ते क्विप् ) ये ५ पुं० नाम विलाव के हैं।

---

१. गण्डकः पुंसि खड्गे स्यात् संख्याविद्याप्रभेदयोः । अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे । इति मेदिनी । २. खड्गी ना गण्डके मञ्जुघोषे खड्गधरे त्रिषु । इति मेदिनी ।

३. यकारान्तपाठे बाहुलकात् आयङ् प्रत्ययः । वा अयते इति अच्, लुलश्चासौ अमश्चेति विग्रहो बोध्यः । ४. शिवः किलः शिवा क्रोष्टा मवेदामलकी शिवा । इति शाश्वतात् सृगालेऽपि स्त्रीलिंगः । यद्यपि चतुष्पदां द्विलिङ्गताभीष्टा तदपवादोऽयम् ।

५. तालव्या अपि दन्त्याश्च शम्बशम्बरशूकराः । रशनापि च जिह्वायां शृगालः कलशोऽपि च । इति शभेदः । शृगालो वञ्चके दैत्ये शृगालं डमरं बिन्दुः । इति विश्वः ।

६. वञ्चकस्तु खले धूर्ते गृहभ्रौ च जम्बुके । इति मेदिनी । ७. गुहारूपं वृषमेरुः फेरवस्तारवः शिवा । सक्रोऽतिरुजः फेरुः धभीरुर्मण्डलाहितः । इति साहसाङ्कः । ८. उलूकादित्वात् 'जम्बूकोऽपि' । खरोष्ट्रकपिजम्बूकवायसाजम्बरो यमः । इति वाचस्पतिः । ९. विडालो नेत्रपिण्डे स्याद् वृषदंशकके पुमान् । इति मेदिनी । १०. मार्जार ओतौ खट्वांशे । इति मेदिनी ।

अथो गोधेरगोधारगौधेया गोधिकात्मजे ॥६॥
श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।
वातप्रमीर्वातमृगः कोकस्त्वीहामृगो वृकः ॥७॥
मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।

---

साँपसे गोघा ( चन्दन गोहर ) में उत्पन्न होने वाले जन्तु विशेष के—गौधारः ( गोधाया अपत्यम् इति आरक् वृद्धौ ) गौधेरः ( ढ्रकि, ढकारस्य एयादेशे धलोपे च वृद्धौ ) गौधेयः ( ढकि )—ये ३ पुं० नाम हैं ॥ ६ ॥

श्वावित् ( श्वानं विध्यति इति क्विप् दीर्घश्च ) [१]शल्यः ( शलतीति यः ) ये दो पुं० नाम साही के हैं।

तस्य = श्वाविधः लोम्नि = रोम्णि इति सम्बन्धः। शलली ( शलति इति कलच् ङीष् च ) [२]शललम् ( स्त्रीत्वाविवक्षायाम् ) [३]शलम् ( पचाद्यचि ) ये ३ नाम साही के काँटे के हैं जिनमें प्रथम स्त्री० शेष २ नाम नपुं० हैं।

[४]वातप्रमीः ( वातं प्रमिमीते माङ् धातोः ईप्रत्ययः सच कित् ) वातमृगः ( वातस्य मृगः ) ये दो पुं० नाम हवा की ओर मुखकर के तेज दौड़नेवाले मृग-विशेष के हैं।

कोकः ( कोकते इति अच् ) [५]ईहामृगः ( ईहां मृगयते = अन्वेषयति इति कर्मण्यण् ) वृकः ( वर्कते = गृह्णाति इति इगुपधेति कः ) ये ३ पुं० नाम हुडार के हैं। [६]मृगः ( मृग्यते व्याधैः इति घञ्, अदन्तत्वाद् गुणाभावः ) कुरङ्गः ( कौ = पृथिव्यां रङ्गति इति अच् ) [७]वातायुः ( वातम् अयते इति उण् बाहुलकात् ) [८]हरिणः ( हरति मनः इति इनच् ) [९]अजिनयोनिः ( अजिनस्य = चर्मणः योनिः ) ये ५ पुं० नाम हरिण के हैं।

---

१. शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे। मदनद्रुश्वाविजोर्ना.। इति मेदिनी
२. तच्छलाकायां शललं शलमित्यपि। इति हैमनाममाला। शललस्तु नृशण्डयोः। इत्यमरमाला।
३. शलं तु शल्लकीलोम्नि शलो भृङ्गे गणे। इति विश्वः।
४. वातप्रमीर्वातमृगः। इति पुंस्काण्डेऽमरमाला। योषिति वातप्रमीः समीरमृगः। इति बोपालितात् अस्य स्त्रीत्वमपि। तेन कृदिकारात् इति वा ङीष् इति केचित्। वस्तुतस्तु कारग्रहणस्य तपरार्थत्वेन दीर्घात् परस्य ङीष् नेति नव्याः।
५. ईहामृगस्तु पुंसि स्यात् कोकरूपकभेदयोः। इति मेदिनी।
६. मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः। अन्वेषणायां याच्ञायां मृगी तु वनितान्तरे। इतिमेदिन्यौ।
७. 'वनायुः' इति पाठान्तरम्। वनमवमयते इति विग्रहस्तत्र।
८. हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत्। हरिणी हरितायां च नारीभिद्वृत्तभेदयोः। सुवर्णप्रतिमायां च। इति मेदिनी।
९. चारुलोचन इत्यपि पाठः। विश्वाची चारुलोचनः। इति रभसः।

ऐणेयमेण्याश्चर्माद्यमैणस्यैणमुभे त्रिषु ॥ ८ ॥
कदली कन्दली चीनश्चमूरुप्रियकावपि ।
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥
कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥१०॥
गन्धर्वः शरभो रामः सृमरो गवयः शशः ।

---

मृग्याश्चर्मादि-ऐणेयम् ( एण्याः विकारः ढञ् ) यह एक त्रि० नाम हरिणीके चर्मास्थि आदि का है। ऐणम् ( एणस्य = मृगस्य विकारः अञ् ) यह एक त्रि० नाम हरिण के चर्मास्थि का है ॥ ॥

[1]कदली (के दलति अच्, ङीष्) [2]कन्दली ( कन्दे = सस्यमूले लीयते = श्लिष्टो भवति डः ङीष् च ) [3]चीनः ( चिनोति इति नक् दीर्घश्च ) चमूरुः ( चमति = अत्ति इति ऊरः पृषोदरादित्वात् अत उः ) प्रियकः ( प्रीयते इति कः, कन् च ) समूरुः ( शोभनौ ऊरू यस्य ) ये ६ नाम मृग विशेष के हैं जिनमें प्रथम २ स्त्री० शेष ४ पुं० हैं।

[4]कृष्णसारः (कृष्णेन सारः) [5]रुरुः ( रौतीति रुशतिभ्यां क्रुन् इति क्रुन् ) [6]न्यङ्कुः ( नितरामञ्चतीति कुः न्यङ्क्वादित्वात् कुत्वम् च ) रङ्कुः ( रमते इति मृगय्वादित्वात् साधुः ) [7]शम्बरः ( शं वृणोतीति अच् ) [8]रौहिषः ( रौहिषम् तृणभेदमत्तीति अण् ) [9]गोकर्णः ( गोरिव कर्णौ अस्य ) [10]पृषतः ( पृषताः सन्त्यस्येति अच् ) [11]एणः ( एति = गच्छतीति णः ) ऋश्यः ( ऋच्छतीति श्यन् ) रोहितः ( रोहति इति इतच् ) [12]चमरः ( चमति इति अरः ) ये १२ पुं० नाम मृग भेद के हैं ॥ १० ॥

[13]गन्धर्वः ( गन्धयतीति अच् अर्वतीति अच्, गन्धश्चासौ अर्वश्चेति शकन्ध्वादिः ) [14]शरभः

---

१. कदली हरिणान्तरे। रम्भायां वैजयन्त्यां च। इति हैमः। रम्भावृक्षे च कदली पताकामृगभेदयोः। इति च मेदिनी। कदलं त्रिषु। इति अमरमाला।

२. कन्दलं त्रिषु कपालेप्युपरागे नवाङ्कुरे। कलध्वानौ कन्दली तु मृगगुल्मप्रभेदयोः। इति मेदिनी.

३. चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे। इति मेदिनी।

४. कृष्णसारः शिंशिपायां मृगभेदे स्नुहीतरौ। इति हैमः। शारः शबलवातयोः। इति तालव्यादौ रभसः। ५. रुरुर्दैत्ये मृगेऽपि च। इति हैमः। ६. न्यङ्कुर्मृगे मुनौ। इति हेमचन्द्रः।

७. शंबरो दानवान्तरे। मत्स्यैणगिरिभेदेषु शंबरी पुनरौषधौ। इति हैमः।

८. रौहिषं कत्तृणे क्लीबं पुंसि स्याद्धरिणान्तरे। इति मेदिनी।

९. गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे। अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ इति मेदिनी। १०. पृषतवत् पृषन्मृगे। विन्दौ। इति हैमः। ११. एणः कुरङ्गे मारिष्यः स्यादृश्यश्च रुलोचनः। इति त्रिकाण्डशेषः। १२. चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः। इति मेदिनी।

१३. गन्धर्वः पशुभेदे स्यात् पुंस्कोकिलतुरंगयोः। अन्तराभवसत्त्वे च गायने खेचरेऽपि च। विश्वमेदिन्यौ। १४. शरभस्तु पशोर्भिदि। करभे वानरभिदि। इति मेदिनी।

इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥११॥
'अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः' ॥प्र०॥
उन्दुरुर्मूषकोऽप्याखुर्गिरिका बालमूषिका ।
'छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका' ॥प्र०॥
सरटः कृकलासः स्यान्मुसली गृहगोधिका ॥१२॥
लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ।

---

( शृणातीति अभच् ) [१] रामः ( रमन्तेऽस्मिन्निति घञ् ) सृमरः ( सरणशीलः इति क्मरच् ) गवयः ( गवने शब्दायते इति बाहुलकात् अयः ) शशः ( शशति = उत्लुत्योत्लुत्य गच्छति इति अच् । ) आदि जो यहाँ कहे गए हैं और जो पूर्व में कहे हैं सिंहादि, जो आगे कहे जायँगे गौ, मेष, हरित, अश्वादि वे सब पशु जाति के हैं और पशुशब्द वाच्य हैं। ये ६ पुं० नाम पृथक् पृथक् एक-एक मृगभेदों के हैं ॥ ११ ॥

अधोगन्ता ( अधः गच्छतीति तृन् ) खनकः ( खनतीति ल्युट् ) वृकः ( वर्कते इति कः ) पुंध्वजः ( पुंसः ध्वजः इव ) उन्दुरः ( उनत्तीति उरः ) ये ५ पुं० नाम० चूहा के प्रक्षिप्त हैं।

[२] उन्दुरुः ( उनत्तीति उरुः ) [३] मूषिकः ( मुष्णातीति किकन् दीर्घश्च ) आखुः ( आखनतीति डः ) ये तीन पुं० नाम चूहा के हैं।

गिरिका ( गिरतीति इः, किन्, इत्, संज्ञायां कन् ) [४] बालमूषिका ( बाला चासौ मूषिका चेति ) ये २ स्त्री नाम चूहिया के हैं।

छुछुन्दरी ( छुछुमव्यक्तशब्दो दीयंत्यस्याः ) गन्धमुखी ( गंधप्रधानमुखमस्याः ) दीर्घतुण्डी ( दीर्घं तुण्डमस्याः ) दिवान्धिका ( दिवि अन्धा इति ) ये ४ स्त्री नाम छुछुन्दर के प्र० हैं।

सरटः ( सरतीति अटन् ) कृकलासः ( कृकम् = ग्रीवां लासयति = चालयतीति अण् ) ये २ पुं० नाम गिरगिट के हैं।

[५] मुसली ( संशयं मुस्यति = खण्डयति कलच् ) [६] गृहगोधिका ( अल्पा गोधा गोधिका गृहस्य गोधिका ) ये दो० स्त्री० नाम छिपकली के हैं ॥ १२ ॥

[७] लूता ( लुनातीति तन् ) तन्तुवायः ( तन्तून् वयति इति अण् ) ऊर्णनाभः ( ऊर्णा इव तन्तुः नाभौ अस्येति अच् ) मर्कटकः [८] ( मर्कति इति अटन् कन् च ) ये ४ नाम मकड़ी के हैं जिनमें प्र० स्त्री शेष पुं० हैं।

---

१. रामा योषा हिङ्गुलिन्योः क्लीबं वास्तुककुष्ठयोः । ना राघवे च वरुणे रैणुकेये हलायुधे । हये च पशुभेदे च त्रिषु चारौ सितेऽसिते । इति मेदिनी ।

२. कन्दुरुन्दुरुरुन्दुरः । इति शब्दार्णवः । ३. भद्रमूषिक आसन्दी कुन्दुरुन्दुरुरुन्दुरः । मूषको वज्रदशनः क्रमः काण्डो बिलेशयः । इति वाचस्पतिः । ४. खर्वाखुर्बालमूषिका । इति दुर्गः ।

५. मुसलं स्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि ॥ इति मेदिनी । ६. ज्येष्ठा स्त्री कुड्यमत्स्य च गृहगोधा गृहालिका । इति साहसाङ्कः ।

७. 'लूता लूतिका' इति अमरदत्तः । लूता तु रोगे पिपीलिकोर्णनाभयोः । इति हेमचन्द्रः ।

८. अथ मर्कटकः सस्यभेदे वानरलूतयोः । इति मेदिनी ।

नीलङ्गुस्तु कृमिः कर्णजलौकाः शतपद्युभे ॥१३॥
वृश्चिकः शूककीटः स्यादलिद्रुणौ तु वृश्चिके ।
पारावतः कलरवः कपोतोऽथ शशादनः ॥१४॥
पत्त्री श्येन उलूकस्तु वायसारातिपेचकौ ।
'दिवान्धः कौशिको घूको दिवाभीतो निशाटनः' ॥प्र०॥

---

[1]नीलङ्गुः ( नितरां लङ्गति इति कुप्रत्ययान्तो निपातः ) [2]क्रिमिः ( क्रामतीति इन् अकारस्येकारः ) ये दो पुं० नाम सोनकीडा के हैं। उक्त इन्प्रत्ययविधायक औणादिकसूत्र में सम्प्रसारण की अनुवृत्ति होने से '[3]कृमिः' भी होता है।

कर्णजलौका ( कर्णस्थ जलौका इव ) शतपदी ( शतं पादौ यस्याः ) ये दो स्त्री नाम गोजर के हैं। 'कर्णजलौकाः' सान्त पाठ भी है। सान्त होने पर भी स्त्रीत्व बोधन के लिए ही 'उभे' कहा गया है ॥ १३ ॥

[4]वृश्चिकः ( वृश्चति = छिनत्तीति किकन् संप्रसारणं च ) शूककीटः ( शूकयुक्तः कीटः ) ये दो पुं० नाम ऊनी वस्त्रों को काटने वाले कीडे के हैं।

[5]अलिः ( अलति = दंशे समर्थो भवतीति इन् ) [6] द्रुणः ( द्रुणतीति कः ) वृश्चिकः ( किकन् ) ये ३ पुं० नाम बीछी के हैं।

[7]पारावतः ( परं = जीवम् अवति = रक्षति इति शतृ, परावतो दत्तात्रेयस्यायं गुरुः अण् ) कलरवः ( कलोऽव्यक्तमधुरः रवो ध्वनिरस्य ) [8]कपोतः ( कस्य = वायोः पोत इव ) ये ३ पुं० नाम कबूतर के हैं।

शशादनः ( शशम् अत्तीति ल्युट् ) पत्त्री ( अतिशयितं पत्रम् अस्येति इन् ) श्येनः ( श्यायते इति इनच् ) ये तीन पुं० नाम बाजपक्षी के हैं।

[9]उलूकः ( उचति इति उलूकादयश्चेति निपातनात् साधुः ) वायसारातिः ( वायसस्य = काकस्य आरातिः = शत्रुः ) पेचकः ( पचति = संतपति इति वुक् उपधाया इच्च, पुगन्तेति गुणः ) ये तीन पुं० नाम उल्लू के हैं।

---

१. नीलङ्गुरपि नीलाङ्गुः। इति द्विरूपकोशः। नीलङ्गुः स्यात् कृमौ पुंसि भम्भराल्यां तु योषिति। इति मेदिनी। २. द्रुमामये भवेत्पुंसि कीटे च क्रिमिवत्कृमिः। इति रभसः।

३. क्रिमिर्ना कृमिवत् कीटे लाक्षायां कृमिले खरे। इति मेदिनी।

४. वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः। इति मेदिनी।

५. भृङ्गवृश्चिकयोरलिः। इति रभसः। बाहुलकात् इण्प्रत्यये आलिरपि यथा बोपालितः—वृश्चिको द्रुण आलिः स्यात्। अलमर्थोऽस्यास्तीति विग्रहे व्रीह्यादित्वादिनिः। ६. द्रुणं चापेऽलिनि द्रुणः। इति मेदिनी। द्रोणोऽपि। ७. पारापतः इत्यपि पाठः। तेन पारावतश्च छेदश्च कपोतो रक्तलोचनः। पारापतः कलरवः। इति रभसः। ८. पारावतः कपोतः स्यात् कपोतो विहगान्तरे। इति विश्वः।

९. उलूकः पुंसि काकारातिन्द्रे भारतयोधिनि। इति मेदिनी। अथ शक्राख्यो दिवान्धो वक्रनासिकः। हरिनेत्रो दिवाभीतो नखाशी पीयुघर्घरौ। काकभीरुर्नक्तचारी। इति त्रिकाण्डशेषः।

व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु खञ्जनः ॥१५॥
लोहपृष्ठस्तु कङ्कः स्यादथ चाषः किकीदिविः ।
कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः ॥१६॥
दार्वाघाटोऽथ सारङ्गस्तोककश्चातकः समाः ।
कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥१७॥

---

व्याघ्राटः ( व्याघ्रम् अटति = गच्छतीति अच् ) [1]भरद्वाजः ( भरद्वाजस्यापत्यम् इति अण् संज्ञापूर्वकत्वात् वृद्धयभावः ) ये दो पुं० नाम भरद्वाज पक्षी के हैं ।

खञ्जरीटः ( खञ्जः = कुब्ज इव ऋच्छति = गच्छति इति कीटन् ) [2]खञ्जनः ( खञ्जति = गतिवैकल्यमनुभवतीति ल्युः ) ये दो पुं० नाम खञ्जन पक्षी ( जो हस्त नक्षत्र में दीखते हैं जिनका हस्तार्क में दर्शन का फल कहा गया हैं ) के हैं ॥ १५ ॥

लोहपृष्ठः ( लोहमिव पृष्ठमस्य ) [3]कङ्कः ( कङ्कते गत्यर्थककङ्कधातोरच्प्रत्यये साधुः ) ये दो पुं० नाम सफेद चील—जिसे कंकहड़ कहते हैं—के हैं ।

[4]चाषः ( चाषयति स्वार्थण्यन्ताच्चषधातोरच् ) [5]किकीदिविः ( 'किकी' इति दीव्यति = शब्दं करोति इति निपातनात् साधुः ) ये दो पुं० नाम चास ( नीलकण्ठ ) पक्षी के हैं ।

[6]कलिङ्गः ( के = मूर्ध्नि लिङ्गम् = चूडाऽस्य ) [7]भृङ्गः ( बिभर्ति कुलम् गन् बुट् च ) धूम्याटः ( धूम्या = धूमसमूह इव अटति इति अच् ) ये तीन पुं० नाम भुचेङ्गा पक्षी के हैं ।

[8]शतपत्रकः ( शतं पत्राण्यस्य ) दार्वाघाटः ( दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् , टकारश्चान्तादेशः ) ये दो पुं० नाम कठफोरवा पक्षी के हैं ।

[9]शारङ्गः ( शारयति = हन्ति इति अङ्गच् ) स्तोकम् = अल्पम् कम् = जलम् अस्येति कः ) चातकः ( चतति = याचते इति ण्वुल् ) ये ३ पुं० नाम पपीहा के हैं ।

[10]कृकवाकुः ( कृकेण = गलेन वक्तीति ञुण् कस्चान्तादेशः ) ताम्रचूडः ( ताम्रा चूडाऽस्येति ) [11]कुक्कुटः ( कोकनम् कुक् , कुटतीति कः कुका = आदानेन कुटः ) चरणायुधः ( चरणः = पदम् आयधमस्य ) ये ४ पुं० नाम मुर्गा के हैं ॥ १७ ॥

---

१. भरद्वाजे गुरोः पुत्रे व्याघ्र टाख्यविहङ्गमे । इति मेदिनी ।

२. खञ्जनः खञ्जरीटे, स्त्री सर्षप्यां खञ्जनं गतौ । इति मेदिनी ।

३. कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः । इति मेदिनी ।

४. किकीदिविश्च चाषः स्यात् । इति रत्नकोशः । ५. चाषो दिविः किकिः स्मृतः । इति व्याडिः ।

६. कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति । न द्वयोः कौटजफले महिलायां तु योषिति । इति मेदिनी । ७. भृङ्गो धूम्याटपिङ्गयोः । मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुडत्वचि । इति मेदिनी ।

८. काष्ठकुट्टः शतच्छदः इति त्रिकाण्डशेषः । ९. शारङ्गश्चातके ख्यातः शबले हरिणेऽपि च । इत्यजयः । चातके हरिणे पुंसि सारङ्गः शबले त्रिषु । इति दन्त्यादौ रभसः ।

१०. कृकवाकुर्मयूरेऽपि सरटे चरणायुधे । इति विश्वः । ११. कुक्कुटयनृतचर्याहां पुंसि स्यात् चरणायुधे । निषादशूद्रयोः पुत्रे तृणोल्कायां च कुक्कुभे ॥ इति विश्वमेदिन्यौ ।

**चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः ।**
**पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव सा ॥१८॥**
**कर्करेटुः करेटुः स्यात् कृकणक्रकरौ समौ ।**
**वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥१९॥**
**काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।**

---

चटकः ( चटति = भिनत्तीति क्वुन् ) [1]कलविङ्कः ( कलं वङ्कते गत्यर्थकवकि धातोरण् पृषोदरादित्वात् साधुः ) ये दो पुं नाम चटक ( गौरा ) पक्षी के हैं ।

चटका ( चटकस्य स्त्री, अजादित्वात् टाप्, क्षिपकादित्वात् इत्वनिषेधः ) यह एक स्त्री० नाम चटक की स्त्री का है ।

चाटकैरः ( तयोः = चटकायाः चटकस्य वा पुमपत्यम्, ऐरक् ) यह एक पुं० नाम गौरा या गौरैया के पुत्रका है ।

चटका ( तयोः स्त्री अपत्यम् तस्मिन् ऐरको लुक्, पुनष्टाप् ) यह एक स्त्रीलिंग नाम गौरा या गौरैया की पुत्री का है ॥ १८ ॥

[2]कर्करेटुः ( कर्क इति रेटति = भाषते मृगय्वादित्वात् साधुः ) करेटुः ( के = वायौ रेटतीति ) ये दो पुंलिंग नाम अशुभभाषी पक्षिविशेष के हैं ।

कृकणः ( कृ इति कणति = शब्दं करोति इति अच् ) क्रकरः ( क्रः इति शब्दकरणशीलः ताच्छील्ये टः ) ये दो पुं० नाम अशुभभाषी पक्षि विशेष के हैं ।

वनप्रियः ( वनं प्रियमस्य ) परभृतः ( परेण = काकेन भृतः = पोषितः ) कोकिलः ( को कले इति इलच् ) पिकः ( अपि कायति = शब्दं करोति कः वष्टिभागुरि त्यल्लोपः ) ये चार नाम पुं० कोकिल के हैं ॥ १९ ॥

[3]काकः ( कायति = शब्दं करोति इति कः ) [4]करटः ( करोति शकुनम् इति अटन् ) [5]अरिष्टः ( न रिष्टम् = क्षेमम् अस्य ) बलिपुष्टः ( बलिना पुष्टः ) सकृत्प्रजः ( सकृत् = एकवारं प्रजा सन्ततिः

---

१. कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके । इति मेदिनी ।

२. कर्करेटुः करेटुः स्यात् करटुः कर्कराटुकः । इति रभसः ।

३. काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोवक्षालने मानप्रभेदद्वीपभेदयोः । काका स्यात्काकनासायां काकोलीकाकजङ्घयोः । रक्तिकायां मलय्यां च काकमाच्यां च योषिति । काकं सुरतबन्धे स्यात् काकानामपि संहतौ । इति विश्व-मेदिन्यौ ।

४. करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे । करटो वाद्यभेदे । इति विश्वमेदिन्यौ । ५. अरिष्टो निम्बे फेनिले काककङ्कयोः । इति मेदिनी ।

**ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥२०॥**
**'स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः'**
**द्रोणकाकस्तु काकोलो दात्यूहः कालकण्टकः ।**
**आतायिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥२१॥**
**क्रुङ् क्रौंचोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः ।**

---

यस्य ) [१]ध्वाङ्क्षः ( ध्वाङ्क्षति = घोरं शब्दं करोतीति अच् ) आत्मघोषः ( आत्मानं घोषयतीति, काँ काँ इति शब्दनात् ) परभृत् ( परं बिभर्ति इति क्विप् ) बलिभुक् ( बलिं भुंक्ते क्विप् ) वायसः ( वयते इति असच् अयसो णित्वाद् वृद्धिः ) ये १० पुं० नाम कौआ के हैं ॥ २० ॥

[२]द्रोणकाकः ( द्रोणाख्यः काकः ) [३]काकोलः ( लौल्यार्थककधातोः स्वार्थण्यन्तात् ओलचि सिध्यति रूपम् ) ये दो पुं० नाम डोम ( कार ) कौआ के हैं ।

[४]दात्यूहः ( दातिम् = मारणमूहते, अण् ) [५]कालकण्टकः ( काले = वर्षाकाले कण्ठः = ध्वनिरस्य कप् ) ये दो पुं० नाम जलकाक के हैं ।

[६]आतायी ( आतयते तच्छीलः णिनिः, यद्यपि सुप्यजातावित्यत्र वृत्तिकारैरनुपसर्गे इत्युक्तम्, किन्तु भाष्ये उपसर्गेऽपि णिनिः स्वीकृतः ) [७]चिल्लः (चिल्लति इति अच् ) ये दो पुं० नाम चील के हैं ।

दाक्षाय्यः ( दक्षते वृद्ध्यर्थकदक्षधातोः औणादिक आय्यप्रत्यये दक्षाय्यस्याऽयमण् ) [८]गृध्रः ( गृध्यतीति क्रन् ) ये दो पुं० नाम गीध के हैं ।

[९]कीरः ( कि' इति ईरयति कः ) [१०]शुकः ( शोकतीति कः ) ये दो पुं० नाम सुग्गा के हैं ।

'समौ' का सम्बन्ध तीनों के साथ है जैसे—'आतायिचिल्लौ' समौ, 'दाक्षाय्यगृध्रौ' समौ, कीरशुकौ' समौ ॥ २१ ॥

क्रुङ् ( क्रुञ्चतीति क्विन् ) [८]क्रौञ्चः ( पूर्ववत् विग्रहे प्रज्ञाद्यण्, स्त्रियां टाप् ) ये दो पुं० नाम करांकुल पक्षी के हैं ।

---

१. ध्वाङ्क्ष काके बकेऽर्थिनि । गृहे ध्वाङ्क्षी तु काकोल्याम् । इति हैमः ।

२. द्रोणो ना दग्धकाके स्यादश्वत्थाम्नो गुरावपि । इति रुद्रः । द्रोणोऽस्त्रियामाढके स्यादाढकानां चतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । तथा काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते । इति मेदिनी । द्रोणकाको दग्धकाको वृक्षकाको वनाश्रयः । इति त्रिकाण्डशेष ।

३. काकोलं नरकान्तरे । ना कुलाले द्रोणकाके विषभेदे तु न स्त्रियाम् । इति मेदिनी ।

४. दात्यूहः कालकण्ठके । चातकेऽपि । इति हैमः । ५. कालकण्टनीलकण्ठौ पीतसारे महेश्वरे । दात्यूहे ग्रामचटके खञ्जरीटे शिखावले । इति हेमचन्द्रः । ६. 'आतापी' ति पाठः । आतपयतीति विग्रहः ।

७. चिल्लः खगे स चुल्लश्च पिल्लवत् विलन्नलोचने । विलन्नाक्षिण । इति हैमः ।

८. गृध्रः खगान्तरे पुंसि वाच्यलिङ्गस्तु लुब्धके । इति मेदिनी । ६. कीरः शुके पुंभूम्नि नीवृति । इति मेदिनी । ९. शुको व्याससुते कीरे रावणस्य तु मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् ॥ इति मेदिनी । १०. क्रौञ्चो द्वीपप्रभेदे स्यात् पक्षिपर्वतभेदयोः । इति मेदिनी । क्रुञ्चः इति पाठे पचाद्यच् ।

कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥२२॥
कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ।
हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥२३॥
राजहंसास्तु ते चंचुचरणैर्लोहितैः सिताः।

---

[1] बकः ( वङ्कते, गत्यर्थकवकिधातोरचि, आगमशास्त्रस्यानित्यत्वात् न नुम् बवयोरैक्यात् ) कह्वः ( के = जले ह्वयति = शब्दं करोतीति मूलविभुजादित्वात् कः ) ये दो पुं० नाम बक के हैं।

पुष्कराह्वः (पुष्करं पद्मं तस्याह्वा इव आह्वा यस्य) सारसः (सरसि भवः इति अण्) ये दो पुं० नाम सारस पक्षी के हैं।

[2]कोकः ( कोकते = गृह्णाति इति अच् ) [3]चक्रः ( चकते तृप्त्यर्थकचकधातोः रकि, प्रयोगस्य सिद्धिः ) चक्रवाकः ( चक्रशब्देन उच्यते इति घञ् ) रथाङ्गाह्वयनामकः ( रथांगस्य आह्वयः = नाम यस्य, कप् ) ये ४ पुं० नाम चक्रवाक के हैं ॥ २२ ॥

[4]कादम्बः ( कदम्बे = समूहे भवः इति अण् ) [5]कलहंसः ( कलश्चासौ हंसः ) ये दो पुं० नाम बतक के हैं।

उत्क्रोशः ( उत्क्रोशतीति अच् ) कुररः ( कवते = शब्दं करोतीति क्ररन् ) ये दो पुं० नाम कुरर पक्षी के हैं।

[6]हंसः ( हन्ति = गच्छति इति सः ) श्वेतगरुत् ( श्वेतो गरुत् = पक्षः अस्त्यस्य ) [7]चक्राङ्गः ( चक्रम् अङ्गम् अस्य ) मानसौकाः ( मानसं = सरः ओकः = निवासस्थानं यस्य ) ये चार पुं० नाम हंस के हैं ॥ २३ ॥

सिताः = श्वेताः शरीरैरिति शेषः। चन्चुचरणैर्लोहितैः = चन्चुसहितैः चरणैः इति शाकपार्थिवादिः, तैः लोहितैः = रक्तैः उपलक्षिता राजहंसाः इति सम्बन्धः। [8]राजहंसः ( हंसानां राजा इति राजदन्तादित्वात् समासः ) यह एक पुं० नाम राजहंस का है।

---

१. बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसि। इति मेदिनी। दीर्घजङ्घो निशैडः स्याद्बकोटः शुक्लवायसः। कह्वेरुदारुवलिभुक् शिखी वन्द्रविहङ्गमः। इति त्रिकाण्डशेषः।

२. कोकश्चक्रे वृके ज्येष्ठ्यां खजूरीद्रुमभेकयोः। इति विश्वः। ३. चक्रः कोके पुमान्। क्लीबं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्तेऽपि। मेदिनी।

४. कादम्बः स्यात् पुमान् पक्षिविशेषे सायकेऽपि च। इति मेदिनी। ५. कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे। इति मेदिनी। ६. भवेद्वर्णागमाद्धंसः हंसः स्यान्मानसौकसि। निर्लोभनृपविष्णवर्कपरमात्मन्यमत्सरे। योगिभेदे मन्त्रभेदे शारीरमरुदन्तरे। तुरंगमप्रभेदे च। इति मेदिनी।

७. चक्राङ्गो मानसौकसि। चक्राङ्गी कटुरोहिण्याम्। इति मेदिनी।

८. राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे। इति हैमः।

**मलिनैर्मल्लिकाख्यास्ते धार्तराष्ट्राः सितेतरैः ॥२४॥**
**शरारिराटिराडिश्च बलाका बिसकण्ठिका ।**
**हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥२५॥**
**जतुकाऽजिनपत्रा स्यात् परोष्णी तैलपायिका ।**
**वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥२६॥**

---

मलिनैः = धूम्रवर्णैश्चञ्चुचरणैः उपलक्षितः— मल्लिकाख्यः ( मल्लिक इति आख्या यस्य ) यह एक पुं० नाम शरीर से सफेद किन्तु चोंच और चरणों से धूसर रंग वाले हंस का है।

सितेतरैः = कृष्णैश्चञ्चुचरणैरुपलक्षितः [२]धार्तराष्ट्रः ( धृतराष्ट्रे भवः इति अण् ) यह एक पुं० नाम काले रंग के चोंच और चरण वाले हंस का है ॥ २८ ॥

[३]शरारिः ( शरं नीरम् ऋच्छति इति अच् हः ) आटिः ( आ अटति इति इन् । ) आडिः ( आ अडति इति इन् ) ये ३ स्त्री० नाम आडी पक्षी के हैं।

बलाका ( बलेन अकति ) बिसकण्ठिका (बिसवत्कण्ठो यस्याः) ये दो स्त्री० नाम बगुला विशेष के हैं। [४]वरटा ( वृणीते सरः इति अटन् ) यह एक स्त्री० नाम हंस की स्त्री का है।

[५]लक्ष्मणाः । लक्ष्मीरस्त्यस्याः ) यह एक स्त्री० नाम सारस की स्त्री ( सारसी ) का हैं ॥ २५ ॥

[६]जतुका ( जतु = लाक्षा इव इति कन् ) अजिनपत्रा ( अजिनम् = कृष्णमृग-चर्म इव पत्रम् अस्याः ) ये दो स्त्री० नाम चमगादड़ के हैं।

[७]परोष्णी ( परं शत्रुम् उष्णं यस्याः ) तैलपायिका ( तैलं पिबतीति ण्वुल् ) ये दो स्त्री० नाम तेल-चट्टा नामक कीटविशेष के हैं।

वर्वणा ( वर इति वणति = शब्दं करोति इति अच् ) मक्षिका ( मक्षति = संघीभवतीति क्वुन् ) नीला ( नीलतीति अच् ) ये तीन स्त्री० नाम नीले रंग की मक्खी के हैं। अतः 'नीला' में 'वा संज्ञायां' से ङीष् का अभाव हुआ, अन्यथा गुण की विवक्षा में 'नीली' होना चाहिये था।

सरघा ( सरं गतिमन्तम् घातयतीति डः ) मधुमक्षिका ( मधुकर्त्री मक्षिका ) ये दो स्त्री० नाम मधुमक्षिका के हैं।

---

१. मल्लिको हंसभेदे स्यात् तृणशून्येऽपि मल्लिका। इति रुद्रः। मल्लिको हंसभिद्यपि। मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः। इति मेदिनी। २. धृतराष्ट्रः सुराज्ञि स्यात् पक्षिक्षत्रियभेदयोः। इति रभसः।। धृतराष्ट्रः खगे सर्पे सुराज्ञि क्षत्रियान्तरे। धृतराष्ट्री हंसपद्याम्। इति हैमः। ३. शरालिः शरातिः इति पाठान्तरे। आलिः शरालिर्वरटी गन्धोली, वानरी कपी। इति रत्नकोशः।

४. वरटा द्वयोर्वरट्यां, स्त्री हंस्यां तु तत्पतौ पुमान्। इति मेदिनी।

५. सारस्यां लक्ष्मणा ना तु सौमित्रौ श्रीमति त्रिषु। इति रुद्रः। लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्। इति मेदिनी। मकाररहितोऽपि—लक्षणश्चैव सारसे। इति अमरमाला। लक्षणं नाम्नि चिह्नेऽथ सारस्यां लक्षणा क्वचित्। इति मेदिनी।

६. रामठे जतुकं चर्मपत्राजतुकृतोः स्त्रियाम्। इति रभसः।

७. तनुक्रमिस्त्विन्द्रगोपः परोष्णी तैलपायिका। तैलाभ्यक्ता खलाधारा हीरा पिप्पलिका स्त्रियाम्॥ इति रभसः।

पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका ।
दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः ॥२७॥
भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः ।
समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः ॥२८॥
मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥२९॥

---

पतङ्गिका ( पतति इति अङ्गच् कन् च स्वार्थे ) पुत्तिका ( पुत्=कुत्सितं तायते=पालयतीति कः यलोपः ह्रस्वः, इत्वञ्च ) ये दो स्त्री नाम मधुमक्षिका विशेष के हैं ।

[1]दंशः ( दशतीति अच् ) वनमक्षिका ( वनस्य मक्षिका ) ये दो नाम डांस के हैं । जिनमें प्रथम पुं० द्वितीय स्त्री० हैं ।

अल्पा दंशजातिः—दंशी ( दशतीति गौरादित्वान् ङीष् ) यह एक स्त्री० नाम मच्छड़ का है ।

[2]गन्धोली ( गन्धयतीति ओलच् गौरादिः ) [3]वरटा ( वृणोतीति अटन् ) ये दो स्त्री० नाम बर्रे के हैं ॥ २७ ॥

[4]भृङ्गारी ( भृङ्गरूपं आराति=ददातीति कः ङीष् च ) चीरुका ( ची इति रौति=शब्दं करोतीति कक् ) [5]चीरी ( चिनोतीति क्रन् दीर्घश्च ) झिल्लिका ( चिल्लति इति अच्, पृषोदरादित्वात् चस्य झः कन् च स्वार्थे ) ये चार स्त्री० नाम झींगुर के हैं ।

[6]पतङ्गः ( पतति इति अङ्गच् ) शलभः ( शलतीति अभच् ) ये दो पुं० नाम फतिंगा के हैं ।

खद्योतः ( खे=आकाशे द्योतते अच् ) ज्योतिरिङ्गणः ( ज्योतिः नक्षत्रम् तद्वत् इङ्गति इति युच् ) ये दो पुं० नाम जुगनू के हैं ॥ २८ ॥

मधुव्रतः ( मधु व्रतं=भक्ष्यं यस्य ) मधुकरः ( मधु करोतीति तच्छीलः इति टः ) मधुलिट् ( मधु लीढे इति क्विप् ) मधुपः ( मधु पिबति इति कः ) अली ( अलः=वृश्चिकलाङ्गूलम् अस्यातीति इनिः ) द्विरेफः ( द्वौ रेफौ यस्य नाम्नि ) पुष्पलिट् ( पुष्पं लीढे इति क्विप् ) भृङ्गः ( बिभर्ति इति गन्, स च कित् नुट् च ) षट्पदः ( षट् पदानि अस्य ) [7]भ्रमरः ( भ्रमरति इति करन् ) [8]अलिः ( अलतीति इन् ) ये ११ पुं० नाम भ्रमर के हैं ॥ २९ ॥

---

१. दंशः कीटविशेषे च वर्मदंशनयोः पुमान् । इति मेदिनी ।

२. गन्धोली वरटाशुण्ठ्योर्भद्रायाम् । इति हैमः । ३. वरटा वरटीहंस्योस्तत्पतौ वरटः स्मृतः । इति तारपालः । ४. भृङ्गारी झिल्लिकायां च कनकालौ पुनः पुमान् । इति मेदिनी ।

५. चीरी झिल्ल्यां, नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः । इति मेदिनी ।

६. पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते । इति विश्वः ।

७. भ्रमरः कामुके भृङ्गे । इति मेदिनी । ८. अलिः सुरापुष्पलिहोः । इति मेदिनी ।

मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥३०॥
केका वाणी मयूरस्य समौ चन्द्रकमेचकौ ।
शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ॥३१॥
खगे विहङ्गविहगविहङ्गमविहायसः ।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥३२॥

---

मयूरः ( मयते = गच्छति इति ऊरः ) बर्हिणः ( बर्हमस्त्यस्य इति इनन् ) बर्ही ( बर्हमस्त्यस्य इति इनिः ) नीलकण्ठः ( नीलः कण्ठोऽस्य इति ) भुजङ्गभुक् ( भुजङ्गं = सर्पम् भुङ्क्ते इति क्विप् ) शिखावलः ( शिखाऽस्त्यस्येति संज्ञायां वलच् ) [1]शिखी ( व्रीह्यादित्वात् पक्षे इनिः ) केकी ( केका अस्त्यस्य इति इनिः ) मेघनादानुलासी ( मेघनादेनानुलसति तच्छीलः ) ये ९ पुंलिंग नाम मयूर ( मोर ) के हैं ॥ ३० ॥

केका ( के = मूर्ध्नि कायति इति डः सप्तम्या अलुक् च ) यह एक स्त्री० नाम मोर की बोली का है। चन्द्रकः ( चन्द्र इवेति कन् ) [2]मेचकः ( मेचको वर्णोऽस्त्यस्येति अच् ) ये दो पुं० नाम मोर के पुच्छ में स्थित नेत्राकार चमकदार चिह्न के हैं।

[3]शिखा ( शेते इति खः, ह्रस्वश्च ) [4]चूडा ( चुड्यते = समुच्छ्रीयते इति भिदादित्वादङ् दीर्घश्च ) ये दो स्त्री० नाम मयूरशिखा ( कलंगी ) के हैं।

[5]शिखण्डः ( शिखिना अम्यते इति डः, शकन्ध्वादिः ) [6]पिच्छम् ( पिच्छयति अच् ) [7]बर्हम् ( बर्हतीति अच् ) ये तीन नाम मोर पंख के हैं जिनमें प्रथम पुं० शेष नपुं० हैं ॥ ३१ ॥

[8]खगः ( खे = आकाशे गच्छतीति डः ) विहङ्गः ( विहायसि गच्छतीति खच् विहायसो विहादेशः सुमागमः डित्वाट्टिलोपः, डित्वस्य वैकल्पिकत्वात् टिलोपाभावे विहङ्गमः, डप्रत्यये [9]विहगः ) [10]विहायाः ( विजहाति भुवम् इति ओहाक् त्यागे धातोरसुन् सच णित् युगागमश्च सान्तः ) शकुन्तिः ( शक्नोतीति उन्तिप्रत्यये ) पक्षी ( पक्षौ अस्य स्तः इति इनिः ) [11]शकुनिः ( शक्नोतीति उनिप्रत्यये ) [12]शकुन्तः

---

१. शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः। इति मेदिनी। २. मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके। इति हैमः। ३. शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके। चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च॥ इति मेदिनी।

४. चूडा वडभौ शिखायां बाहुभूषणे। इति मेदिनी।

५. शिखण्डो बर्हचूडयोः। इति हेमचन्द्रः। ६. पिच्छा पूगच्छटाकोषमोचाशाल्मलिवेष्टके। भक्तसम्भूतमण्डे च पङ्क्त्यावस्त्वपदामये॥ स्त्रियां, पुंसि तु लाङ्गूले न द्वयोर्बर्हचूडयोः। इति मेदिनी।

७. बर्हपिच्छे दलेऽस्त्रियाम्। इति मेदिनी। ८. खगः सूर्ये ग्रहे देवे मार्गणे च विहंगमे। इति मेदिनी। ९. विहगस्तु त्रिलिङ्गः स्यादाशुगे ना विहंगमे। इति मेदिनी।

१०. विहायाः शकुनौ पुंसि गगने पुंनपुंसकम्। इति मेदिनी।

११. शकुनिः पुंसि विहगे सौवले करणान्तरे। इति मेदिनी १२. शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः।

पतत्त्रिपत्त्रिपतगपतत्पत्त्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्त्रयः ॥३३॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।
तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥३४॥
तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः ।
कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥३५॥

---

( शक्नोतीति उन्तप्रत्यये ) [१]शकुनः ( उनप्रत्यये ) [२]द्विजः ( द्विर्जायते इति डः ) पतत्री ( पतत्रं = तनूरुहमस्त्यस्येति इनिः ) [३]पत्त्री ( पत्त्रम् छदः अस्यास्तीति इनिः ) पतगः ( पतेन = पक्षेण गच्छतीति डः ) पतत् ( पतति इति शतृ ) पत्त्ररथः ( पत्त्रं = छदः रथ इव ) [४]अण्डजः (अण्डाज्जायते इति डः) [५]नगौकाः ( नगे = वृक्षे ओको यस्य ) [६]वाजी ( वाजाः = पक्षाः सन्त्यस्येति इनिः ) विकिरः ( विकिरति इति कः ) विः ( वाति इति इण् ) विष्किरः विकिरति इति कः, सुट्, षत्वम् च ) पतत्रिः ( पततीति अत्रिन् ) नीडोद्भवः ( नीडे उद्भवो यस्य ) गरुत्मान् ( गरुतौ = पक्षौ स्तः अस्येति मतुप् ) पित्सन् ( पतितुमिच्छुः सन्नन्तात् शतृ धातोरच इस् ) [७]नभसङ्गमः ( नभसं = आकाशं गच्छतीति खच् ) ये २७ पुं० नाम पक्षिमात्र के हैं ॥ ३३. १, २ ॥

[८]हारीतः ( हारि = मनोहरम् इतम् = गमनमस्य ) [९]मद्गुः ( मज्जतीति उः, सस्य जस्त्वेन दः ) कारण्डवः ( कारण्डम् वातीति कः ) [१०]प्लवः ( प्लवते इति अच् ) [११]तित्तिरिः ( 'तित्ति' शब्दं रातीति किः ) कुक्कुभः ( कुक् इत्यव्यक्तशब्दं कौति इति भक् ) लावः ( लावयतीति, स्वार्थण्यन्तात् छेदनार्थकलञ्-धातोरच् ) [१२]जीवंजीवः ( जीवं जीवयतीति बाहुलकात्सिद्धिः ) चकोरकः ( चकतीति ओरन् स्वार्थे कन् च ) कोयष्टिकः ( कं = जलम् यष्टिरिव अस्य पृषोदरादिः ) टिट्टिभकः ( 'टिट्टि' शब्दं भाषते इति डः स्वार्थे कन् ) [१३]वर्तकः ( वर्तते इति ण्वुल् ) वर्तिकः ( वर्तते इति तिकन् ) 'आदि' पदसे

---

१. शकुन्तस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभशंसि निमित्ते च शकुनं स्यान्नपुंसकम् । इति । २. द्विजः स्याद्ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना । द्विजा भार्ग्यां हरेणौ च । इति ।

३. पत्त्री श्येने पत्त्ररथे काण्डद्रुरथिकाद्रिषु । इति । ४. अण्डजो मृगनाभौ स्यात् सरटेऽहौ खगे झषे । इति ।

५. नगौकाः पुंसि शरभे पक्षिपञ्चास्ययोरपि । इति । ६. वाजी बाणाश्वपक्षिषु । इति मेदिनी ।

७. नभसं खं मेघवर्त्म विहायसम् । इति अदन्तमपि पाठः । ८. हारिः पथिकसंतानद्यूतादिभङ्गयोः स्त्रियाम् । इति मेदिनी हारीतो विहगान्तरे । मुनौ छद्मनि । इति हेमचन्द्रः ।

९. मद्गुः पानीयशालिका । इति रभसः । १०. प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकभिद्यपि । इति हेमचन्द्रः । ११. तित्तिरिः पक्षिणि मुनौ । इति हैमः । कपोतलावतित्तिराः । इति वाचस्पतिः ।

१२. जीवंजीवः खगान्तरे । द्रुमभेदे चकोरे च । इति हैमः

१३. वर्तकस्तु खुरेऽश्वस्य विहगे वार्तिका द्वयोः । इति मेदिनी ।

गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् ।
स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ ॥३६॥
प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ।
पेशी कोषो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ॥३७॥
पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।

---

शारिका आदि जानना चाहिए, ये १३ पुं० नाम पक्षिविशेष के हैं। तेषां = पक्षिणां विशेषाः = भेदाः इति सम्बन्धो बोध्यः।

गरुत् ( गिरति इति उतिः ) [1]पक्षः ( पक्षयतीति अच् ) [2]छदः ( छाद्यतेऽनेन इति घः ह्रस्वश्च ) [3]पत्त्रम् ( पतत्यनेन इति ष्ट्रन् ) पतत्त्रम् ( पतन्तम् त्रायते इति कः ) तनूरुहम् ( तन्वां रोहतीति कः ) ये ६ नाम पंख के हैं। जिनमें प्रथम, तीन पुंलिङ्ग हैं शेष तीन नपुं० हैं।

पक्षतिः ( पक्षस्य मूलम् तिः ) पक्षमूलम्, ये दो नाम पंख की जड़ के हैं जिनमें प्रथम स्त्री द्वि० नपुं० हैं।

[4]चञ्चुः ( चञ्चति = भक्ष्यं गृह्णात्यनेन इति उ. ) [5]त्रोटिः ( त्रोट्यते = छिनत्तीति चौरादिकत्रुट-धातोरच इः ) ये दो स्त्री० नाम चोंच के हैं ॥ ३६ ॥

एताः = प्रडीनाद्याः खगगतिक्रियाः बोध्याः इति सम्बन्धः। प्रडीनम् ( प्रथमम् डयनम् इति डीङ् विहायसा गतौ-धातोः भावे क्तः, स्वादय ओदितः इति ओदित्वात् निष्ठा-तस्य नः ) उड्डीनम् ( ऊर्ध्वं डयनम् ) संडीनम् ( संगतं डयनम् ) ये ३ न० नाम पक्षियों के गतिविशेष के हैं।

[6]पेशी ( पिंशतीति इन् ) कोषः ( कुष्यति = स्वयमेवास्मात् निष्क्रामतीति घञ् ) अण्डम् ( अमति इति डः ये ३ नाम अण्डा के हैं जिनमें प्रथम पुं० स्त्री है। द्विती० पुं० और तृतीय नपुंसक हैं।

[7]कुलायः ( कुलम् = पक्षिसन्तानः अयतेऽत्र इति घञ् प्रत्ययः ) [8] नीडम् ( नितराम् ईड्यते इति ) घञ्, संज्ञापूर्वको विधिरनित्यः। तेन गुणवृद्धी न स्तः ) ये दो नाम खोंता के हैं, जिनमें प्रथम पुं० द्वितीय पुं० न० हैं ॥ ३७ ॥

[9]पोतः ( पुनाति इति तन् ) [10]पाकः ( पिवति स्तनादिकम् इति कन् ) [11]अर्भकः (ऋध्यति =

---

१. पक्षस्तु मासार्धे गृहसाध्ययोः। चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्च ये। ( केशशब्दात्परः पक्षशब्दः चयार्थक इत्यर्थः )। पिच्छे विरोधे देहाङ्गे सखाये राजकुञ्जरे। इति हैमः। सान्तोऽपि, पक्षसी च स्मृतौ पक्षौ। २. गरुपक्षौ नरौ छदम्। इति क्लीवमपि। ३. पत्त्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः। इति मेदिनी। ४. चञ्चुश्चञ्चुस्तथा त्रोटिः। इति हलायुधः। चञ्चुः पञ्चाङ्गुले त्रोट्याम्। इति हैमः।

५. त्रोटिश्चञ्च्वां खगान्तरे मीनकट्फलयोः। इति हैमः।

६. पेशी सुपक्वकणिके मांस्यां खड्गपिधानके। मांसपिण्ड्यामण्डभेदे। इति मेदिनी।

७. कुलायस्तु पुमान् स्थानमात्रे स्यात् पक्षिवासके। इति मेदिनी।

८. नीडं स्थानकुलाययोः। इति मेदिनी। ९. पोतः शिशौ वहित्रे च गृहस्थाने च वाससि। इति मेदिनी। १०. पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च। इति मेदिनी।

११. अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च। डिम्भोऽपि बालिशे बाले। इति मेदिनी।

**स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम् ॥३८॥**
**समूहो निवहव्यूहसंदोहविसरव्रजाः ।**
**स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥३९॥**

---

वृद्धिं गच्छतीति वुन् भकारश्चान्तादेशः ) डिम्भः ( डिम्भयतीति अच् ) [1]पृथुकः ( प्रथते इति कुकन् ) शावकः ( शव्यते इति घञ् स्वार्थे कन् ) शिशुः ( श्यति इति उः, कित्वं सन्वच्च, आत्वम् , सन्वद्भावात् द्वित्वम् , अभ्यासस्य सन्यतः इति इत्वम् आल्लोपे च साधुः ) ये ७ पुं० नाम बच्चा के हैं।

स्त्रीपुंसौ ( स्त्री च पुमान् च इति अच् ) [2]मिथुनम् ( मेथति संगच्छतीति उनन् कित् च ) [3]द्वन्द्वम् ( द्वौ द्वौ इति निपातनात् साधुः, तथाच—द्विशब्दस्य द्वित्वम्, पूर्वपदस्याम्भावः = पूर्वपदावयवस्येकारस्येत्यर्थः उत्तरपदस्यात्वम् उत्तरपदावयवस्येकारस्येत्यर्थः, नपुंसकत्वं च ) ये ३ नाम स्त्री और पुरुष की जोड़ी के हैं, जिनमें प्रथम नित्य द्विवचनान्त और पुं० हैं शेष दो नपुं० हैं।

[4]युग्मम् ( युज्यते इति मक् ,कवर्गश्चान्तादेशः ) युगलम् ( युज्यते इति कलचि कुत्वम् च ) [5]युगम् ( युज्यते इति घञ् गुणाभावः ) ये ३ न० नाम जोड़ा के हैं। मेदिनीकार ने द्वन्द्व-शब्दको भी युग्म का पर्य्याय कहा है। मुकुटने 'द्वन्द्व' शब्दको उत्तरान्वयी माना है, जो 'त्वन्ताऽथादि न पूर्वभाक्' इस प्रतिज्ञा से विरुद्ध होने के कारण, उपेक्ष्य हैं ॥ ३८ ॥

समूहः ( समूह्यते वितर्कार्थकस्य ऊहधातोः कर्तृभिन्ने कारके संज्ञायां घञ् ) निवहः ( नितरामूह्यते इति वहधातोः घञ् ) [6]व्यूहः ( व्यूह्यते इति घञ् ) सन्दोहः ( सन्दुह्यते इति प्रपूरणार्थकदुहधातोः घञ् ) [7]विसरः ( विसरतीति अच् ) [8]व्रजः ( व्रजतीति अच् ) स्तोमः ( स्तूयते इति मन् ) [9]ओघः ( आ उह्यतेऽनेन इति घञ् , कुत्वञ्च ) [10]निकरः ( निकीर्यते = निक्षिप्यते इति अप् ) व्रातः ( व्रत्यते = नियम्यते व्रतशब्दात् 'मुण्डमिश्रेति' णिचि, धातुत्वात् कर्तृभिन्ने कारके संज्ञायां घञि, वृद्धिः ) [11]वारः ( वार्यते = आच्छाद्यतेऽनेन इति घः ) [12]संघातः ( संहन्यते इति कर्तृभिन्ने कारके संज्ञायां घञ् , तकारान्तादेशः हकारस्य घकारः ) संचयः ( संचीयते इति अच् ) ॥ ३९ ॥

---

१. पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्। इति मेदिनी।

२. मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके। इति मेदिनी। ३. द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः। इति मेदिनी।

४. युग्मं यमलयामले। इति रभसः। ५. युगो रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु। युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च। इति मेदिनी। ६. व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः। इति मेदिनी। ७. विसरः प्रसरे व्रजे। इति मेदिनी। ८. व्रजो गोष्ठाध्ववृन्देषु। इति मेदिनी। ९. ओघो वेगे जलस्य च। वृन्दे परम्परायां च द्रुतनृत्योपदेशयोः। इति मेदिनी। १०. निकरो निवहे सारे न्यायदेयधने निधौ। इति मेदिनी। ११. वारः सूर्य्यादिवासरे। द्वारे हरे कुब्जवृक्षे वृन्दावसरयोः क्षणे। इति मेदिनी। १२. संघातः पुंसि घाते च संहतौ नरकान्तरे। इति मेदिनी।

समुदायः समुदयः समवायश्चयो गणः ।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥४०॥
वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः ।
सजातीयः कुलं यूथं तिरश्चां पुंनपुंसकम् ॥४१॥
पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ।

---

[1]समुदायः ( समुदायते सम्+उत्+आ+अयते इति पचादित्वादच् ) [2]समुदयः ( समुदीयते इति इण् धातोः अच् ) समवायः ( समवाय्यते इति अय्धातोः घञ् ) [3]चयः ( चीयते इति अच् ) [4]गणः ( गण्यते इति घञ् अल्लोपस्य स्थानिवत्वान्न वृद्धिः ) संहतिः ( संहन्यते इति क्तिन् ) वृन्दम् ( वृणोतीति निपातनात् ) निकुरम्बम् ( निकुरति बाहुलकादम्बच् ) [5]कदम्बकम् ( कुत्सितमम्बते कोः कदादेशः घञ् च ) ये २२ नाम समूह के हैं । जिनमें प्रथम १८ पुं० १९ वां स्त्री० शेष ३ नपुं० हैं ॥ ४० ॥

वृन्दभेदाः=समूहभेदाः उच्यन्ते इति सम्बन्धः । समैः=सजातीयैः प्राणिभिः, अप्राणिभिर्वा उपलक्षितम् । वर्गः ( वृज्यते वर्जनार्थकवृजीधातोः घञ्, कुत्वं च ) यह एक पुं० नाम एकजातीय जीव या तद्भिन्न के समूह का है ।

संघः ( संहननम् भावे अप् घादशेस्च ) [6]सार्थः ( सरतीति थन् णित्वात् वृद्धिश्च ) ये दो पुं० नाम एक जातीय या भिन्नजातीय जीवसमूह के हैं ।

सजातीयैरेवोपलक्षितम् जन्मभिरिति शेषः । [7]कुलम् ( कोलतीति कः ) यह एक नपुंसक नाम एक जातीय प्राणिसमूह का है ।

पक्षियों के समूह को—[8]यूथम् ( यौति इति थक् निपातनाद्दीर्घः ) कहते हैं जो पुं० नपुंसक दोनों है ॥ ४१ ॥

[9]समजः ( संवीयतेऽत्र इति अप् अघञपोस्त्युक्तेः वीभावो न ) यह एक पुं० नाम पशुओं के समूह का है ।

अन्येषाम्=पशुभिन्नानां । सङ्घः—समाजः ( संवीयतेऽत्र इति घञ्, वृद्धिः कुत्वाभावश्च ) यह एक पुं० नाम पशु से भिन्नजातिवालों के समूह का है जैसे—'ब्राह्मणसमाजः' 'क्षत्रियसमाजः' ।

अथ सधर्मिणाम्=धर्मोऽस्यातीति धर्मी समानो धर्मो येषां ते सधर्मिणः तेषामिति सम्बन्धः ।

---

१. समुदायः समूहे स्यात् युद्धे । इति मेदिनी । २. भवेत्समुदयः संघे संयुगे च समुद्यमे । इति मेदिनी । ३. चयः समूहे प्राकारमूलबन्धे समाहृतौ । इति मेदिनी । ४. गणः प्रथमसंख्यौघे चण्डीसैन्यप्रभेदयोः । इति मेदिनी । ५. कदम्बं निकुरम्बे स्यात् नीपसर्षपयोः पुमान् । इति मेदिनी ।

६. सार्थो वणिक्समूहे स्यादपि संघातमात्रके । इति मेदिनी । भागुरिने—संघसंघातपुञ्जौघसार्थयूथकदम्बकाः । सभीको वर्य्याय कहा है । ७. कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम् । इति मेदिनी ।

८. यूथम् तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति । इति मेदिनी ।

९. समजः पशुवृन्दे ना विपिने तु नपुंसकम् । इति मेदिनी ।

स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥४२॥
कापोतशौकमायूरतैत्तिरादीनि तद्गणे।
गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥४३॥

---

[१] निकायः ( निचीयते इति घञ्, धात्वादेश्च कः ) यह एक पुं० नाम एक धर्मवाले समूह का है।
पुञ्जः ( उन्नत्या पुमांसं जयतीति डः, पिञ्जयतीति अच् घञ् वा पृषोदरादिः ) [२]राशिः ( अश्नुते इति इण्, धातोः रुडागमश्च ) उत्करः ( उत्कीर्यते इति अप् ) [३]कूटम् ( कूटयति पचादित्वादच् ) ये ४ नाम अन्नादि की ढेरी के हैं। जिनमे प्रथम ३ पुं० ४र्थ नपुं० हैं ॥ ४२ ॥

तद्गणे = तेषां = कपोतादीनां गणः तस्मिन्निति सम्बन्धः।

[४]कापोतम् ( कपोतानां समूहः अञ् ) [५]शौकम् ( शुकानाम् समूहः अण् ) मायूरम् ( मयूराणां गणः अञ् ) तैत्तिरम् ( तित्तिरीणां समूहः अञ् ) ये ४ न० शब्द कबूतर, सुग्गा, मोर और तीतर के समूह के पृथक् २ एक-एक नाम हैं।

[६]छेकः ( छ्यति ईकन् ) [७]गृह्यकः ( गृह्यते इति क्यप्, अनुकम्पायां कन् च ) ये दो पुं० नाम पालतू पशुपक्षी के हैं ॥ ४३ ॥

इति सिंहादिवर्गः।

---

१. निकायस्तु पुमाँल्लक्ष्ये सधर्मिप्राणिसंहतौ। समुच्चये संहतानां निलये परमात्मनि ॥ इति मेदिनी। २. राशिर्मेषादिपुञ्जयोः। इति मेदिनी। ३. कूटं पूर्वद्वारयन्त्रयोः। मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः। निश्चलेऽयोघने राशौ। इति हेमचन्द्रः।

४. कापोतो रुचके, क्लीबं कपोतौघेऽञ्जनान्तरे। इति मेदिनी। ५. शौकं शुकगणे स्त्रीणां करणे। इति मेदिनी। ६. छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु। इति मेदिनी। छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे। इति रभसः। ७. गृह्यं गुदे ग्रन्थभेदे क्लीबं, शाखापुरे स्त्रियाम्। गृहासक्तमृगादौ ना त्रिषु स्वैरिपक्ष्ययोः ॥ इति मेदिनी। गृह्यको निम्नके छेके। इति मेदिनी।

# ६. मनुष्यवर्गः

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥

---

मनुष्यः ( मनोरपत्यम् यत् षुगागमश्च ) मानुषः ( मनोरपत्यम् अञ्, वृद्धौ, पुगागमश्च ) [ स्त्रियां ङीषि यलोपश्च मनुषी, ] मर्त्यः ( म्रियते इति तन्, ततः स्वार्थे यत् ) मनुजः ( मनोर्जातः डः ) मानवः ( मनोरयम् अण्, अञि पुगभावो वा ) [1]नरः ( नरतीति अच् ) ये ६ पुं० नाम मनुष्य मात्र के हैं।

पुमान् ( पाति = रक्षति इति डुमसुन् ) पञ्चजनः ( पञ्चभिर्भूतैः जन्यते इति घञ् वृद्धिनिषेधः । पञ्च जनाः = उत्पादकाः यस्य वा ) पुरुषः ( पुरति = अग्रे गच्छति इति कुषम् पृषोदरादित्वाद्दीर्घो वा ) ना ( नयति = प्रापयति इति ऋन्प्रत्ययः स च डित् डित्वाट्टिलोपः, मूल में बहुवचनान्त शब्द का पाठ है ) ये ५ पुं० नाम मनुष्य जाति में पुरुष के हैं ॥ १ ॥

[2]स्त्री ( स्त्यायति = गर्भोऽस्याम् इति ड्रट्, ट्लिोपयलोपयोः ङीपि ) योषित् ( योषति = सेवते 'युष इति सौत्रो धातुः सेवायां' ततः इतिः ) अबला ( अल्पं बलं यस्याः नञत्राल्पार्थकः ) योषा ( योषति इति अच् । चवर्गादिपाठे जुषो प्रीतिसेवनयोः धातोः अच् ) नारी ( नरस्य स्त्री इति ङीन् तत्सन्नियोगे वृद्धिश्च ) सीमन्तिनी ( सीम्नोऽन्तः शकन्ध्वादिः, सीमन्तोऽस्त्यस्याः इति इनिः ) वधूः ( वहति इति ऊः धश्च ) प्रतीपदर्शिनी ( कटाक्षतैक्ष्ण्यात् प्रतीपम् = विरुद्धं द्रष्टुं शीलमस्याः इति णिनिः ) [3]वामा ( वमति स्नेहमुद्गिरतीति ज्वलादित्वात् णः ) [4]वनिता ( वनति = सम्यक् भजतीति इतन्, वन्यते स्म क्तो वा ) [5]महिला ( मह्यते = पूज्यते इति इलच्, महेला-पाठे महस्य = उत्सवस्य इला = भूमिः ) ये ११ स्त्री० नाम स्त्रीजाति मात्र के हैं ॥ ३ ॥

---

१. नरोऽजे मनुजेऽर्जुने । क्लीबं तु रामकर्पूरे । इति मेदिनी । २. स्त्री वधूर्योषिता रामा । इति त्रिकाण्डशेषः । ३. वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियाम् ॥ इति मेदिनी । ४. वनिता जातरागा स्त्री स्त्रियोस्त्री त्रिषु याचिते । सेविते । इति मेदिनी ।
५. महिला फलिनीस्त्रियोः । इति मेदिनी ।

**सुन्दरी रमणी रामा कोपना सैव भामिनी।**
**वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥**
**कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः।**
**पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥**

---

स्त्रीणां विशेषाः भेदास्तु [१]अङ्गना ( प्रशस्तान्यङ्गानि यस्याः इति नः ) [२]भीरुः ( बिभेतीति क्रुः ) [३]कामिनी ( कामोऽस्ति अस्याः भूयान् इति शेषः इनिः ) वामलोचना ( वामः = कामः लोचने = नेत्रे यस्याः, वामे = सुन्दरे लोचने चक्षुषी यस्याः वा ) प्रमदा ( प्रः = प्रकृष्टः मदः = हर्षः अस्ति अस्याः ) [४]मानिनी ( मानः = चित्तविरागः शृंगारचेष्टाविशेषो वा अस्ति अस्याः इति इनिः ) [५]कान्ता ( कम्यते स्म क्तः दीर्घ इडभावश्च ) [६]ललना ( ललते इति ल्युः ) नितम्बिनी ( अतिशयितः नितम्बः यस्याः इनिः ) [७]सुन्दरी ( अतीव उनत्ति = क्लेदयति इति सुपूर्वकादुन्दी क्लेदने-धातोर्बाहुलकादरः शकन्ध्वादित्वात्पूर्वरूपे गौरादित्वान्ङीषि सिध्यति रूपम् ) रमणी ( रमयतीति ल्युट् ) [८]रामा ( रमते इति णः ) ये १२ स्त्री० नाम उत्कृष्ट स्त्री० विशेष के हैं ॥ ३.१/२ ॥

कोपना ( कुप्यति तच्छीला इति युच् ) भामिनी ( अत्रइयं भामते इति णिनिः ) ये दो स्त्री० नाम क्रोध करने वाली स्त्री के हैं ॥ ३ १।२ ॥

वरारोहा ( वरः आरोहः = नितम्बः अस्याः ) मत्तकाशिनी ( मत्ता = क्षीबा इव काशते = भाति इति णिनिः ) उत्तमा ( उत्कर्षार्थादुच्छब्दात्तमप् तस्मान्नामुः ) [९]वरवर्णिनी ( वरः वर्णोऽस्त्यस्याः इनिः ) ये ४ स्त्री० नाम अत्यन्त उत्कृष्ट स्त्री के हैं ॥ ४ ॥

कृताभिषेका ( कृतः अभिषेकोऽस्याः ) या सा—[१०]महिषी ( मह्यते = पूज्यते इति टिषच् ) यह एक स्त्री नाम पटरानी का है। पटरानी वह कहलाती है जिसके साथ राजा का अभिषेक किया जाता है।

अन्याः नृपस्त्रियः भोगिन्यः इति सम्बन्धः । [११]भोगिनी ( अतिशयितः भोगोऽस्ति अस्याः इति इनिः ) यह एक स्त्री० नाम राजा की अन्य स्त्रियों का है।

पत्नी ( यज्ञे पत्युः संयोगो यया सा, पतिशब्दस्येकारस्य नकारादेशे नान्तलक्षणे ङीप् ) पाणिगृहीती ( पाणिः गृहीतोऽस्याः इति भार्यार्थे ङीष् ) [१२]द्वितीया ( द्वयोः पूरणी इति तीयः ) सहधर्मिणी ( पत्या सह कर्मसु अधिकारात् सह धर्मोऽस्त्यस्याः इति इनिः, सहस्य सादेशः ङीप् च ) ॥ ५ ॥

---

१. अङ्गनं प्राङ्गणे यानेऽप्यङ्गना तु नितम्बिनी। इति हैमः। २. भीरुः स्यात्कातरे नार्य्याम्। इत्यजयः। ३. कामिनी भीरुवन्दयोः। इति मेदिनी।

४. मानिनी तु स्त्रियां फल्यां मानी मानयति त्रिषु। इति मेदिनी। ५. कान्ता नार्य्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे। लोहे च चन्द्रसूर्यायःपर्य्यायान्तः शिलासु च। इति मेदिनी।

६. ललना कामिनी नारी भेदजिह्वासु योषिति। इति विश्वः। ७. सुन्दरी तरुभिन्नारी भिदोः स्त्री रुचिरेऽन्यवत्। इति मेदिनी। ८. रामः श्यामे हलायुधे। पशुभेदे सिते चारौ राघवे रेणुकासुते। रामं तु वास्तुके कुष्ठे रामा हिङ्गुलिनीस्त्रियोः। इति हैमः।

९. शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला। भर्तृभक्ता च या नारी सा भवेद्वरवर्णिनी ॥ इति रुद्रः। १०. महिषी नृपयोषिति। सैरिभ्यामौषधीभेदे। इति हेमचन्द्रः। ११. विहाय महिषीमन्यराजयोषिति भोगिनी। इति मेदिनी। १२. द्वितीया तिथिगेहिन्योर्द्वितीयः पूरणे द्वयोः। इति हेमचन्द्रः।

भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।
पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
कृतसपत्निकाऽध्यूढाऽधिविन्नाथ स्वयंवरा ।
पतिंवरा च वर्याथ कुलस्त्री कुलपालिका ॥ ७ ॥

---

भार्या ( भ्रियते इति ण्यत् ) [१]जाया ( जायतेऽस्याम् इति यक् ) अथ—[२]दाराः ( दारयन्ति = दारयन्ति भ्रातॄन् इति ण्यन्ताद् दृ-धातोर्घञ् णिलुक् च । अथ शब्दात् पुं भूम्नो न पूर्वभाक्त्वम् । तेन पुलिङ्गे भूम्नि—बहुवचने ) ये ७ नाम विवाहिता स्त्री के हैं । जिनमें प्रथम ६ स्त्री० हैं ७ वां पुं० और नित्य बहुवचनान्त है ।

[३]कुटुम्बिनी ( कुटुम्बमस्त्यस्याः इति इनिः ) [४]पुरंध्री ( पुरम्—गेहं धारयतीति स्वार्थण्यन्तात् धारि-धातोः संज्ञायां खचि, ह्रस्वे, गौरादित्वात् ङीषि च ) ये दो स्त्री० नाम पुत्रादियों से युक्त सधवा स्त्री के हैं ।

सुचरित्रा ( शोभनं चरित्रमस्याः [५]सती ( एकस्मिन् पत्यौ अस्ति इति असधातोः शतृप्रत्यये अल्लोपे ङीपि च कृते साधुः ) साध्वी ( साध्नोति परकार्यमिति उण् ङीष् च विकल्पेन ) पतिव्रता ( पत्यौ व्रतं—नियमः अस्ति अस्याः ) ये चार स्त्रीलिङ्ग नाम पतिव्रता ( पतिसेवापरायणा ) स्त्री के हैं ॥ ६ ॥

[६]कृतसपत्निका ( सपत्न्येव सपत्निका कृता सपत्निका यस्याः, ) [७]अध्यूढा ( अधि—उपरि ऊढमुद्वहनमस्याः ) अधिविन्ना ( अधि—उपरि विन्नं लाभोऽस्याः ) ये तीन स्त्रीलिंग नाम अनेक विवाह किये हुए पुरुषकी पहली स्त्री के हैं ।

अथ स्वयंवरा ( स्वयं वृणीते संज्ञायां खचि ) पतिंवरा ( पतिं वृणोति ) [८]वर्या ( व्रियते अनया इति यत् ) ये तीन स्त्रीलिंग नाम अपनी इच्छा से पति वरण करने वाली स्त्री के हैं ।

कुलस्त्री ( कुलपालिका स्त्री मध्यमपदलोपी समासः ) कुलपालिका ( कुलं पालयतीति अण् स्वार्थे कन् च ) ये दो स्त्री० नाम कुलीना स्त्री के हैं ॥ ७ ॥

---

१. जायायास्तद्धि जायात्वं यदस्यां जायते पुनः । इति मनुः ।

२. टाबन्तोऽपि—क्रीडा हारा तथा दारा त्रय एते यथाक्रमम् । क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः ॥ इति व्याडिः । ३. कुटुंबं पोष्यवर्गे च । इत्यमरमाला ।

४. पुरं नपुंसकं गेहे । इति मेदिनी । ५. सन् साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयोः स्त्रियाम् । इति मेदिनी । ६. कृतसापत्निका पाठे—सपत्न्याः भावः स्वार्थे ष्यञ्, ङीष्, यलोपः कन् च स्वार्थे ह्रस्वत्वं च कृता सापत्निका यस्याः इति विग्रहः । कृतसापत्नकापाठे तु—सपत्न्या आगतम् अण् कन् च स्वार्थे सापत्नकम् । कृतं सापत्नकमस्याः असुपः प्रतिषेधात् इत्वाभावः ।

७. अध्यूढा कृतसापत्न्यनार्यामध्यूढ ईश्वरः । इति विश्वः ।

८. वर्या पतिंवरायां स्त्री, वरेण्ये त्रिषु ना स्मरे । इति मेदिनी ।

**कन्या कुमारी गौरी तु नग्निकाऽनागतार्तवा।**
**स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ८ ॥**
**समाः स्नुषाजनीवध्वश्चिरिण्टी तु सुवासिनी।**
**इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी ॥ ९ ॥**

---

[1]कन्या ( कन्यते=दीप्यते इति यक् अघ्न्यादित्वान्निपातितः कन्यायाः कनीन चेति लिङ्गात् ङीपोऽभावः ) [2]कुमारी ( कन्यते इति आरन्, उच्चोपधायाः ङीष् च 'वयसि प्रथमे' इत्यनेन ) ये दो स्त्री० नाम प्रथम अवस्था वाली लड़की के हैं।

[3]गौरी ( गूयते इति गुङ्शब्दे धातोः ऋज्रेन्द्रेत्यादिना रन्, वृद्धिः निपातनात् ङीष् च गौरादित्वात् ) [4]नग्निका ( नजते स्म व्रीडार्थक-ओलजी धातोः क्तः नत्वं स्वार्थे कन् इत्वं च ) अनागतार्तवा ( अनागतमार्तवं=रजो यस्याः ) ये तीन स्त्री० नाम उस स्त्री के हैं जिसे रजोधर्म न हुआ हो।

मध्यमा ( मध्ये भवा बाल्ययौवनयोरिति शेषः ) दृष्टरजाः ( दृष्टं रजो यस्याः ) ये दो स्त्री० नाम उस स्त्री का है जिसे पहली बार रजोधर्म हुआ हो।

[5]तरुणी ( तरतीति उनन् रश्च वयसीति ङीप् ) युवतिः ( यौतीति कनिनि युवा, स्त्रियां यूनस्तिः इति तिः ) ये दो स्त्री० नाम मध्यावस्था वाली के हैं।

स्नुषा ( स्नौति प्रस्रवति इति सः किच्च ) [6]जनी ( जायते वंशोऽस्याम् इति इण् वृद्धिनिषेधः ङीष् च ) [7]वधूः ( वहतीति ऊः धश्च ) ये तीन स्त्री० नाम पतोह के हैं।

चिरण्टी ( चिरेण अटति पितृगृहाद् भर्तृगृहम् इति अच् ङीष् च ) सुवासिनी ( सु अतीव वसति पितृगृहे तच्छीला इति णिनिः, स्ववासिनीत्यपि पाठः। स्वेषु पित्रादिषु वस्तुं शीलमस्याः ) ये दो स्त्री० नाम पिता के घर में रहने वाली विवाहिता युवती स्त्री के हैं।

इच्छावती ( इच्छा अस्त्यस्याः ) [8]कामुका ( कामयते इति उकञ् ) ये दो स्त्री० नाम किसी वस्तु को चाहने वाली स्त्री के हैं।

[9]वृषस्यन्ती ( वृषं नरं इच्छतीति क्यच् असुक् शतृ ङीष् च ) कामुकी ( कामयते इति उकञ् ङीप् च ) ये दो स्त्री० नाम मैथुनेच्छा वाली स्त्री के हैं ॥ ९ ॥

---

१- कन्या नार्यां कुमार्यां च राश्यौषधिविशेषयोः। इति हैमः। कन्या कुमारिका नार्योरौषधोराशिभेदयोः। इति मेदिनी। २. कुमारः स्याच्छुके स्कन्दे युवराजे श्ववारके। बालके वरुणद्रौ ना न द्वयोर्जातकाञ्चने। इति मेदिनी। कुमारी रामतरुणी नववल्योर्नदीभिदि। कन्या पराजिता गौरी जम्बूद्वीपेषु च स्मृता। इति विश्वः। ३. गौरी त्वसंजातरजः कन्याशंकरभार्ययोः। रोचनी रजनी पिङ्गा प्रियंगुवसुधासु च। इति मेदिनी। ४. नग्निका तु कुमार्यां स्यात् पुमान् क्षपणबन्दिनोः। इति मेदिनी।

५. तरुणी तलुनीति च शब्दभेदः। तलुनः पवने यूनि युवत्यां तलुनी स्मृता। इति मेदिनी।

६. जनो लोके जगद्भेदे पृथग्जने। जनी स्नुषावनितयोः। इति हैमः। जनी सीमन्तिनी वध्वोरुत्पत्तावौषधीभिदि। इति मेदिनी। ७. वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि। नवपरिणीतायां च। इति हैमः। ८. कामुकः कमनेऽशोकपादपे चातिमुक्तके। इति मेदिनी।

९. वृषो नरः वृषः कालः। इत्यनेकार्थमञ्जरी।

**कान्तार्थिनी तु या याति संकेतं साऽभिसारिका।**
**पुंश्चली चर्षिणी बन्धक्यसती कुलटेत्वरी॥ १०॥**
**स्वैरिणी पांसुला च स्यादशिश्वी शिशुना बिना।**
**अवीरा निष्पतिसुता विश्वस्ताविधवे समे॥ ११॥**
**आलिः सखी वयस्याऽथ पतिवत्नी सभर्तृका।**
**वृद्धा पलिक्नी प्रज्ञा तु प्राज्ञी प्राज्ञा तु धीमती॥ १२॥**

---

कान्तार्थिनी ( कान्तस्य अर्थः प्रयोजनं यस्याः, संकेतम् रतिस्थानं या यातीति सेति सम्बन्धः )—अभिसारिका ( अभिसरतीति ण्वुल् ) यह एक स्त्री० नाम सम्भोग के लिये पति या जार के संकेत स्थल पर जाने वाली स्त्री का है।

पुंश्चली ( पुंसः भर्तुः सकाशात् चलति पुरुषान्तरं गच्छति इति अच, गौरादित्वान् ङीष् ) [1]चर्षणी ( कर्षति मनः इति इनिः कृषेरादेश्च चः ) [2]बन्धकी ( बध्नाति मनोऽत्र ण्वुल्, गौरादित्वान् ङीष् ) असती ( सत्याः भिन्ना ) [3]कुलटा ( अटतीति अटा। कुलस्य अटा, शकन्ध्वादिः ) [4]इत्वरी ( एति गच्छीला इति क्वरप् तुक्, ङीप् च ) स्वैरिणी ( स्वेन स्वातन्त्र्येण ईरितुं शीलमस्याः इति णिनिः वृद्धि ) पांसुला ( पांसुः पापमस्त्यस्याः सिध्मादित्वात् लच् ) ये ८ स्त्री० नाम व्यभिचारिणी स्त्री के हैं॥ १०॥

अशिश्वी ( न विद्यते शिशुर्यस्याः इति ङीष् निपातनात् ) यह एक स्त्री० नाम पुत्रहीन स्त्री का है।
[5]अवीरा ( वीरयति अच् , न वीरा अवीरा ) यह एक स्त्री० नाम पति पुत्र से हीन स्त्री का है।
[6]विश्वस्ता ( विफलं श्वसिति स्मेति क्तः आगमशास्त्रस्यानित्यत्वान्वेट् ) विधवा ( विगतः धवः पतिरस्याः ) ये दो स्त्री नाम विधवा स्त्री के हैं॥ ११॥

[7]आलिः ( आलयति भूषयतीति णिच् ) [8]सखी ( समानं ख्यायते जनैः इति इण् डित् समानस्य सः ङीष् च ) वयस्या ( वयसा तुल्या इति यत् ) ये तीन स्त्री० नाम सहेली के हैं।
पतिवत्नी ( पतिरस्त्यस्याः मतुप् नुक् च ) सभर्तृका ( सह भर्ता अस्त्यस्याः कप् ) ये दो स्त्री नाम सधवा स्त्री के हैं।

वृद्धा ( वर्द्धते स्मेति क्तः ) पलिक्नी ( पलितमस्त्यस्याः अच् अल्लोपे, तकारस्य वर्णादनुदात्तादिति नकारे प्राप्ते तं प्रबाध्य तकारस्थाने क्नमादेशं तत्संनियोगेन ङीषं चेच्छन्त्येके आचार्याः इत्यर्थकेन

---

१. धर्षणी इति वा पाठः। धर्षयति इति ल्युट्। धर्षणं स्यात् परिभवे रतेऽसत्यां तु धर्षणी। इति मेदिनी। २. बन्धकः स्याद्विनिमये पुंश्चल्यां स्याच्च बन्धकी। इति मेदिनी। ३. कुलं जनपदे गेहे। इति विश्वः। कुलटा मनःशिलायां नेपाल्यामपि योषिति। इति मेदिनी। ४. इत्वर्यसत्यां पथिके क्रूरकर्मणि च त्रिपु। इति मेदिनी। ५. पतिपुत्रवती वीरा। इति नाममाला। ६. विश्वस्तो जातविश्वासे विश्वस्ता विधवा स्त्रियाम्। इति मेदिनी। विश्वस्ता विधवे तुल्ये विश्वस्तापतिनी च सा। इति वाचस्पतिः।
७. आलिः सखी सेतुरालिरालिरावलिरिष्यते। इति शाश्वतः। ८. सखा मित्रे सहाये ना वयस्यायां सखी मता। इति मेदिनी।

शूद्री शूद्रस्य भार्या स्याच् शूद्रा तज्जातिरेव च ।
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
अर्याणी स्वयमर्या स्यात् क्षत्रिया क्षत्रियाण्यपि ।
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ॥ १४ ॥
आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ।

---

'छन्दसि क्नमेके' इति वार्तिकेन साधुः । 'एके' इत्यनेन भाषायामपीत्यन्येऽर्थः पर्यवसितः ) ये दो स्त्री० नाम वृद्धा स्त्री के हैं जिसके बाल पके हों ।

[1]प्रज्ञा ( प्रजानातीति कः ) प्राज्ञी ( प्रज्ञाद्यण् ङीप् च ) ये दो स्त्री० नाम स्वयं जाननेवाली स्त्री के हैं ।

प्राज्ञा ( प्रज्ञाऽस्त्यस्याः इति णः ) धीमती ( धीरस्त्यस्याः मतुप् ) ये दो स्त्री० नाम चतुर स्त्री० के हैं ॥ १२ ॥

शूद्री ( शूद्रस्य स्त्री इति ङीष् ) यह एक स्त्री० नाम शूद्र की स्त्री का है चाहे वह किसी भी वर्ण वाली स्त्री में उत्पन्न हुई हो ।

शूद्रा ( टाप् ) यह १ स्त्री० नाम उस स्त्री का है जो शूद्रजातीय किसी अन्य वर्णकी भी स्त्री हो ।

आभीरी ( आभीरस्य स्त्री तज्जातीया वा ) महाशूद्री ( आभीरत्वजातिविशिष्टा स्त्री, महाशूद्र शब्दो हि आभीरत्वजातौ वर्तते । तत्र अवयवस्य अनर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाभावेन टाप् प्रसक्त्यभावात् । या तु महती शूद्रा तत्र महाशूद्रा इत्येव ) ये दो स्त्री० नाम ग्वालिन के हैं जो जाति एवं पुंयोग में तुल्य होते हैं ॥ १३ ॥

अर्याणी ( विनापि पुंयोगम् अर्यत्वजातिविशिष्टा स्त्री इति विकल्पेन ङीषानुकौ ) अर्या ( पक्षे टाप् ) ये दो स्त्री० नाम वैश्यकुल में उत्पन्न स्त्री के हैं ।

क्षत्रिया ( क्षत्रियत्वजातिविशिष्टा स्त्री ) क्षत्रियाणी ( ङीषानुकौ ) ये दो स्त्री० नाम क्षत्रियकुल में उत्पन्न स्त्री के हैं । उपाध्याया ( उपेत्य अस्याः अधीयते इति घञ्, अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् इति ङीष् उपाध्यायी, पक्षे उपाध्याया ) ये दो स्त्री० नाम स्वयं अध्यापन करनेवाली स्त्री के हैं ।

आचार्या ( स्वयं व्याख्यात्री, आचर्य इति ण्यत् ) यह एक स्त्री० नाम स्वयं मन्त्रव्याख्या करने वाली स्त्री का है ॥ १४ ॥

आचार्यानी ( आचार्यस्य स्त्री ङीषानुकौ णत्वाभावश्च ) यह एक स्त्री० नाम आचार्य-पत्नी का है ।

अर्यी ( अर्यस्य स्त्री इति ङीष् ) यह एक स्त्री० नाम अन्य जाति में भी उत्पन्न हुई वैश्य स्त्री का है ।

क्षत्रियी ( क्षत्रियस्य स्त्री ) यह एक स्त्री नाम किसी भी जाति में पैदा हुयी क्षत्रियपत्नी का है ।

---

१. प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति ।

उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥
वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ।
जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
स्त्री नग्निका कोटवी स्याद्दूतीसञ्चारिके समे ।
कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा ॥ १७ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।

---

उपाध्यायानी ( उपाध्यायस्य स्त्री ङीषानुकौ विकल्पेन ) उपाध्यायी ( आनुकाभावे ) ये दो स्त्री० नाम गुरुपत्नी के हैं ।

पोटा ( पोटयति—भासते इति अच् ) यह एक स्त्री० नाम स्तन, दाढी आदि स्त्री-पुरुष चिह्नों से युक्त स्त्री जैसे का है ॥ १५ ॥

वीरपत्नी ( वीरः पतिः यस्याः सा, सपत्न्यादित्वात् साधुः ) वीरभार्या ( वीरस्य भार्या ) ये दो स्त्री० नाम शूरवीर की पत्नी के हैं ।

वीरमाता ( वीरस्य माता ) वीरसूः ( वीरं सूते इति क्विप् ) ये दो स्त्री० नाम वीर की माता के हैं ।

जातापत्या ( जातमपत्यमस्याः ) प्रजाता ( स्म, गत्यर्थेति क्तः, अन्तर्भावितण्यर्थोऽत्र जनिः ) [1]प्रसूता ( प्रासविष्ट क्तः ) प्रसूतिका ( प्रसूता एव स्वार्थे कन् ) ये ४ स्त्री० नाम प्रसूतिका ( जच्चा ) के हैं ॥ १६ ॥

[2]नग्निका ( नजते स्म क्तः नत्वम् स्वार्थे कन् ) कोटवी ( कोटं वाति कः, गौरादित्वान् ङीषि ) ये दो स्त्री० नाम वस्त्ररहित नङ्गी स्त्री के हैं ।

दूती ( दुनोति = उपतापयति क्तः गौरादित्वान् ङीषि ) [3]संचारिका ( संचरति संचारयति वेति चार गतौ ण्वुल् ) ये दो स्त्री० नाम दूतीके हैं ।

[4]कात्यायनी ( कतस्यापत्यं गर्गादित्वात् अञ् ष्फः, आयन् ङीष् ) यह एक स्त्री० नाम अधबूढ़ गेरुआ वस्त्र पहनने वाली विधवा स्त्री का है ॥ १७ ॥

[5]सैरन्ध्री ( सीरं धरति कः बाहुलकान् मुक् अण् ङीष् ) यह एक स्त्री० नाम दूसरे के घर में रहने वाली, स्वतन्त्र, केश आदि गूँथने वाली स्त्री का है ।

---

१. प्रसूनं कुसुमे क्लीबं त्रिषु संजातसूनयोः । इति मेदिनी ।

२. नग्नो वन्दिक्षपणयोः पुंसि, त्रिषु विवाससि । इति मेदिनी ।

३. संचारिका तु युगले कुट्टनीघ्राणयोरपि । इति विश्व-मेदिन्यौ ।

४. कात्यायनी वररुचौ विशेषे च मुनेः पुमान् । काषायवस्त्रविधवार्धजरत्युभयोः स्त्रियाम् ॥ इति मेदिनी । ५. सैरन्ध्री परवेश्मस्थशिल्पकृत्स्ववशस्त्रियाम् । इति रभसः । चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरंध्री परिकीर्तिता ॥ इति कात्यः ।

असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी ॥ १८ ॥
वरस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः ।
सत्कृता वारमुख्या स्यात् कुट्टनी शम्भली समे ॥ १९ ॥
विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ रजस्वला ।
स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ।

---

[१]असिक्नी ( सिनोति षिञ् बन्धने क्तः, सिता शुक्लकेशा तद्भिन्ना, छन्दसि क्नः ङीप् ) यह एक स्त्री० नाम अवृद्धा आज्ञा प्राप्त कर इधर-उधर जाने वाली और अन्तः पुर ( रनिवास ) में रहने वाली स्त्री का है ॥ १८ ॥

वारस्त्री ( वारस्य = वृन्दस्य स्त्री ) गणिका ( गणः = समूहोऽस्त्यस्याः ठन् ) [२]वेश्या ( वेशेन नेपथ्येन शोभते यत् ) रूपाजीवा ( रूपमाजीवोऽस्याः ) ये चार स्त्री० नाम वेश्या स्त्री के हैं।

वारमुख्या ( वारे वेश्यावृन्दे मुख्या ) यह एक स्त्री० नाम जनों से सत्कार पायी हुई वेश्या का है।

कुट्टनी—( कुट्टयति ल्युट् ङीप् ) शंभली—( शं = सुखं भलते परिभाषते अच् गौरादित्वात् ङीष् ) ये दो स्त्री० नाम दूसरे की स्त्री को परपुरुष के साथ मिलाने वाली स्त्री का है ॥ १९ ॥

विप्रश्निका ( विविधः प्रश्नोऽस्त्यस्याः इति ठन् ) ईक्षणिका ( शुभाशुभयोः ईक्षणमस्त्यस्याः इति ठन् ) [३]दैवज्ञा ( दैवं शुभाशुभं जानातीति कः ) ये ३ स्त्री० नाम लक्षणादि से शुभाशुभको जानने वाली स्त्री का है।

रजस्वला ( रजोऽस्त्यस्याः इति वलच्, भत्वान्न रुत्वम् ) स्त्रीधर्मिणी ( स्त्रीधर्मो रजोऽस्त्यस्याः इति इनिः ) [४]अविः अत्रीः ( अवति लज्जया इति सर्वधातुभ्यः इन्, दीर्घान्ते ईः ) [५]आत्रेयी ( अत्रेरपत्यम् इति ढक् ) [६]मलिनी ( मलमस्त्यस्याः इति इनिः ) पुष्पवती ( पुष्पं रजोऽस्त्यस्याः इति मतुप् ) ऋतुमती ( ऋतुरस्त्यस्याः इति मतुप् ) उदक्या ( उदकमर्हति इति यत् ) ये ८ स्त्री० नाम रजस्वला स्त्री के हैं।

[७]रजः ( रज्यते अनेन इति असुन् ) [८]पुष्पम् ( पुष्प्यते इति घञ् ) [९]आर्तवम् ( ऋतुरेव इति प्रज्ञाद्यण् ) ये तीन न० नाम स्त्रीरज के हैं।

---

१. असक्निका स्यादवृद्धा या प्रेष्यान्तः पुरोषिता। इति कात्यः।
२. वेश्यं वेश्यागृहे क्लीबं गणिकायां तु योषिति। इति मेदिनी।
३. दैवज्ञो गणके पुमान्। दैवज्ञेक्षणिकायां स्त्री। इति मेदिनी।
४. अविं स्त्रीधर्मिणीं विद्यात्। इति कात्यः। ५. आत्रेयो मुनिरात्रेयी पुष्पवत्यां सरिद्भिदि। इति हैमः। ६. मलिनं कृष्णदोषयोः। मलिनी रजस्वलायाम्। इति हैमः।
७. रजः क्लीबं गुणान्तरे। आर्तवे च परागे च रेणुमात्रे च दृश्यते। इति मेदिनी।
८. पुष्पं विकासि कुसुमस्त्रीरजः स नपुंसकम्। इति मेदिनी। ९. आर्तवं स्त्रीरजे पुष्पे क्लीबं स्यादृतुजे त्रिषु। इति मेदिनी।

श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ॥ २१ ॥
आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।
गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
पुनर्भूर्दिधिषूरूढ़ा द्विस्तस्या दिधिषुः पतिः ।
स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥
कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः ।

---

[1]श्रद्धालुः ( श्रद्धत्ते तच्छीला इति आलुच् ) दोहदवती ( दोहदं गर्भिण्यभिलाषोऽस्त्यस्याः इति मतुप् ) ये दो स्त्री० नाम गर्भवश किसी वस्तु विशेष को चाहने वाली स्त्री का है।

निष्कला ( निर्गतं [2]कलं = शुक्रम् अस्याः ) विगतार्तवा ( विगतमार्तवमस्याः ) ये दो स्त्री० नाम रजोहीना ( जिसे रजोधर्म कभी न होता हो या वृद्धावस्था के कारण बन्द हो गया हो ) स्त्री के हैं ॥ २१ ॥

आपन्नसत्त्वा ( आपन्नः सत्त्वो जन्तुरनया इति ) [3]गुर्विणी ( गुरुर्दुर्जरोऽलघुर्वा गर्भोऽस्त्यस्याः इति इनिः, गकारोत्तरोकारस्य संज्ञापूर्वकत्वान्न गुणः ) अन्तर्वत्नी ( अन्तः अस्त्यस्यां गर्भः इति नुक्, निपातनान्मतुप् च ) गर्भिणी ( गर्भोऽस्त्यस्याः इति इनिः ) ये ४ स्त्री० नाम गर्भिणी स्त्री के हैं।

गाणिक्यम् ( गणिकानां समूहः इति यञ् ) गार्भिणम् ( गर्भिणीनां समूहः इति अण् ) यौवनम् ( युवतीनां समूहः, अणि पुंवद्भावे च। शत्रन्तात् यूधातोर्ङीपि, युवतीशब्दोऽयम्। तिप्रत्ययान्तस्य तु यौवनमित्येव। ) ये ३ न० नाम प्रत्येक के समूह के हैं ॥ २२ ॥

[4]पुनर्भूः ( पुनर्भवति संस्कृतेति क्विप्, द्विरूढा ) दिधिषूः ( दिधिं-धैर्यं स्यति इति कूप्रत्ययान्तो निपातनात् साधुः ) ये दो स्त्री० नाम दो बार व्याही स्त्री के हैं।

तस्याः = दिधिष्वाः पतिः—दिधिषूः ( आत्मनो दिधिषूमिच्छतीति ) यह एक पुं० नाम दोवार व्याही स्त्री के पति का है।

सा = द्विवारं वृता एव यस्य कुटुम्बिनी एवंभूतो द्विजः = क्षत्रियादिः—अग्रेदिधिषूः ( अग्रे इति विभक्तिरूपको निपातः, अग्रे प्रधानं दिधिषूः यस्य ) यह एक पुं० नाम उस पुरुषका है जिसके परिवार में दोबार व्याही हुई स्त्री की प्रधानता है ॥ २३ ॥

[5]कानीनः ( कन्यायाः अपत्यम् इति अण् कनीनादेशश्च ) यह एक पुं० नाम क्वारी कन्या के पुत्रका है। जैसे—कर्ण, व्यास।

---

१. श्रद्धालुर्दोहदिन्यां स्त्री श्रद्धायुक्ते च वाच्यवत्। इति मेदिनी।

२. कलं शुक्रे त्रिष्वजीर्णे नाव्यक्तमधुरध्वनौ। निष्कलं तु कलाशून्ये नष्टवीर्ये तु वाच्यवत्। इति मेदिनी। ३. गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। इति मेदिनी।

४. पुनर्भूः पतिरुक्तश्च पुनर्भूर्दिधिषूस्तथा। इति स्वामी। मनुस्तु-ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता॥ दिधिषूः परपूर्वाग्रे दिधिपूस्तत्पुरंध्रक। इति नाममाला। ५. कानीनः कन्यकासुते। कर्णे व्यासे। इति हेमचन्द्रः।

सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ।
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥ २५ ॥
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ।
कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ।
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥

---

सुभगासुतः ( सुभगायाः सुत ) सौभागिनेयः ( सुभगायाः अपत्यम् इति ढकि उभयपदवृद्धिश्च ) ये दो पुं० नाम सौभाग्यवती स्त्री के पुत्र के हैं।

पारस्त्रैणेयः ( परस्त्रियाः अपत्यम् इति ढकि उभयपदवृद्धिश्च ) यह एक पुं० नाम परस्त्री पुत्र का है ॥ २४ ॥

पैतृष्वसेयः ( पितृष्वसुरपत्यम् इति पितृष्वसृशब्दात् ढक्प्रत्ययविधानाभावात् 'ढकि लोपः' इति अन्त्यलोपविधानाज्ज्ञापकात् ढकि, अन्त्यलोपे, एयादेशे च ) पैतृष्वस्रीयः ( पितृष्वसुरपत्यम् इति छण् ) ये दो पुं० नाम फुफेरे भाई के हैं।

एवम्—मातृष्वसेयः, मातृष्वस्रीयस्च ( ढकि छणि च कृते ) ये दो पुं० नाम मौसेरे भाई के हैं।

वैमात्रेयः ( विरुद्धा माता विमाता, विमातुः अपत्यम् ढकि ) विमातृजः ( विमातुर्जातः इति डः ) ये दो पुं० नाम विमाता पुत्र अर्थात् सौतेले भाई के हैं ॥ २५ ॥

बान्धकिनेयः ( बन्धक्याः अपत्यम् इति ढकि, इनङ्ङादेशश्च ) बन्धुलः ( बन्धून् लातीति कः ) असतीसुतः ( असत्याः सुतः ) कौलटेयः ( कुलटायाः अपत्यम् ढकि ) कौलटेरः ( क्षुद्राभ्यो वा इति पक्षे ढ्रक् ) ये ५ पुं० नाम व्यभिचारिणी स्त्री के पुत्र हैं।

भिक्षा माँगने वाली यदि सती हो तो उसके पुत्र के—कौलटिनेयः ( कुलटायाः अपत्यम् इति विकल्पेन इनङ्ङादेशे ढकि च ) कौलटेयः ( इनङ्ङादेशाभावे )—ये दो पुं० नाम हैं ॥ २६ ॥

आत्मजः ( आत्मनो देहात् जातः इति डः ) तनयः ( तनोति कुलम् इति कयन् ) [1]सूनुः ( सूयते स्म इति क्तः ) [2]पुत्रः ( पुनाति स्ववंशानिति क्तः ) ये ५ पुं० नाम पुत्र के हैं।

स्त्र्यां अमी आत्मजादयाः स्त्रियां वर्तमानाः सन्तः दुहितरं कथयन्ति—पुत्री, तनया, आत्मजा, सूनुः [3]सुता, दुहिता ये ६ स्त्री० नाम लड़की के हैं ॥ २७ ॥

---

१. सूनुः पुत्रेऽनुजेऽर्के ना। इति मेदिनी। सुतस्तु पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता। इति मेदिनी। २. पुन्नाम्नो नरकात् यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ इति मनुः।

३. सुता तु दुहिता पुत्री। इति त्रिकाण्डशेषः।

आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ।
स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ २८ ॥
जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।
ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥ ३० ॥

---

अपत्यम् ( न पतत्यनेन इति बाहुलकात् यः ) [१]तोकम् ( तौतीति कः ) ये दो न० नाम सन्तान-मात्र के हैं । तयोः = पुत्रपुत्र्योः समे = समानलिङ्गे ।

[२]औरसः ( उरसा निर्मितः इति अण् ) उरस्यः ( यति कृते ) ये दो पुं० नाम अपने लड़के के हैं ।

[३]तातः ( तनोति इति क्तः दीर्घः नलोपश्च ) जनकः [४]( जनयति इति ण्वुल् वृद्धिनिषेधः ) पिता ( पाति इति निपातनात् साधुः ) ये तीन पुं० नाम पिता के हैं ।

जनयित्री ( जनयति इति तृच् ङीप् च ) प्रसूः ( प्रसूयते इति क्विप् ) माता [५]( मान्यते इति निपातनात् साधुः ) जननी ( जनयति इति ल्युट् ) ये चार स्त्री० नाम माता के हैं ।

भगिनी ( भगमस्ति अस्याः इति इनिः ) स्वसा ( सष्ठु अस्यति इति ऋन् ) ये दो स्त्री० नाम बहिन के हैं ।

ननान्दा [६]( न नन्दति = न तुष्यति कृतायामपि सेवायाम् इति ऋन् ) यह एक स्त्रीलिङ्ग नाम ननद का है ।

[७]नप्त्री ( न पतन्ति पितरोऽनेनेति तृच् टिलोपः नञः प्रकृतिभावः ङीप् च ) पौत्री ( पुत्रस्य पुत्र्याश्चापत्यम् विदादित्वात् अञ् ङीप् च ) सुतात्मजा ( सुतस्य सुतायाश्च आत्मजा ) ये तीन स्त्री० नाम पुत्र या कन्या की स्त्री सन्तति के हैं ॥ २९ ॥

याता ( यतते ऋन् वृद्धिश्च, याता यातरौ, यातरः ) यही स्त्री० नाम गोतनी ( पति के भाइयों की स्त्री ) का है । भ्रातृवर्गस्य भार्याः परस्परं यातरः स्युः ।

प्रजावती ( प्रजाऽस्त्यस्याः इति मतुप् ) भ्रातृजाया ( भ्रातुर्जाया ) ये दो स्त्री० नाम भौजाई के हैं ।

मातुलानी ( मातुलस्य स्त्री आनुकि ङीष् च ) मातुली ( आनुगभावपक्षे ) ये दो स्त्री० नाम मामा की पत्नी के हैं ॥ ३० ॥

---

१. तोकं सन्तानसुतयोः । इति हैमः ।

२. स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात् पुत्रं प्राथमकल्पकम् ॥ इति मनुः ३. तातोऽनुकम्प्ये पितरि । इति हेमचन्द्रः । ४. जनकः पितृभूपयोः । इति हैमः ।

५. माता गौर्दुर्गा जननी मही । मातरश्च ब्रह्माण्याद्याः । इति हैमः ।

६. ननन्दा तु स्वसा पत्युर्ननान्दा नन्दिनी च सा । इति शब्दार्णवः ।

७. नप्ता नप्त्री च पौत्रिका । इति रभसः ।

पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।
पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥ ३१ ॥
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ।
स्वस्त्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ॥ ३२ ॥
पितामहः पितृपिता तत्पिता प्रपितामहः ।
मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥

---

श्वश्रूः ( श्वशुरस्य स्त्री, पत्युर्माता पत्न्याः श्वश्रूः, पत्न्याः माता पत्युः श्वश्रूः 'श्वशुरस्योकाराकारलोपश्च' इति ङीषोऽपवादः ऊङ् ) यह एक स्त्री० नाम सास ( पति या पत्नी की माता ) का है ।

तयोः = पतिपत्न्योः पिता—श्वशुरः ( शु इति कृताकारलोपः आशुशब्दः तस्मिन्नुपपदे आप्तौ, गम्यमानायाम् अशू व्याप्तौ इत्यस्माद्धातोः उरन् प्रत्ययः इति तत्त्वबोधिनीकाराः ) यह एक पुं० नाम श्वशुर का है ।

पितृव्यः ( पितुर्भ्राता इति, निपातनात् व्यत्, नित्प्रत्ययस्तिद्धेति विचार्यम् ) यह एक पुं० नाम चाचा का है ।

[1]मातुलः ( मातुर्भ्राता इति डुलच् निपातनात् ) यह एक पुं० नाम मामा का है ॥ ३१ ॥

पत्न्याः भ्रातरः—श्यालाः ( श्यायते इति बाहुलकात् कालन् श्यां लातीति को वा ) स्युः इति सम्बन्धः । यह एक पुं० नाम शाला ( पत्नी के भ्राता ) का है ।

स्वामिनः कनिष्ठभ्राता—[2]देवा ( दिव्यतीति ऋः ) देवरः ( देवते इति अरः ) ये दो पुं० नाम देवर ( स्वामी के छोटे भाई के ) हैं ।

स्वस्रीयः ( स्वसुः अपत्यम् छः ) भागिनेयः ( भगिन्याः अपत्यम् ढक् ) ये दो पुं० नाम बहिन के लड़के का है ।

दुहितुः = कन्यायाः पतिः—जामाता ( जायां माति अन्तर्भावितण्यर्थे :तृच् निपातनात् साधुः ) यह एक पुं० नाम दामाद का है ॥ ३२ ॥

[3]पितामहः ( पितुः पिता इति डामहच् ) यह एक पुं० नाम दादा का है ।

तत् = तस्य पितामहस्य पिता इति सम्बन्धः—प्रपितामहः ( प्रकर्षेण पितामहः ) यह एक पुं० नाम प्रपितामह का है । मातुः-पिता मातामहः ( डामहच् ) प्रमातामहः ( प्रकर्षेण मातामहः ) ये दोनों पुं० नाम क्रमशः नाना-परनाना के हैं ।

[4]सपिण्डः ( समानः पिण्डो देहो = मूलपुरुषो वाऽस्य समानस्य सः ) सनाभिः ( समानो नाभिः मूलपुरुषो वाऽस्य समानस्य सः ) ये दो पुं० नाम सप्तपुरुषावधि ज्ञाति के हैं ।

---

१. मातुलो मदनद्रुमे । धत्तूरे व्रीहिभिदोः पितृशालेऽपि । हैमः । २. देवे धवे देवरि माधवे च । इति श्रीहर्षः । ३. पितामहः पद्मयोनौ जनके जनकस्य च । इति हैमः । ४. सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । इति मनुः ।

समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥
ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ।
धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥
अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।
भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥

---

समानोदर्यः ( समाने उदरे शयितः इति यत् ) सोदर्यः ( विभाषया समानस्य सभावः ) सगर्भ्यः ( समाने गर्भे भवः इति यत्, [1]सह = तुल्ये गर्भे कुक्षौ भवः, सह उदरेण वर्तते इति विभाषया सभावे सोदरः [2]सहोदरश्च ) सहजः ( सह तुल्ये उदरे जातः इति डः ) ये ४ पुं० नाम एक माता से उत्पन्न सहोदर भाई के हैं ।

सगोत्रः ( समानं गोत्रं = कुलमस्य इति समानस्य सः [3]बान्धवः ( बध्नातीति उः, प्रज्ञाद्यण् ) [4]ज्ञातिः ( जानातीति क्तिच् ) स्वः ( स्वनति शब्दायते इति डः ) स्वजनः ( स्वः = आत्मीयश्चासौ जनश्चेति ) समाः = समानलिङ्गकाः समानार्थाः वा । ये ६ पुं० नाम सगोत्र के हैं ॥ ३४ ॥

ज्ञातेयम् ( ज्ञातेर्भवः इति ढक् ) बन्धुता ( बन्धूनां समूहः इति तल् ) ये दो नाम क्रमसे ज्ञातियों के भाव तथा बन्धुओं के समूह का एक-एक नाम है, जिनमें प्रथम नपुं०, द्वि० स्त्री० है । ( क्रमात् एकैकम् नाम तेषां सगोत्राणाम् भावसमूहयोः अर्थयोः—ज्ञातेयम्, बन्धुता इति सम्बन्धः )

धवः ( धवति = कम्पते इति घञ्, संज्ञापूर्वकत्वाद् वृद्ध्यभावः ) प्रियः ( प्रीणाति इति कः ) पतिः ( पातीति डतिः ) भर्ता ( बिभर्तीति तृच् ) ये ४ पुं० नाम पति के हैं ।

[5]जारः ( जारयति इति जॄष् वयोहानौ धातोः घञ्, णिलुक् च ) उपपतिः ( उपमितः पत्या ) ये दो पुं० नाम मुख्य से भिन्न अप्रधान पति ( यार ) के हैं ॥ ३५ ॥

अमृते भर्तरि जारजः—जाराज्जातः—[6]कुण्डः ( कुण्डयते—दह्यते कुलमनेन इति घञ् ) यह एक पुं० नाम पति के जीवित रहने पर उपपति से उत्पन्न पुत्र का है ।

मृते भर्तरि जारजो[7] गोलकः ( गुडयते = रक्ष्यते इति घञ् स्वार्थे कन् च डलयोरैक्यात् ) यह एक पुं० नाम विधवा में जार से उत्पन्न पुत्र का है ।

भ्रात्रीयः ( भ्रातुरपत्यम् इति छः ) भ्रातृजः ( भ्रातुर्जातः इति डः ) ये दो पुं० नाम भ्रातृपुत्र ( भतीजे ) के हैं ।

---

१. सह साकल्यसादृश्ययौगपद्यसमृद्धिषु । इति विश्वः । २. भ्राता तु स्यात्सहोदरः । समानोदर्यसोदर्यसगर्भ्यसहजा अपि । सोदरश्च । इति नाममाला । ३. बान्धवो बन्धुमित्रयोः इति हैमः । बन्धुर्मातृबान्धवयोः । इति च हैमः । ४. ज्ञातिस्तातसगोत्रयोः । इति मेदिनी । ५. जारस्तूपपतौ जार्योषधीभिदि । इति हैमः । ६. कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जार सुते पुमान् । इति मेदिनी । ७. गोलको विधवापुत्रो जारात्, स्यान्मणिके गुडे । इति मेदिनी ।

मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
दंपती जंपती जायापती भार्यापती च तौ ।
गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् ॥ ३८ ॥
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ ।

---

भ्रातृभगिन्यौ ( भ्राता च भगिनी चेति ) भ्रातरौ ( स्वसा च भ्राता चेत्येकशेषः ) ये दो पुं० नाम भाई-बहन समुदाय के हैं। ये नित्यद्विवचनान्त ही रहते हैं ॥ ३६ ॥

मातापितरौ ( माता च पिता च इति आनङ्, अभ्यर्हितत्वात् मातृशब्दस्य पूर्वनिपातश्च ) पितरौ ( एकशेषः ) मातरपितरौ ( उदीचां मतेन एकशेषस्य वैकल्पिकत्वात् द्वन्द्वे मातृशब्दस्य अरङन्तादेशः ) प्रसूजनयितारौ ( प्रसूश्च जनयिता च ) ये ४ पुं० नाम माता और पिता के समुदाय के हैं। इनका प्रयोग नित्य द्विवचनान्त ही होता है।

श्वश्रूश्वशुरौ ( श्वश्रूश्च श्वशुरश्चेति द्वन्द्वः ) श्वशुरौ ( एकशेषः ) ये दो पुं नाम सास-ससुर समुदाय के हैं जो नित्य द्विवचनान्त ही प्रयुक्त होते हैं।

पुत्रौ ( पुत्रश्च दुहिता च इति एकशेषः ) यह एक पुं० नि० द्वि० नाम पुत्र और कन्या के समुदाय का है ॥ ३७ ॥

[१]दम्पती ( जाया च पतिश्च राजदन्तादित्वात् जायाशब्दस्य निपातनात् वैकल्पिको दम्भावः ) जम्पती ( जम्भावे ) जायापती ( दम्,-जम्भावाभावे ) भार्यापती ( भार्या च पतिश्च ) ये ४ पुं० नाम पतिपत्नी समुदाय के हैं जो नित्य द्विवचनान्त हैं।

गर्भाशयः ( गर्भ आशेते अत्र इति घः ) जरायुः ( जरामेति इति इण् गतौ अस्मात् उण् ) ये दो पुं० नाम गर्भाशय ( जिसमें बच्चा लिपटा रहता है उस चर्म के हैं।

उल्वम् ( उल्ली = याते इति उल्वादयश्चेति निपातनात् साधुः ) कललम् ( कल्यते इति कलच् ) ये दो नाम वीर्य और रक्त समुदाय के हैं। जिनमें प्रथमः नपुं० और द्वितीय पुं० नपुं० है। किन्हीं आचार्यों के मतमें गर्भाशयः जरायुः, उल्वम्, कललः ये चारों नाम गर्भाशय अर्थात् जिसमें गर्भ लपेटा रहता है उस चर्म के हैं ॥ ३८ ॥

[२]सूतिमासः ( सूते प्रसवस्य मासः ) वैजननः ( विजायतेऽस्मिन् इति अधिकरणे ल्युट् ततः प्रज्ञाद्यण् ) ये दो पुं० नाम जन्ममास के हैं।

[३]गर्भः ( गीर्यते = शब्द्यते इति भन् भ्रूणः ( भ्रूण्यते इति भ्रूण आशाविशङ्कयोः इत्यस्मात् धातोः घञ् ) ये दो पुं० नाम उदरस्थ जीव के हैं जो समानार्थक और समानलिङ्गक हैं।

---

१. दाराः पुंसि बहुत्वे च दं कलत्रे नपुंसकम्। इत्यमरमाला। पत्न्यां जं दमलिङ्गत्वे। इति नाभप्रपञ्चः। शाल्मली मैथिली मैत्री दंपती जंपती च सा। इति वाचस्पतिना स्त्रीत्वमप्युक्तम्।

२. नवमे दशमे वापि प्रबलैः सूतिमारुतैः। निःसार्यते वाण इव जन्तुश्छिद्रेण सत्वरं ॥ ( सज्वरः इति वा पाठः ) इति। याज्ञवल्क्यः। ३. गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके। इति विश्वमेदिन्यौ।

तृतीयप्रकृतिः शण्ढः क्लीबः षण्डो नपुंसके ॥ ३९ ॥
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ।
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥
पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ।
स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी ॥ ४१ ॥

---

तृतीयप्रकृतिः ( तृतीया चासौ प्रकृतिश्च = तृतीयः प्रकारः स्त्रीपुंसोर्भिन्नः ) [1]शण्ढः ( शाम्यतीति उपशमार्थक-शमुधातोः ढः ) [2]क्लीबः ( क्लीबते इगुपधात्कः ) [3]षण्डः ( षण्डते इति अच् ) [4]नपुंसकम् ( न स्त्री न पुमान् इति निपातनात् नपुंसकभावः ) ये ५ नाम हिजड़ा के हैं जिनमें प्रथम स्त्री० और २–४ पुं० हैं शेष ५ वां न० पुं० दोनों हैं ।

शिशुत्वम् ( शिशोर्भावः ) शैशवम् ( अण् ) बाल्यम् ( बालस्य भावः ब्राह्मणादिः ) ये तीन न० नाम बचपन के हैं ।

तारुण्यम् ( तरुणस्य भावः ष्यञ् ) यौवनम् ( यूनः भावः अण् ) ये दो न० नाम जवानी के हैं ।

स्थाविरम् ( स्थविरस्य भावः अण् ) वृद्धत्वम् ( वृद्धस्य भावः त्वः ) ये दो न० नाम बुढ़ापा के हैं ।

वृद्धसंघः ( वृद्धानां संघः ) [5]वार्धकम् ( वृद्धानां समूहः इति वुञ् ) ये दो नाम वृद्धसमूह के हैं। जिनमें प्रथम पुं०, द्वितीय नपुंसक है । अपिशब्द से 'वृद्धत्व' अर्थ में भी इनका प्रयोग जानना चाहिये । वाधकशब्द से चतुर्वर्णादित्वात्' स्वार्थ में ष्यञ् करने पर 'वार्धक्यम्' भी बनता है । 'वृद्धानां भावः, कर्म वा' इस विग्रह में 'मनोज्ञादित्वात्' वुञ् समझना चाहिए ॥ ४० ॥

[6]पलितम् ( पलति स्म, पल गतौ अस्मात् क्तः निपातनात् ) यह एक न० नाम वृद्धावस्था के कारण बाल पकने का है । आदि पद से दाढी-मूछ का भी संग्रह है ।

विस्रसा ( विस्रस्यतेऽनया अङ् ) जरा ( जीर्यतेऽनया भिदाद्यङ् ) ये दो स्त्री नाम वृद्धावस्था के हैं ।

उत्तानशया ( उत्ताना शेते इति अच् ) [7]डिम्भा ( डिम्भयति इति अच् ) स्तनपा ( स्तनौ पिबति इति कः ) स्तनन्धयी ( स्तनं धयति इति = पिबति इति खश् ङीप् ) ये ४ स्त्री नाम दूध पीने वाली बालिका के हैं । स्त्रीलिंग का निर्देश मात्र स्त्रीप्रत्यय प्रदर्शनार्थ है । विबक्षित नहीं । क्योंकि—आगे 'त्रिषु जरावराः' कहेंगे । पुंलिङ्ग में—उत्तानशयः, डिम्भः, स्तनपः, स्तनंधयः' प्रयोग होते हैं और नपुंसक लिङ्ग में उत्तानशयम्, डिम्भम्, स्तनम्, स्तनंधयम् प्रयोग होते हैं ॥ ४१ ॥

---

१. क्लीबं शण्ढश्च कञ्चुकी । इति रभसः । शण्ढः स्यात् पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि ॥ इति मेदिनी । शण्डशण्ढौ तु सोविदौ । बन्ध्यापुंसीश्वरे क्लीबे । इति हैमः ।

२. अस्त्री नपुंसके क्लीबं वाच्यलिङ्गस्त्वविक्रमे । इति रुद्रः ।

३. पण्डः षण्ढे धियि स्त्री स्यात् । इति मेदिनी । ४. 'स नपुंसको भवेत्' इति भाष्यात् पुंस्त्वमपि ।

५. वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि । इति विश्वः । ६. पलितं शैलजे तापे केशपाके च कर्दमे । इति मेदिनी । ७. डिम्भोऽपि बालिशे बाले । इति मेदिनी ।

बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा।
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥
वर्षीयान् दशमी ज्यायान् पूर्वजस्त्वग्रियोऽग्रजः।
जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ ४३ ॥
अमांसो दुर्बलश्छातो बलवान् मांसलोंऽसलः।

---

[1]बालः ( बलते संचलति इति घञ् ) [2]माणवकः ( मनोरयम् इति अण् निपातनात् णत्वम्, अल्पः माणवः इति कन् ) ये दो पुं० ( त्रि० ) नाम बालक के हैं।

[3]वयस्थः ( वयसि तिष्ठतीति कः ) [4]तरुणः ( तरतीति उनन् वैकल्पिकलत्वे—तलुनः, स्त्रियां ङीषि तरुणी, तलुनी ) युवा ( यौतोति कनिन् ) ये ३ पुं० ( त्रि० ) नाम नौ जवान के हैं।

प्रवयाः ( प्रगतं वयोऽस्य ) स्थविरः ( तिष्ठतीति निपातपात् ) [5]वृद्धः ( वर्धते स्म इति क्तः ) जीनः ( जिनाति स्म इति क्तः, सम्प्रसारणम्, दीर्घः नत्वञ्च ) [6]जीर्णः ( जीर्यति स्म इति क्तः ) जरन् (जीर्यति स्म अतृन्, ऋकारस्य गुणे रपरोऽकारः, नुम्, संयोगान्तलोपस्यासिद्धत्वात्र दीर्घः ) ये ६ पुं० ( त्री० ) नाम वृद्ध के हैं।

वर्षीयान् ( अतिशयेन वृद्धः इति ईयसुन्, वर्षादेशस्च ) दशमी ( दशमोऽवस्थाविशेषोऽस्यास्तीति इनिः ) ज्यायान् ( अतिशयेन वृद्धः वृद्धशब्दस्य ज्यादेशे आत्वम् च ) ये तीन पुं० ( त्रि० ) नाम अतिवृद्ध के हैं।

पूर्वजः ( पूर्वस्मिन् जातः इति डः ) अग्रियः ( अग्रे भवः इति घः, छप्रत्यये—अग्रीयः, यति-अग्र्यः अग्रिमः इति पाठो डिमचि बोध्यः ) अग्रजः ( अग्रे जातः इति डः ) ये ३ पुं० ( त्रि० ) नाम प्रथम पैदा हुए के हैं।

जघन्यजः ( जघन्ये अवरकाले जातः इति डः ) कनिष्ठः ( अतिशयेन युवा इति इष्ठनि, कन्नादेशे च ईयसुनि—कनीयानपि ) पक्षे—यवीयः ( अयमनयोः अतिशयेन युवा इति ईयसुपरयणादेर्लोपः पूर्वस्य च गुणः ) अवरजः ( अवरस्मिन् काले जातः डः ) अनुजः ( अनु पश्चात् जातः इति सोपसर्गाज्जनधातोः डः ) ये ५ पुं० ( त्रि० ) नाम छोटे भाई के हैं ॥ ४३ ॥

अमांसः ( न=अल्पं मांसं यस्य ) दुर्बलः ( दुष्टं बलमस्य ) [7]छातः ( अछासीत् इति क्तः ) ये तीन पुंलिङ्ग ( त्रि० ) नाम दुर्बल के हैं।

बलवान् ( बलमस्यातीति मतुप् ) मांसलः ( मांसमस्त्यस्य इति लच् ) अंसलः ( अंसोऽस्त्यस्य इति लच् ) ये ३ पुं० ( त्रि० ) नाम बलवान् के हैं।

---

१. बालोऽज्ञेऽश्वेभपुच्छयोः। शिशौ ह्रीवेरकचयोर्बाला तु त्रुटियोषितोः। वाली भूषान्तरे मेधौ। इति हैमः। २. हारभेदे माणवको वाले कुपुरुषेऽपि च। इति विश्वः।

३. वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके। इति विश्वः। ४. तरुणं कुब्जपुष्पे ना रुचके यूनि तु त्रिषु। इति इति विश्वः।

५. वृद्धः प्राज्ञे च स्थविरे वृद्धं शैलेयरूढयोः। इति हैमः। ६. जीर्णः पक्वपुराणयोः। इति मेदिनी।
७. शातः इति वा पाठः। दुर्बले निशिते स्यातां शितशाताविभौ त्रिषु। इति रभसः।

तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥ ४४ ॥
अवटीटोऽवनाटश्चावभ्रटो नतनासिके ।
केशवः केशिकः केशी वलिनो वलभिः समौ ॥ ४५ ॥
विकलाङ्गस्त्वपोगण्डः खर्वो ह्रस्वश्च वामनः ।
खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ॥ ४६ ॥

---

[1]तुन्दिलः ( अतिशयितं तुन्दमुदरमस्य इति इलच् ) तुन्दिकः ( ठनि ) तुन्दी ( इनि ) बृहत्कुक्षिः ( बृहत्कुक्षिरस्य ) पिचण्डिलः ( अतिशयितं पिचण्डम् = उदरं यस्य इति इलच् ) ये ५ पुं० ( त्रि० ) नाम बढ़े हुए पेट वाले ( तोंदवाले ) के हैं ॥ ४४ ॥

नता नासिका यस्य तस्मिन् इति सम्बन्धः । अवटीटः ( नासिका-साधनके नमने अवशब्दो वर्तते तस्मात् टीटच् , नाटच् भ्रटच् प्रत्ययाः, । अवनाटः, अवभ्रटः ) नासिकायाः नतं अवनमनम्—अवटीटम् , नासिकायाः अवटीटम् = नतम् अस्ति अस्याः अर्शआदच् अवटीटा, अवटीटा नासिका अस्ति अस्य इति अर्शआदच् अवटीटः पुरुषः ये ३ पुं० स्त्री नाम चिपटी नाक वाले के हैं ।

केशवः ( प्रशस्ताः केशाः सन्ति अस्य इति वः ) केशिकः ( ठनि ) केशी ( इनि, मतुपि—केशवान् ) ये ३ पुं० ( त्रि० ) नाम सुन्दर केश वाले के हैं ।

वलिनः ( वलिः = त्वक्संकोचः अस्त्यस्य इति पामादित्वात् नः ) वलिभः ( भः ) ये दो पुं० (त्रि०) नाम—जिसके चमड़े में सिकुडन आ गया हो—उसके हैं ॥ ४५ ॥

विकलाङ्गः ( विकलमङ्गमस्य ) [2]पोगण्डः ( पवते इति विच् , पौः गण्डः एकदेशोऽस्य, पृषोदरादिः ) ये दो पुं० ( त्रि० ) नाम विकलाङ्ग अर्थात् कम या अधिक अङ्ग वाले के हैं ।

खर्वः ( खर्वति इति अच् ) ह्रस्वः ( ह्रसति = शब्दं करोति इति उल्वादित्वात् वः ) [3]वामनः ( वामयतीति = उद्गारयतीति ल्युट् , वामोऽल्पयस्तीति पामादित्वात् नः वा, स्त्रियां वामनी ) ये तीन त्रि० नाम बौना के हैं ।

खरणाः ( खरा तीक्ष्णा नासिकाऽस्येति वैकल्पिकनसादेशे णत्वे दीर्घे च, पक्षे—)—खरणसः ( अच् , नसादेशः, णत्वञ्च ) ये दो त्रि० नाम नुकीली नाक वाले के हैं ।

विग्रः ( विगता नासिका यस्य इति नासिकायाः ग्रादेशे, ख्यादेशे विख्यश्च ) गतनासिकः ( गता = नष्टा नासिका यस्य ) ये दो त्रि० नाम नककटा के हैं । शाकटायन ने [4]'विखुः' और 'विखः' को भी पर्याय माना है ॥ ४६ ॥

---

१. तुन्दिभः इति पाठे तु भप्रत्ययेन समाधेयम् । २. पोगण्डो विकलाङ्गकः। इति रत्नकोशः । पोगण्डो विकलाङ्गः स्यादिति हलायुधः । अपोगण्डः इति पाठे नञ् समासः । अपोगण्डस्तु शिशुके विकलाङ्गे च भीरुके । इति विश्वः । ३. वामनो नीचि खर्वे च त्रिषु पुंसि तु दिग्गजे । हारावङ्कोटवृक्षे । इति मेदिनी ।
४. विग्रो विखुर्विनासिकः । इति रभसः ।

खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः।
ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात् संज्ञुः संहतजानुकः॥ ४७॥
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः।
पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते॥ ४८॥

---

खुरणाः ( खुर इव नासिकाऽस्य इति नासिकाया वैकल्पिकनसादेशे णत्वे दीर्घे ) पक्षे—अप्नि नसादेशश्च—खुरणसः ये दो त्रि० नाम पमुखुर सदृश नाकवाले के हैं।

[1]प्रज्ञुः ( प्रगते=विरले जानुनी यस्य इति ज्ञु रादेशे ) प्रगतजानुकः ( प्रगते जानुनी यस्य इति कप् ) ये दो त्रि० नाम वातादि रोग से विरल जङ्घा वाले के हैं।

ऊर्ध्वज्ञुः ( ऊर्ध्वे जानुनी यस्य इति ज्ञु रादेशे ) पक्षे—ऊर्ध्वजानुः—ये दो त्रि० नाम बैठने पर जिसकी जङ्घा ऊपर को उठी हो उसके हैं।

[2]संज्ञुः ( संहते जानुनी यस्य इति प्राग्वत् ज्ञु रादेशः ) संहतजानुकः ( संहते जानुनी यस्य कप् ) ये दो त्रि० नाम सटी हुई जङ्घा वाले के हैं॥ ४७॥

एडः ( आ ईड्यते=स्तूयते इति संज्ञायां घञ् अच् वा ) बधिरः ( बध्नाति इति किरच् ) ये दो त्रि० नाम श्रवणशक्ति रहित के हैं।

[3]कुब्जः ( कौ उब्जति इति अच्, कु=ईषद् उब्जमार्जवमस्य शकन्ध्वादिः [4]गडुलः ( गडतीति उः, गडुरस्यास्तीति लच् ) ये दो त्रि० नाम कूबड़ा के हैं।

कुकरः ( कुत्सितः करोऽस्य ) कुणिः[5] ( कुणति इति इनिः ) ये दो त्रि० नाम रोग से टेढे हाथ वाले के हैं।

पृश्निः ( स्पृशति इति निपातनात्, स्पृशतेः सलोपश्च ) अल्पतनुः ( अल्पा तनुरस्य ) ये दो त्रि० नाम छोटे शरीर वाले के हैं।

श्रोणः ( श्रोणति इति अच् ) पङ्गुः ( पनते=स्तौति इति बाहुलकात् गुः, स्त्रियामूङ् पंगूः ) ये दो त्रि० नाम लङ्गड़े ( जंघाहीन ) के हैं।

[6]मुण्डः ( मुण्ड्यते इति घञ् ) मुण्डितः ( मुण्ड्यते स्म इति क्तः ) ये दो त्रि० नाम मूडे शिर वाले के हैं॥ ४८॥

---

१. प्रज्ञुः प्रगतजानुः स्यात् प्रज्ञोऽप्यत्रैव दृश्यते।

२. संज्ञुः संहतजानौ च भवेत् संज्ञोऽपि तत्र हि। ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादूर्ध्वज्ञोऽप्यूर्ध्वजानुके। इति साहसाङ्कः। ३. कुब्जो वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गकः। इति मेदिनी।

४. गडुः पृष्ठगुडे कुब्जे। इति मेदिनी।

५. कुणिरतुन्नकवृक्षे ना कुकरे त्वभिधेयवत्। इति मेदिनी। निसर्गतः कूणिपङ्गुपौगण्डा इति दीर्घोकारवानपि। इति नाममाला। ६. मुण्डो मुण्डितशीर्षयोः राहौ दैत्यान्तरे। इति हैमः।

बलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः।
जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया।
भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ ५० ॥
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः।
क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ॥ ५१ ॥

---

[1]वलिरः ( वलते इति किरच् ) केकरः ( के मूर्ध्नि कर्तुं शीलमस्य इति टः ) ये दो त्रि० नाम ऐंच कर देखने वाले के हैं।

[2]खोडः ( खोडति इति अच् ) खञ्जः ( खञ्जति इति अच् ) ये २ त्रि० नाम लँगड़ा ( गतिविकल ) के हैं।

त्रिष्विति०—( जराशब्दादवरा अर्वाचीना उत्तानशयाद्यास्त्रिलिङ्गाः ) जडुलः ( जलति इति उलच् ) कालकः ( कालयति इति ण्वुल् ) पिप्लुः ( अपिप्लवते इति मिद्र्वादित्वात् डुः अल्लोपश्च ) ये ३ पुं० नाम जन्मकाल से ही उत्पन्न शरीर के चिह्न विशेष ( लहसन ) के हैं।

तिलकः ( तिल इवेति कन् ) तिलकालकः ( तिल इव कालकः ) ये २ पुं० नाम काली तिल के सदृश शरीर के चिह्न के हैं ॥ ४९ ॥

अनामयम् ( आमयस्याभावः इति अर्थाभावेऽव्ययीभावः ) आरोग्यम् ( न रोगोऽस्य इति ष्यञ् ) ये २ न० नाम रोगरहित ( नीरोग ) के हैं।

चिकित्सा ( कितेर्व्याधिप्रतीकारे इति सन्। चिकित्सनम् इति अकारप्रत्ययः ) रुक्प्रतिक्रिया ( रुजः प्रतिक्रिया = निरसनम् ) ये २ स्त्री० नाम चिकित्सा के हैं।

भेषजम् ( भेषयति इति ण्यन्तः, अच् भेषं = रोगं जयति इति डा ) औषधम् ( ओषधेरिदम् इत्यण् ) भैषज्यम् ( भेषजमेव इति ष्यः ) अगदः ( गदविरुद्धम्। न गदोऽस्मात् ) जायुः ( जयति रोगम् इति उण् ) ये क्रम से ३ न० और २ पुं० नाम औषध ( दवा ) के हैं ॥ ५० ॥

रुक् ( रुजति = भंजति देहम् इति क्विप् ) [3]रुजा ( रुजति देहम् इति कः टाप् च ) [4]उपतापः ( उपतापयति इति अच् ) रोगः ( रुजति इति घञ् ) व्याधिः ( विविधा आधयोऽस्मात्, व्याधानं वेति किः ) गदः ( गदति इति अच् ) आमयः ( अम रोगे इति भावे घञ्, आमं यान्त्यनेन इति डः ) ये क्रम से २ स्त्री० १, पुं० नाम व्याधि ( रोग ) के हैं।

[5]क्षयः ( क्षयति देहम् इति अन्तर्भावितण्यर्थः। अच् ) [6]शोषः ( शोषयति इति अच् ) यक्ष्मा ( यक्षयते यक्ष्यते वेति मनिन् ) ये ३ पुं० नाम राजयक्ष्मा ( टी. बी. ) के हैं।

प्रतिश्यायः ( प्रतिक्षणं श्यायते इति णः, प्रतिश्यायतेऽनयेति अङि प्रतिश्या अपि ) [7]पीनसः ( पीनं स्यति सायति वेति कः ) ये २ पुं० नाम पीनस ( नामके ) रोग के हैं ॥ ५१ ॥

---

१. टेरे वलिरकेकरौ। इति रभसः। २. अथ खञ्जके खोडखोरौ। इति रभसः।

३. रुजा त्वामयभङ्गयोः। इति हैमः। ४. उपतापो गदे तापे। इति हैमः।

५. गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे। इति हैमः। ४. क्षयो गेहे कल्पान्तेऽपचये रुचि। इति हैमः।

६. शोषः शोषणयक्ष्मणोः। इति हैमः। ७. आपीनसः प्रतिश्या स्यात्। इति रभसात् आपीनसोऽपि )

स्त्री क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान् ।
शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ॥ ५२ ॥
किलाससिध्मे कच्छ्वां तु पामपामे विचर्चिका ।
कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकः स्त्रियाम् ॥ ५३ ॥
व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् ।

---

क्षुत् ( क्षवणम् इति क्विप् संप० ) क्षुतम् ( क्षवणम् इति भावे क्तः ) [१]क्षवः ( क्षवणम् इति अप् ) ये ३ नाम क्रम से १ स्त्री० १ न० १ पुं० छींक के हैं।

[२]कासः ( कासतेऽनेन इति घञ् ) [३]क्षवथुः ( क्षौत्यनेन इति अथुच् ) ये २ पुं० नाम खाँसी के हैं।

[४]शोफः ( शवति इति बाहुलकात् फः, उठ् च, संज्ञापूर्वकत्वात् न वृद्धिः, गुणः ) श्वयथुः ( श्वयति अनेन इति अथुच् ) शोथः ( शवति इति बाहुलकात् थः ऊठ् च गुणः ) ये ३ पुं० नाम सूजन के हैं।

पादस्फोटः ( स्फुटनम् इति घञ्, पादस्य स्फोटः इति अण् ) विपादिका ( विपद्यतेऽनया इति ण्वुल् ) ये २ नाम क्रम से १ पुं० १ स्त्री पैर के तलवे में फटने वाले रोग ( बिवाय ) के हैं ॥ ५१ ॥

किलासम् ( किलति इति कः, अस्यति इति अच्, किलं च तदसं च ) [५]सिध्मन् ( सिध्यति इति बाहुलकान्मक् ) ये २ न० नाम सहुँआ के हैं।

कच्छूः ( कषति इति ऊः छ च ) पाम ( पायत्यङ्गम् इति मनिन् ) पामा ( पायते अङ्गमस्मात् इति मनिन् डाप् च ) विचर्चिका ( विचर्च्यते इति ण्वुल् ) ये १, ३, ४ स्त्री० २ य न० नाम खसरा ( खुजली ) के हैं।

कण्डूः, कण्डूया ( कण्डूयनम् इति कण्डूञ् गात्रविघर्षणे कण्ड्वादिः कण्ड्वादिभ्यो यक्, संपदादिक्विप्, अप्रत्ययः ) [६]खर्जूः ( खर्जनम् इति ऊः ) ये ३ स्त्री० नाम खुजलाहट के हैं।

विस्फोटः ( विस्फोटति इति अच् करणे घञ् वा ) [७]पिटकः ( पेटति इति क्वुन् ) ये २ पुं० स्त्री० नाम फोड़ा के हैं ॥ ५३ ॥

व्रणः ( व्रणति इति अच् ) ईर्मम् ( ईरयति सुखम् इति बाहुलकान्मन् ) अरुः ( इयर्ति इति उस् ) ये ३ नाम क्रम से १ पुं० न०, २-३ न० घाव के हैं।

नाडीव्रणः ( नाड्यां व्रणः ) यह १ पुं० नाम हमेशा पीव निकलने वाले घाव ( नासूर ) का है।

---

१. स्त्रियां क्षुत् क्षुतं हंछिका। इति रभसः। २. काशस्तृणे रोगभेदे। इति हैमः। ( वाराणस्यां भवेत्काशी क्षवथौ ना तृणेऽस्त्रियाम्। इति तालव्यान्ते रभसाच्च तालव्यान्तोऽपि )

३ क्षवथुः कासे छिक्कायाम्। इति हेमचन्द्रः। ४. शोफ ओषधिभेदे स्यादुत्कते त्वग्विवर्धने। इति हैमः। ५. पादस्फोटोऽथ त्वक्पुष्पी किलासं सिध्मलीति च। इति रभसः।

६. खर्जूः खर्जूरिकीकण्डुषु। इति हैमः। ७. पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते। इति हेमचन्द्रः। विस्फोटा विटिका स्त्रियाम्। इत्यमरमालायां वकारादिरपि।

कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५४ ॥
आनाहस्तु निबन्धः स्याद्ग्रहणी रुक्प्रवाहिका ।
प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥
व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः ।
'श्लीपदं पादवल्मीकं केशघ्नस्त्विन्द्रलुप्तकः' ॥ प्र० ॥
अश्मरी मूत्रकृच्छ्रं स्यात् पूर्वं शुक्रावधेस्त्रिषु ॥ ५६ ॥
रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।

---

कोठः ( कुण्ठति अच्, आगमशास्त्रस्यानित्यत्वात न नुम् ) मण्डलकम् ( मण्डलमिव इति कन् ) ये २ नाम क्रम से १ पुं० १ न० जिससे शरीर में चकत्ते पड़ जायँ ऐसे गजकर्ण रोग के हैं।

[1]कुष्ठम् ( कुष्णात्यङ्गम् इति कथन् ) श्वित्रम् ( श्वेतते इति रक् ) ये २ न० नाम सफेद कोढ़ के हैं।

दुर्नामकम् ( दुष्टं नामास्य इति क्षुभ्नादिः ) अर्शः ( ऋच्छति इति असुन् शुट् च ) ये २ न० नाम बवासीर के हैं ॥ ५४ ॥

आनाहः ( आनहनम् इति घञ् ) निबन्धः ( निबन्धनम् इति घञ् ) ये २ पुं० नाम जिसमें टट्टी पेशाब बन्द हो जाय उस रोग के वाचक हैं।

ग्रहणी ( गृह्णाति जठराग्निम् इति ल्युट् ) प्रवाहिका ( प्रवहति इति ण्वुल् टाप् च ) ये २ स्त्री० नाम संग्रहणी के हैं। रुक्=रोगः।

प्रच्छर्दिका ( प्रच्छर्दनम् इति ण्वुल् टाप् च ) वमिः ( वमनम् इति इक् ) [2]वमथुः ( वमनम् इति अथुच् ) ये ३ नाम क्रम से १–२ स्त्री० ३ य पुं० कय ( उल्टी ) के हैं ॥ ५५ ॥

विद्रधिः ( वेदनम् छिद्रम् इति रक्, यद्वा विद्राति इति कः। विद्रं धीयतेऽस्याम् इति किः ) ज्वरः ( ज्वरति इति अच् ) मेहः ( मेहति इति अच् ) भगन्दरः ( भगं दारयति इति खच् ) ये ४ नाम क्रम से १ स्त्री ३ पुं उदर आदि मुलायम स्थान में होने वाले फोड़ा, ज्वर और प्रमेह, भगन्दर के क्रम से हैं।

अश्मरी ( अश्मानं राति इति कः ङीप् च ) मूत्रकृच्छ्रम् ( मूत्रे कृच्छ्रमत्र ) ये २ नाम क्रम से १ स्त्री० १ न० पेशाब करने में कष्ट उत्पन्न करने वाले रोग ( कृच्छ्र ) के हैं।

पूर्वं शुक्रा० यहाँ से आगे शुक्र शब्द के पूर्व सब शब्द त्रिलिङ्ग हैं ॥ ५६ ॥

रोगहारी ( रोगं हरति तच्छीलः इति णिनिः ) अगदङ्कारः ( अगदमरोगं जन्तुं करोति इति अण् मुम् च ) भिषक् ( भिषज्यति इति क्विप् ) वैद्यः ( विद्यामधीते इति अण् ) चिकित्सकः (चिकित्सति इति सन्नन्तात् ण्वुल् ) ये ५ पुं० नाम वैद्य, डाक्टर, हकीम आदि दवा करने वाले के है।

---

१. कुष्ठं भेषजरोगयोः। इति हैमः।
२. वमथुः पुंसि वमने गजस्य करशीकरे। इति मेदिनी।

वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥
ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ।
आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ ॥ ५८ ॥
दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः ।
वातकी वातरोगी स्यात् सातिसारोऽतिसारकी ॥ ५९ ॥

---

[1]वार्तः ( वृत्तिरस्यास्ति इति णः ) [2]निरामयः ( निष्क्रान्तः आमयात् इति समासः ) [3]कल्यः ( कलासु साधुः इति यत् ) [4]उल्लाघः ( उल्लाघ्यते स्मेति 'अनुपसर्गात्फुल्ल' इति साधुः ) ये ४ त्रि० नाम रोगरहित ( नीरोग ) के हैं ॥ ५७ ॥

ग्लानः ( ग्लायति स्मेति क्तः नत्वञ्च ) ग्लास्नुः ( ग्लानशीलः इति ग्स्नुः ) ये २ त्रि० नाम रोग से क्षीण के हैं ।

आमयावी ( आमयोऽस्यास्ति इति विनिः दीर्घश्च ) [5]विकृतः ( विक्रियते स्मेति क्तः ) व्याधितः (व्याधिः संजातोऽस्य इति इतच् ) [6]अपटुः ( पटोरन्यः ) आतुरः ( आतोतोर्ति इति कः, 'छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्ते' ) अभ्यमितः ( अभ्यम्यन्ते स्मेति क्तः वेट् ) अभ्यान्तः ( इत्यत्र तु इडभावे दीर्घः ) ये ७ त्रि० नाम व्याधिग्रस्त ( रोगी ) के हैं ।

पामनः ( पामाऽस्यास्ति इति नः ) [7]कच्छुरः ( कच्छूरस्यास्ति इति रः ह्रस्वश्च ) ये २ त्रि० नाम खसरा या गोली खुजुली के रोगी के हैं ॥ ५८ ॥

दद्रुणः ( दरिद्राति इति 'दरिद्रातेर्यालोपश्च' इत्यनेन साधुः ) दद्रुरोगी ( दद्रूश्चासौ रोगी चेति 'इको ह्रस्वोऽङ्यः' इति ह्रस्वः । दद्रुरोगोऽस्यास्ति इति इनिः ) ये २ त्रि० नाम दादरोग वाले के हैं ।

अर्शोरोगयुक्तः ( अर्शोरोगेण युतः ) अर्शसः ( अर्शाः सन्त्यस्येति अच् ) ये २ त्रि० नाम बवासीर रोगी के हैं ।

वातकी ( वातोऽतिशयितोऽस्येति इनिः कुक् च ) वातरोगी ( वातरोगोऽस्यास्ति इति इनिः ) ये २ त्रि० नाम बात के रोगी के हैं ।

सातिसारः ( सहातिसारेण वर्तते ) अतिसारकी ( अतिसारोऽस्यास्ति इति इनिः कुक् च ) ये २ त्रि० नाम अतिसार रोग वाले के हैं ॥ ५९ ॥

---

१. वार्ता तु वर्तने वार्तिङ्गणे कृष्याद्युदन्तयोः । निःसारारोग्ययोः क्लीबं वृतिमन्नीरुजोस्त्रिषु ॥ इति मेदिनी । २. निरामयस्तु पुंसि स्यादिड्डिक्के विगतामये । इति हैमः । निरामयस्तु पुंसि स्यादिड्डिक्के त्रिषु नीरुजे । इति विश्वमेदिन्यौ ।

३. कल्यं प्रभाते मधुनि सज्ये दक्षे निरामये । कल्या कल्याणवाचि स्यात् । इति हैमः ।

४. उल्लाघो निपुणे हृष्टे शुचिनीरोगयोरपि । इति हैमः ।

५. विकृतो रोग्यसंस्कृतः । बीभत्सश्च । इति हैमः । ६. पटुर्दक्षे च नीरोगे । इति मेदिनी ।

७. कच्छुरा शूकशिम्ब्यां च शटीदुःस्पर्शयोरपि कच्छुरं वाच्यवत्प्राहुः पामने पुंश्चलेऽपि च । इति विश्वः ।

स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षिण चाप्यमी ।
उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥
न्युब्जो भुग्ने रुजा वृद्धनाभौ तुण्डिभतुण्डिलौ ।
किलासी सिध्मलोऽन्धोऽदृङ्मूर्च्छाले मूर्तमूर्च्छितौ ॥ ६१ ॥
शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।

---

क्लिन्नाक्षः ( क्लिन्ने अक्षिणी अस्य । चुल् चिल् पिल् आदेशा 'अस्यचक्षुषि' इत्यर्थे । चक्षुर्गतः क्लेद-रोगश्चुल्लादिवाच्यः । तद्योगाच्चक्षुश्चुल्लादिवाच्यम् । तच्चक्षुर्योगात्पुरुषोऽपि ) ये ४ त्रि० नाम कीचर से युक्त नेत्रवाले के हैं । चुल्ल चिल्ल पिल्ल ये ३ न० नाम कीचर युक्त नेत्र के हैं और त्रि० चुल्ल चिल्ल पिल्ल ये ३ नाम नेत्र से कीचर निकलने वाले रोग विशेष के भी हैं ।

[1]उन्मत्तः ( उन्माद्यति स्म इति क्तः नत्वाभावश्च ) उन्मादवान् ( उन्मदनम् इति घञ्, उन्मादोऽस्यास्ति इति मतुप् ) ये २ त्रि० नाम उन्माद के रोगी या पागल के हैं ।

श्लेष्मलः ( श्लेष्माऽस्यास्ति इति लच् ) श्लेष्मणः ( श्लेष्माऽस्यास्ति इति नः ) कफी ( कफोऽस्यास्ति इति इनिः ) ये ३ त्रि० नाम कफ वाले रोगी के हैं ॥ ६० ॥

[2]न्युब्जः ( न्युब्जनम् इति घञ्, 'भुजन्युब्जौ पाण्युपतापयोः' इति साधुः ) यह १ त्रि० नाम रोग से हुये कुबड़ा का है । न्युब्जः पृष्ठवक्रत्वकारी यस्यास्ति वा ।

वृद्धनाभिः ( वृद्धा उन्नता नाभिरस्य ) तुण्डिभः ( तुण्ड्यते इति इन् भश्च ) तुण्डिलः ( तुण्ड्यते इति इन् लच् च ) ये ३ त्रि० नाम रोग के कारण बढ़े हुए नाभि वाले ( बोड़र, ढोंढर ) के हैं ।

किलासी ( किलासमस्यास्ति इति इनिः ) [3]सिध्मलः ( सिध्ममस्यास्ति इति लच् ) ये २ त्रि० नाम मूर्छा ( मृगी, मिर्गी ) रोग वाले के हैं ।

[4]अन्धः ( अन्धयति इति अच् ) अदृक् ( न दृगस्य ) ये २ त्रि० नाम सूर ( अन्धा ) के हैं ।

मूर्च्छालः ( मूर्च्छा अस्यास्ति इति लच् ) [5]मूर्तः ( मूर्च्छति स्मेति क्तः छकारलोपः नत्वाभावश्च ) [6]मूर्च्छितः ( मूर्च्छा जाताऽस्येति इतच् ) ये ३ त्रि० नाम मूर्च्छा ( मृगी ) रोग वाले के हैं ॥ ६१ ॥

[7]शुक्रम् ( शोचत्यनेन इति 'ऋज्रेन्द्र' इति निपातनात् साधुः ) तेजः ( तेजयति इति असुन् ) रेतः ( रिणाति इति असुन् तुट् च ) [8]बीजम् ( विशेषेण ईजते इति अच् ) [9]वीर्यम् ( वीरेऽक्लीबे साधुः

---

१. उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः । इति हैमः । २. न्युब्जः कुब्जे कुशस्रुचि । अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरोः फले । इति हैमः ।

३. सिध्मला मत्स्यविकृतौ वाच्यवत्तु किलासिनि । इति मेदिनी ।

४. अन्धं स्यात्तिमिरे क्लीबे चक्षुर्हीनेऽभिधेयवत् । इति मेदिनी ।

५. मूर्तं स्यात् त्रिषु मूर्च्छाले कठिने मूर्तिमत्यपि । इति विश्वमेदिन्यौ ।

६. मूर्च्छितं सोच्छ्रये मूढे । इति हैमः । ७. शुक्रन्तु रेतोऽक्षिरुजोः । इति हैमः ।

८. बीजं तु रेतसि स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे । इति हैमः ।

९. वीर्यं तेजःप्रभावयोः । शुक्रे शक्तौ च । इति हैमः ।

**मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा ॥ ६२ ॥**
**पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।**
**उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥**
**रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ।**

---

इति यत् ) [1]इन्द्रियम् ( इन्द्रस्यात्मनो लिङ्गम् इति 'इन्द्रियमिन्द्रलिङ्ग' इति निपातनात् साधुः ) ये ६ न० नाम मनुष्य के शरीर में स्थित स्निग्ध तथा सफेद वर्ण की धातु ( वीर्य ) के हैं ।

मायुः ( मिनोति देहे उष्माणम् इति उण् वृद्धौ ) पित्तम् ( अपि दीयते स्म क्तः अल्लोपश्च ) ये क्रम से १ पुं० १ न० नाम पित्त के हैं ।

कफः ( केन जलेन फलति इति डः ) श्लेष्मा ( श्लिष्यति इति मनिन् ) ये २ पुं० नाम कफ के हैं ।

[2]त्वक् ( त्वचति इति क्विप् ) असृग्धरा ( असृजो रक्तस्य धरा ) ये २ स्त्री नाम चमड़ा के हैं ॥ ६२ ॥

[3]पिशितम् ( पिंशति इति इतन् ) [4]तरसम् ( तरो बलमस्त्यस्मिन् इति अच् ) मांसम् ( मन्यते इति सः दीर्घश्च ) [5]पललम् ( पलति पल्यते वेति कलः ) क्रव्यम् ( क्लवते इति यत् रलयोरेव कत्वम् )

[6]उत्तप्तम् ( उत्तप्यते स्मेति क्तः ) शुष्कमांसम् ( शुष्कं च तन्मांसं च ) [7]वल्लूरम् ( वल्लते वल्ल्यते वेति ऊरः ) ये ३ नाम क्रम से १–२ न० ३ य त्रि० सूखे मांस के हैं ॥ ६३ ॥

[8]रुधिरम् ( रुणद्धि रुध्यते वेति किरच् ) असृक् ( अस्यते इति बाहुलकात्सृजः, न सृजति वा क्विप् कुत्वञ्च, किन् प्रत्यये बहुव्रीहिसमासोऽपि ) [9]लोहितम् ( रोहति रुह्यते वेति इतच् लादेशश्च ) [10]अस्त्रम् ( अस्यते इति रक् ) [11]रक्तम् ( रज्यते स्मेति क्तः ) क्षतजम् ( क्षताज्जातम् इति डः ) शोणितम् ( शोणति स्मेति क्त इट् च ) ये ७ न० नाम रक्त के हैं ।

---

१. इन्द्रियं तु चक्षुरादिषु रेतसि । इति हेमचन्द्रः ।

२. त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रके । इति धरणिः ।

३. पिशितं मांसं पिशिता मांसिका । इति हैमः । ४. तरो जवे बले । इति हैमः ।

५. पललं तिलमिश्रे स्यात् पललं पिशितेऽपि च । इति शाश्वतः । पललं पङ्कमांसयोः । तिलचूर्णे पललस्तु । इति हैमः । ६. उत्तप्तं चञ्चले शुष्कमांससंतप्तयोरपि । इति हैमः ।

७. वल्लूरं स्याद्वनक्षेत्रे वाहनोषधयोरपि । वल्लूरा त्रिषु संशुष्कमांसशूकरमांसयोः । इति मेदिनी ।

८. रुधिरोऽङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः । इति मेदिनी ।

९. लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने । पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति ॥ इति मेदिनी ।

१०. अस्त्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते । इति मेदिनी ।

११. रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । क्लीबं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि । इति मेदिनी ।

बुक्काऽग्रमांसं हृदयं हृन्मेयस्तु वपा वसा ॥ ६४ ॥
पश्चाद्ग्रीवा शिरा मन्या नाडी तु धमनिः सिरा ।
तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥
अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ।

---

[1]बुक्का ( बुक्वते स्वादुत्वान्मृग्यते इति घञ् ) अग्रमांसम् ( अग्रं मुख्यं मांसम् ) ये २ नाम क्रम से १ स्त्री० १ न० कलेजा ( हृदय ) के हैं।

[2]हृदयम् ( ह्रियते विषयैरिति कयन् ) हृत् ( वाहुलकात् केवलोऽपि तुक् ) २न० नाम हृदय के हैं। मेदः (मेद्यति ऐति असुन्) [3]वपा ( वपति इति अच् अङ्वा टाप् च ) वसा ( वसति वस्ते वेति अच् टाप् ) ये क्रम से १ न० २–३ स्त्री नाम चर्बी के हैं ॥ ६४ ॥

मन्या ( मन्यतेऽनया इति क्यप्, पश्चाद्भागे ग्रीवायाः शिरा ) यह १ स्त्री० नाम ग्रीवा ( गर्दन ) के के पीछे वाली नस का है।

[4]नाडी ( नाडयति नाड्यते वेति इः ङीप् च ) [5]धमनिः ( धमति इति अनिः ङीषपि भवतः ) [6]सिरा ( सिनोति इति रक् टाप् च तालव्यादिरपि भवति ) ये ३ स्त्री० नाम नस के हैं।

[7]तिलकम् ( तेलति तिलति वेति कः स्वार्थे कन् च ) क्लोम ( क्लवति इति मनिन् ) ये २ न० नाम उदर में पानी रहने के स्थान के हैं।

मस्तिष्कम् ( मस्यते मसनं वा क्तिन्, मस्तिं मस्कते इति अच्, पृषोदरादिः ) गोर्दम् ( गूर्यते गुरते वेति निपातनात् साधुः ) ये २ न० नाम मस्तिष्क ( दिमाग ) के हैं।

किट्टम् ( केटति स्मेति क्तः इडभावश्च ) [8]मलम् ( मलते इति अच् ) ये क्रम से १ न० १ पुं० न० नाम नाक कान के मल के हैं ॥ ६५ ॥

अन्त्रम् ( अमति, अनेन वेति ष्ट्रन् ) पुरीतत् ( पुरीं शरीरं तनोति क्विप् अनुनासिकलोपः तुक् च ) ये २ न० नाम आँत के हैं।

गुल्मः ( गुड्यतेऽस्मात् इति मक् ) प्लीहा ( प्लीहते इति 'श्वन्नुक्षन्पूषन्प्लीहन्' इति निपातनात् साधुः ) ये २ पुं० नाम हृदय के बाँयीं तरफ होने वाले गुल्म रोग के हैं।

---

१. शोणितेषु स्त्रियां बुक्का बुक्कं सुरसमद्वयोः। इति रभसः।२. हृदयं मानसे बुक्कोरसोरपि नपुंसकम्। इति मेदिनी। ३. वपा विवरमेदसोः इति हैमः। ४. नाडी नले व्रणान्तरे। शिरायां गण्डदूर्वायां चर्चायां कुहनस्य च। तथा षट्क्षणकालेऽपि। इति मेदिनी। ५. धमनी तु शिराहट्टविलासिन्योश्च योषिति। इति मेदिनी। ६. शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति। इति तालव्यादौ रभसात्। ७. तिलको द्रुमरोगाश्वभेदेषु तिलकालके। क्लीबं सौवर्चलक्लोम्नोः न स्त्रियां तु विशेषके। इति विश्वमेदिन्यौ।

८. मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्। इति मेदिनी। वसा शुक्रमसृग्मज्जाकर्णविड्मूत्रविड्नखाः। श्लेष्माश्रुदूषिकः स्वेदो द्वादशैते नृणां मलाः ॥

स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे ॥ ६६ ॥
सृणिका स्यन्दिनी लाला दूषिका नेत्रयोर्मलम् ।
'नासामलं तु सिंघाणं पिञ्जूषं कर्णयोर्मलम्' ॥ प्र० ॥
मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥
पुरीषं गूथवर्चस्कमस्त्री विष्टाविशौ स्त्रियौ ।
स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ ६८ ॥

---

वस्नसा ( वस्ते शरीरम् इति नः, वस्नं चर्म स्यति इति कः ) स्नायुः ( स्नाति इति बाहुलकादुण् युक् च ) ये २ स्त्री० नाम प्रत्येक अङ्ग के सन्धि की नस के हैं ।

[१]कालखण्डम् ( कालं च तत्खण्डं च ) यकृत् ( यमनम् इति संपदादिः, मलोपः वुगभावश्च, यं संयमं करोति इति क्विप् तुक् च ) ये २ नं० नाम हृदय के दाहिनी ओर होने वाले यकृत ( मांस पिण्ड ) के हैं ॥ ६६ ॥

सृणिका ( सरति इति निः कन् च ) स्यन्दिनी ( अवश्यं स्यन्दते इति णिनिः ङीप् च ) लाला ( लालयते इति अच् टाप् च ) ये ३ स्त्री० नाम लार ( सोते समय मुँह से निकलने वाला थूक ) के हैं ।

दूषिका[२] ( दूषयति इति ण्वुल् इः च ) यह १ स्त्री० नाम नेत्र कीचर का है ।

मूत्रम् ( मूत्र्यते इति घञ् ) प्रस्रावः ( प्रस्रूयते इति घञ् ) ये २ नाम क्रम से १ न० १ पुं० लघु-शंका ( पेशाव ) के हैं ।

उच्चारः ( उच्चार्यते त्यज्यते इति घञ् अच् वा ) अवस्कारः ( अवकीर्यते अधः क्षिप्यते इति अप् सुट् च ) शमलम् ( शाम्यति शम्यते वेति कलः ) शकृत् ( शक्नोति शक्यते वेति ऋतिन् ) गूथम् ( गूयते इति 'तिथ पृष्ठ गूथ' इति निपातनात् साधुः ) पुरीषम् ( पिपर्ति शरीरम् इति ईषन् उत्वञ्च ) वर्चस्कम् ( वर्चते वर्च्यते वेति असुन् कन् च ) विष्ठा ( वितिष्ठते उदरे इति कः अङ्वा षत्वञ्च ) विट् ( वेवेष्टि इति क्विप् ) ये ९ नाम क्रम से २ पुं० ३ न० २ पुं० न० २ स्त्री० टट्टी ( पाखाना ) के हैं ।

[३]कर्परः ( कल्पते इति बाहुलकादरः लत्वाभावश्च ) [४]कपालः ( कं पालयति = इति अण् ) ये २ नाम क्रम से १ पुं० १ पुं० न० कपाल के हैं ।

[५]कीकसम् ( कि इति कसति अच् ) [६]कुल्यम् ( कुले भवम् इति यत् ) अस्थि ( अस्यते इति क्थिन् ) ये ३ न० नाम हड्डी के हैं ॥ ६८ ॥

---

१. वरण्डा तु महास्नायुः कालेयं कालखण्डके । इति रभसः ।

२. पिच्चोण्डकं नेत्रमलं दूषी च दूषिकाऽपि च । इति वाचस्पतिः ।

३. कर्परस्तु कटाहे स्याच्छस्त्रभेदकपालयोः । इति हैमः । ४. कपालोऽस्त्री शिरोऽस्थिन स्यात् घटादेः शकले व्रजे । इति मेदिनी । ५. कीकसः कृमिजातौ स्यात्पुंसि कुल्ये नपुंसकम् । इति मेदिनी ।

६. सजातीयगणे गोत्रे देहेऽपि कथितं कुलम् । इति विश्वः । कुल्यः कुल्योद्भवे मान्ये कुलस्याति-हितेऽपि च । कुल्यं स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च । पयःप्रणालीसरितोः कुल्याजीवन्तिकौषधौ । इति विश्वः ।

**स्याच्छरीरास्थ्नि कंकालः पृष्ठास्थ्नि तु कशेरुका ।**
**शिरोस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ॥ ६९ ॥**
**अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।**
**गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥**
**कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।**
**पादाग्रं प्रपदं पादः पदंघ्रिश्चरणोऽस्त्रियाम् ॥ ७१ ॥**

---

कङ्कालः ( कम् इत्यव्ययम् सुखे शिरसि च, कं कालयति इति अच् ) यह १ पुं० नाम ठठरी का है।

कशेरुका ( कं वायुं शृणाति इत्यूकन् हस्वश्च ) यह १ स्त्री० नाम पीठ के मध्य भाग की हड्डी ( रीढ़ ) का है।

करोटिः ( कं वायुं रोटते इति इन् ङीष् वा ) यह १ स्त्री० नाम खोपड़ी का है ।

पर्शुका ( स्पृशति स्पृश्यते वेति कन् ) यह १ स्त्री० नाम पंजड़ी का है ॥ ६९ ॥

[१]अङ्गम् ( अङ्गति इति अच् ) [२]प्रतीकः ( प्रत्येति प्रतीयते वेति 'अलीकादयश्चे' ति साधुः ) अवयवः ( अव यौति इति अच् ) अपघनः ( अपहन्यते इति 'अपघनोऽङ्गम्' इति साधुः ) ये ४ नाम क्रम से १ न० ३ पुं० शरीर के अवयव ( अङ्ग ) के हैं।

कलेवरम् ( कले शुक्रे मधुराव्यक्तध्वनौ वा वरं श्रेष्ठम् 'हलदन्तात्' इत्यलुक् ) [३]गात्रम् ( गातेष्ट्रन् ) [४]वपुः ( वपति उप्यते वेति उसिः ) संहननम् ( संहन्ति संहन्यते वेति ल्युट् ) शरीरम् ( शृणाति शीर्यते वेति ईरन् ) वर्ष्म ( वर्षति वृष्यते वेति मनिन् ) [५]विग्रहः ( विविधं सुखादि गृह्णाति इति अच् ) [६]कायः ( चीयतेऽन्नादिभिः इति घञ् कादेशश्च) देहः (दिह्यते इति घञ् ) [७]मूर्तिः (मूर्च्छति) इति क्तिच्छलोपश्च ) [८]तनुः ( तनोति तन्यते वेति उः ) तनूः ( तनोति तन्यते वेति ऊङ् ) ये १२ नाम क्रम से ६ न० २ पुं० १ न० ३ स्त्री० नाम शरीर के हैं।

पादाग्रम् ( पादस्याग्रम् ) प्रपदम् ( प्रकृष्टं प्रारब्धं प्रगतं वा पदम् इति समासः ) ये २ न० नाम पैर के अग्रभाग ( पञ्जा ) के हैं।

[९]पादः ( पद्यते इति घञ् ) पत् ( पद्यते इति क्विप् ) अङ्घ्रिः ( अंहते अनेन वेति क्रिन्नन्तः साधुः ) चरणः[१०] ( चरत्यनेन इति ल्युट् ) ये ४ क्रम से ३ पुं० १ पुं० न० नाम पैर के हैं ॥ ७१ ॥

---

१. अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ॥ इति मेदिनी । २. प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः । इति मेदिनी ।

३. गात्रं गजाग्रजङ्घादि भागेऽप्यङ्गे कलेवरे । इति विश्वमेदिन्यौ ।

४. वपुःक्लीबं तनौ शस्ताकृतावपि । इति मेदिनी । ५. विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम् । इति मेदिनी । ६. कायः कदैवते मूर्तौ संघे लक्ष्यस्वभावयोः । मनुष्यतीर्थे कायं स्यात् । इति मेदिनी ।

७. मूर्तिः पुनः प्रतिमायां कायकाठिन्ययोरपि । इति हैमः ।

८. तनुर्वपुस्त्वचोः । विरलेऽल्पे कृशे इति हैमः । तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे । (नान्तेषु) विश्व-मेदिन्यौ । ९. पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च । इति मेदिनी । १०. चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चापि नपुंसक उदाहृतः । इति मेदिनी ।

तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः ।
जङ्घा तु प्रसृता जानूरुपर्वाऽष्ठीवदस्त्रियाम् ॥ ७२ ॥
सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वङ्क्षणः ।
गुदं त्वपानं पायुर्ना बस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥
कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।
पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ७४ ॥

---

घुटिका ( घोटतेऽनया इति क्वुन् ) गुल्फः ( गलति गल्यते वेति णक् उत्वं च ) ये २ क्रम से १ स्त्री० १ पु०—नाम चरण की घुट्ठी के हैं।

[१]पार्ष्णिः ( पृश्यते अणेनेवेति 'घृणिगृश्निपार्ष्णि' इति निपातनात् साधुः ) यह १ पुं० नाम पैर के अधोभाग ( घुट्ठी के नीचे के वाले हिस्से ) का है।

जङ्घा ( जायते इति अच् तस्य जङ्घादेशः ) प्रसृता ( प्रसरति स्मेति क्तः ) ये २ स्त्री० नाम जंघा के हैं।

जानु ( जायते इति युण् ) ऊरुपर्व ( ऊर्णूयते इति कुः, णुलोपश्च ऊरोः पर्व वा ) अष्ठीवत् ( अतिशयितम् अस्थि यस्मिन् इति मतुप्, 'आसन्दीवत्' इति साधुः ) ये ३ क्रम से २ न० १ पुं० न० नाम घुटना के हैं ॥ ७२ ॥

सक्थि ( सजति सज्यते वेति क्थिन् ) ऊरुः ( अर्यतेऽनेनेति कुः ऊरादेशश्च ) ये २ क्रम से १ न० १ पुं० नाम घुटने के ऊपर वाले हिस्से के हैं।

वङ्क्षणः ( वङ्क्षति वङ्क्ष्यते वेति ल्युट् ह्रस्वश्च ) यह १ पुं० नाम घुटना तथा उसके ऊपर के जोड़ के हैं।

गुदम् ( गोदते इति कः ) अपानम् ( अपानित्यनेन इति घञ् ) पायुः ( पाति मलनिःसारणेन इति उण् युक् च ) ये ३ क्रम से २ न० १ पुं० नाम गुदा के हैं।

[२]वस्तिः ( वसति मूत्रमत्र इति तिः ) यह १ पुं० स्त्री० नाम मूत्राशय का है ॥ ७३ ॥

[३]कटः ( कटते इति घः ) श्रोणिफलकम् ( श्रोणेः फलकमिव चर्माकारत्वात् ) ये २ क्रम से १ पुं० १ न० नाम कमर के दोनों भाग के हैं।

कटिः ( कट्यते इति इन् ङीष् वा ) श्रोणिः ( श्रोणति इति इन् ङीष् वा ) ककुद्मती ( ककुत् वृषांस इव मांसपिण्डः इति ककुत्, सोऽतिशयितोऽस्याम् इति मतुप् वत्वाभावश्च ) ये ३ स्त्री० नाम कमर के हैं।

नितम्बः ( नितम्बति इति नितम्ब्यते वा अच् घञ् वा ) यह एक पुं० नाम स्त्रियों के चूतड़ का है।

[४]जघनम् ( हन्यते इति अच् ) यह १ न० नाम स्त्रियों की जंघा का है ॥ ७४ ॥

---

१. पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ । इति रन्तिदेवः ।

२. मूत्राशयपुटे वस्तिः । इति रत्नमाला । ३. शवे श्रोणौ किलिञ्जे च गजगण्डे भृशे कटः । इति शाश्वतः । ४. जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि । इति मेदिनी ।

कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।
स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥
भगं योनिर्द्वयोः शिश्नो मेढ्रं मेहनशेफसी ।
मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ ।

---

[1] कूपकः ( कूपमिव इति कन् ) कुकुन्दरम् ( कुं भूमिं दारयति इति अण् वृद्ध्यभावश्च पृषो० ) ये २–क्रम से १ पुं० १ न० नाम पृष्ठवंश के नीचे वाले गढे के हैं ।

स्फिक् ( स्फायते इति ...... ) [2] कटिप्रोथः ( प्रथति इति घः, कट्याः प्रोथौ मांसपिण्डौ ) ये २–नाम क्रम से १ स्त्री १ पुं० क्रमर के मांसपिण्ड के हैं ।

[3] उपस्थः ( उपतिष्ठते इति कः, अर्धर्चादि: ) यह १ पुं० न० नाम योनि व लिङ्ग का है ॥ ७५ ॥

[4] भगम् ( भज्यते इति घः ) [5] योनिः ( यौति इति निः ) ये क्रम से १ न० १ पुं० स्त्री० नाम नारी के पेशाब करने के मार्ग के हैं ।

शिश्नः ( श्नश्नति इति नक्, पृषोदरादि: ) मेढ्रः ( मेहन्त्यनेन इति ष्ट्रन् ) [6] मेहनम् ( मेहन्त्यनेन इति ल्युट् ) शेफः ( शेते रेतप्राते इति ...... व ) ये ४ नाम क्रम से २ पुं० २ न० पुरुष के मूत्र त्यागने के मार्ग के हैं ।

[7] मुष्कः ( मुष्णाति रेतः इति कक् ) अण्डकोशः ( अण्डयोः कोशः ) वृषणः ( वर्षति इति क्युः, युच् वा संज्ञापूर्वकत्वात् गुणाभावः ) ये ३ पुं० नाम अण्डकोश के हैं ।

[8] त्रिकम् ( त्रयाणां संघः इति कन् ) यह १ न० नाम पीठ की रीढ़ के नीचे तीन हड्डियों के जोड़ वाले स्थान विशेष का है ॥ ७६ ॥

[9] पिचण्डः ( अपिचमत्यन्नम् इति ड: अल्लोपश्च ) कुक्षिः ( कुष्यते निष्कास्यते मलोऽस्मात् इति क्सिः [10] जठरम् ( जायतेऽत्र जन्तुर्मलो वा इति अर प्रत्यये ठोऽन्त्यादेशश्च [11] उदरम् ( उद्गृणाति इति अच् ) तुन्दम् ( तुदति इति कः नुम् च ) ये क्रम से २ पुं० ३ न० नाम उदर के हैं ।

स्तनः ( स्तनति मातर्यति पीयमोदयम् इति अच् ) कुचः ( कुचति इति कः ) ये दो पुं० नाम स्तन के हैं ।

---

१. कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे । इति हैमः ।

२. स्त्रियां स्फिचौ कटिप्रोथौ कटी प्रोथौ च पूल्कौ । इति रभसः । ३. उपस्थः शेफसि क्रोडे तथा मदनमन्दिरे । इति विश्वमेदिन्यौ । ४. भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ ॥ इति विश्वमेदिन्यौ । ५. योनिः स्त्रीपुंसयोस्त्र स्यादाकारे स्मरमन्दिरे । इति मेदिनी । ६. मेहनं मूत्रशिश्नयोः । इति मेदिनी । ७. मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च । इति मेदिनी । ८. त्रिकः वृषस्य नेमौ स्यात् त्रिकं पृष्ठाधरे त्रये । इति मेदिनी ।

९. पिचण्ड उदरे पशोरवयवे पुमान् । इति मेदिनी । १०. जठरो न स्त्रियां कुक्षौ बद्धकक्खटयोस्त्रिषु । इति मेदिनी । ११. उदरं तुन्दरणयोः । इति हैमः ।

चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ७७ ॥
उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ।
स्कन्धो भुजशिरोंऽसोऽस्त्री संधी तस्यैव जत्रुणी ॥ ७८ ॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ।
मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥

---

[1]चूचुकम् ( चूष्यते इति बाहुलकादुकः, पृषोदरादिः । चूचु इत्यव्यक्तं कायति पीयमानम् इति कः ) कुचाग्रम् ( कुचस्याग्रम् ) ये २ न० नाम स्तन के ऊपरी भाग के हैं ।

[2]क्रोडम् ( क्रुड्यते इति घञ् ) भुजान्तरम् ( भुजयोरन्तरम् ) ये क्रम से १ म न० स्त्री०, २ य न० नाम गोदी ( अङ्क ) के हैं ॥ ७७ ॥

[3]उरः ( इयर्ति इति असुन् उरादेशः किच्च ) [4]वत्सन् ( वदति सामर्थ्यम् इति सः ) वक्षः ( वक्षति इति असुन् ) ये ३ न० नाम छाती के हैं ।

[5]पृष्ठम् पृष्यते इति 'तिथपृष्ठगूथ' इति थक्प्रत्ययान्तनिपातः साधुः ) यह १ न० नाम पीठ का है ।

[6]स्कन्धः ( स्कद्यते इति घञ् भादेशश्च ) भुजशिरः ( भुजस्य शिरः ) [7]अंसः ( अस्यते समाहन्यते भारादिना इति घञ् ) ये क्रम से १ पुं० १ न० १ पुं० न० नाम कन्धे के हैं ।

जत्रु ( जायते बाहुरस्मात् 'जन्वादयस्च' इति साधुः ) यह १ न० नाम कन्धे के जोड़ का है ॥७८॥

बाहुमूलम् ( बाहोः मूलम् ) [8]कक्षः ( कष्यते इति सः ) ये दो नाम काँख के हैं जिनमें प्रथम नपुंसक तथा द्वितीय पुंल्लिङ्ग हैं ।

तयोः=कक्षयोरधः—[9]पार्श्वम् ( पर्शूनां समूहः इति णस्, सिति परे पूर्वस्य पदत्वात् भत्वाभावेन गुणाभावः, वृद्धौ यणि च ) यह एक पुं० न० नाम काँख के नीचे भाग का है ।

[10]मध्यमम् ( मध्ये भवम् इति मः ) [11]अवलग्नम् ( लग्यते स्म, लगे सङ्गे धातोः निपातनात् लग्नम्, अवसन्नं लग्नमिति प्रादिसमासः ) [12]मध्यः ( मध्ये शरीरस्य भवम् इति अः ) ये तीन नाम शरीर के मध्य भाग के हैं, जिनमें १-२ नपुंसक और तृतीय पुं० न० दोनों हैं ।

---

१. चूचुको ना कुचाननम् । इति रत्नकोशः ।

२. क्रोडः कोले शनौ क्रोडमङ्के । इति हैमः । क्रोडः शनौ सूकरे ना, न पुमानङ्कवक्षसोः । इति मेदिनी । ३. उरो वक्षसि मुख्ये स्यात् । इति हैमः । ४. वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीवं । इति मेदिनी । पुत्रादौ तर्णके वर्षे वत्सो वत्सं तु वक्षसि । इति रुद्रः । ५. पृष्ठं चरममात्रे स्याद्देहस्यावयवान्तरे । इति मेदिनी ।

६. स्कन्धः प्रकाण्डे कायोंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च । इति हैमः ।

७. अंसः स्कन्धे विभागे स्यात् । इति हैमः । ८. कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्शापदे, ना दोर्मूलकच्छवीरुत्तृणेषु च ॥ इति मेदिनी । ९. पार्श्वमन्तिके । कक्षाधोऽवयवे चक्रोपान्ते पशुगणेऽपि च ॥ इति हैमः । १०. मध्यमो मध्यजेऽन्यवत् । पुमान् स्वरे मध्यदेशेऽप्यवलग्ने तु न स्त्रियाम् । स्त्रियां दृष्टरजोनार्यां कर्णिकाङ्गुलिभेदयोः ॥ अक्षरच्छन्दसि तथा । इति मेदिनी । ११. अवलग्नोऽस्त्रियां मध्ये त्रिषु स्याल्लग्नमात्रके । इति मेदिनी । १२. मध्यं विलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमे त्रिषु । इति मेदिनी । मध्योऽवलग्नं विलग्नं मध्यमः । इति नाममाला ।

**भुजबाहू प्रवेष्टो दोः स्यात् कफोणिस्तु कूर्परः ।**
**अस्योपरि प्रगण्डः स्यात् प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥**
**मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।**
**पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ॥ ८१ ॥**

---

परौ = भुजबाहू द्वयोः = स्त्रीपुंसयोः इति सम्बन्धः । भुजः[१] ( भुज्यतेऽनेन इति निपातनात्, भुजतीति को वा ) [२]बाहुः ( बाधते इति उः, अन्त्यस्य दस्त्वे, वाहते इति अच् वा ) प्रवेष्टते इति अच् ) [३]दोः ( दाम्यत्यनेन इति डोस्, टापि भागुरिमते दोषा च ) ये ४ नाम बाँह के हैं जिनमें १-२ पुं० स्त्री० और ३-४ पुं० हैं ।

[४]कफोणिः ( कं सुखं स्फोरयति इति ण्यन्तादच इः पृषोदरादिः ) [५]कूर्परः ( कुरतीति क्विप्, पिपर्तीति अच्, कुर् चासौ परश्चेति समासः ) ये दो नाम केहुनी के हैं जिनमें प्रथम पुं० स्त्री० है और २ य पुं० है ।

अस्य = कूर्परस्य उपरि = ऊर्ध्वभागे-प्रगण्डः ( प्रत्यासन्नो गण्डः ) यह एक पुं० नाम केहुनी के ऊपर वाले भाग का है ।

तस्य = प्रगण्डस्य अधः = अधोभागः—[६]प्रकोष्ठः ( कुसूलादन्नं प्रकुष्यते अनेन इति थन्, प्रविष्टः कोष्ठम् ) यह एक पुं० न० नाम केहुनी के नीचे वाले भाग का है ॥ ८० ॥

[७]मणिबन्धात् = मणिः बध्यतेऽत्रेति घञ् तस्मात् आकनिष्ठं = कनिष्ठाया आ, कनिष्ठिकांगुलिमभिव्याप्य करस्य बहिः = करबहिर्भागः [८]करभः ( किरत्यनेन इति अभच्, करे भाति इति को वा ) यह एक पुं० नाम हाथ के बाहर वाले भाग का है ।

पञ्चशाखः ( पञ्च शाखा इव अंगुल्योऽस्य ) [९]शयः ( सर्वम् शेते अस्मिन् इति घः शमः पाठे तु शाम्यति कण्डूर्मलो वाऽनेन इति घञ् नोदात्तोपदेशेति वृद्धिनिषेधः ) पाणिः ( पणायन्त्यनेन इतोण् आयप्रत्ययस्य लुक् च ) ये तीन पुं० नाम हाथ के हैं ।

तर्जनी ( तर्ज्यतेऽनया इति ल्युट् ) प्रदेशनी ( प्रदिश्यतेऽनया इति ल्युट् प्रदेशिनीति पाठे प्रदेशोऽस्त्यस्याः इति इनिः ) ये दो स्त्री० नाम अंगूठे के समीप वाली अंगुली के हैं ॥ ८१ ॥

---

१. अधो भुजा ( द्वयोर्बाही करे । इति मेदिनी । २. बाहोऽश्वभुजयोः पुमान् । इति दामोदरः । बाहो बाहुरिति स्मृतः । इति देशीकोशः । बाहोश्वमानयोः । वृषे बाहा तु बाहौ स्यात् । इति हैमः ।

३. दोर्दोषा च भुजो बाहुः, पाणिर्हस्तः करस्तथा । इति धनञ्जयः । ४. कफोणिः कफणिर्द्वयोः । इति शब्दार्णवः । ५. कफोणिः कूर्परोऽरत्नेः पृष्ठम् । इति नाममाला । ६. प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः । इति कात्यः । प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च । भूपकक्षान्तरेऽपि स्यात् । इति मेदिनी । ७. मणिबन्धः पाणिमूलम् । इति हलायुधः । करोऽस्यादौ माणिबान्धो मणिश्च सः । इति हैमनाम- माला । ८. करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते । इति मेदिनी ।
९. शयः शय्या हि पाणिषु । इति मेदिनी । शमः शयो हस्तः । इत्यमरमाला ।

अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी ।
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥
पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।
प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥

---

करशाखाः अंगुल्यः स्युरिति सम्बन्धः । [१]अंगुलिः ( अंगति इति उलिः ) अङ्गं पाणिपादमवयवं लातीति बाहुलकात् डिर्वा । ( अंगुरिः इति पाठे विकल्पेन लस्य रः ) करशाखा ( करस्य शाखा इव ) ये २ स्त्री० नाम अंगुली के हैं ।

ताः = अंगुलयः क्रमात् इति सम्बन्धः । अंगुष्ठः ( अङ्गौ तिष्ठतीति कः अम्बाम्बेति षत्वम्, अंगु शब्द का अर्थ अङ्ग है ) प्रदेशनी ( प्रदिशतीति णिनिः, इनिर्वा, पहले कह चुके हैं, यथासंख्य के लिए पुनरुक्ति है ) [२]मध्यम. ( मध्ये भवा इति मः ) अनामिका ( न नाम ग्रहणयोग्यमस्याः, इसके द्वारा ब्रह्माका शिरश्छेदन हुआ है अतएव इसमें पवित्री धारण करते हैं ) [३]कनिष्ठिका ( अत्यल्पा इति इष्ठन्. अल्पस्य कनादेशश्च ) ये ५ नाम क्रमशः एक-एक ५ चो अंगुलियों के हैं जिनमें १ म पुं०, २—५ स्त्री हैं ॥ ८२ ॥

पुनर्भवः ( पुनः भवतीति अच् पुनर्नवः इति वा पाठः ) कररुहः ( करे रोहतीति कः ) [४]नखः ( न खमस्य इति निपातनात् ) नखरः ( नखं राति इति कः ) ये ४ नाम नख के हैं जिनमें १–२ पुं०, ३–४ पुं न० हैं ॥ ८२. १।२ ॥

[५]प्रादेशः ( प्रदिश्यते इति घञ् उपसर्गस्य वा दीर्घः ) यह एक पुं० नाम तर्जनी और अँगूठे को फैलाकर बनाये गये नापने के प्रमाण का है ।

[६]तालः ( तलत्यत्र इति घञ् ) यह एक पुं० नाम मध्यमा और अँगूठे को फैलाकर बनाये हुये नापने के प्रमाणविशेष का है ।

[७]गोकर्णः ( गोः कर्ण इव ) यह एक पुं० नाम अनामिका और अँगूठे को फैलाकर बनाये गये नापने के प्रमाणविशेष का हैं । तते = विस्तृते अङ्गुष्ठे तर्जनी आदिः यासां ताभिः युते इति सम्बन्धः ॥ ८३ ॥

---

१. अङ्गुलिः करशाखा कर्णिकाया गजस्य च । इति हैम-विश्वप्रकाशौ । अंगुलस्तु यवो मतः इत्यमरदत्तः । अंगुलीं नात्यवमानमिति वाचस्पतिः । अत्र बाहुलकादुलो ज्ञेयः ।

२. मध्यमो मध्यजे स्वरे । देहमध्ये मध्यदेशे मध्यमा कर्णिकांगुलिः । राका रजस्वला चापि । इति हैमः । ३. कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमांगुलौ । इति हैमः ।

४. नखी स्त्री पुंसयोः शुक्तौ नखरे पुं नपुंसकम् । इति मेदिनी ।

५. प्रदेशो देशमात्रे स्यात् तर्जन्यङ्गुष्ठसंमिते । इति मेदिनी

६. तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते । गीतकालक्रियामाने करस्फाले द्रुमान्तरे ॥ इति मेदिनी । ७. गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रथमान्तरे । अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ ॥ इति विश्वः ।

अंगुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।
पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥
द्वौ संहतौ सिंहतलप्रतलौ वामदक्षिणौ ।
पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्टया तु बद्धया ।
स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥

---

कनिष्ठया सह वितते अङ्गुष्ठे—वितस्तिः ( वितस्यति इति तिः ) द्वादशाङ्गुलः ( द्वादश अङ्गुलयः प्रमाणमस्य इति द्विगुसमासे, मात्रचो लुकि, अच् प्रत्ययश्च ) ये दो नाम कनिष्ठा और अँगूठे को फैलाकर बनाये गये नापने के प्रमाण ( बित्ता ) का है ॥ ८३. १।२ ॥

विस्तृताः अङ्गुलयो यस्मिन्, तस्मिन् पाणौ सम्बन्धः—[१]चपेटः ( चपतीति अच् ) चपः, इटतीति कः इटः चपस्चासौ इटश्चेति ) [२]प्रतलः ( प्रतलतीति अच् ) प्रहस्तः ( प्रसृतः हस्तः ) ये ३ पुं० नाम फैले अंगुली वाले हाथ ( थप्पड ) के हैं ॥ ८४ ॥

वामदक्षिणौ द्वौ = पाणी संहतौ = मिलितौ—सिंहतलः ( सिंहस्येव तलमत्र, संहतलः इति पाठे संहतं = संघट्टं लातीति कः ) प्रतलः ( प्रश्लिष्टे तले अत्र ) ये दो पुं० नाम विस्तृत अंगुली वाले दोनों हाथों को सटाने का है ॥ ८४.१/३ ॥

निकुब्जः = नितरां कुब्जा प्रकृतिरस्य इति, पाणिः = हस्तः—प्रसृतिः ( प्रसरत्यनेन इति क्तिन्, [३]प्रसृतः इति पाठे—प्रकृष्टं सृतमस्य इति ) यह एक स्त्री० नाम टेढे किये हुए हाथ ( पसर ) का है ।

तौ = प्रसृती युतौ = संहतौ इति सम्बन्धः—[४]अञ्जलिः ( अज्यते अनेन 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' धातोः अलिः प्रत्ययः ) यह एक पुं० नाम अञ्जलि का है ॥ ८५ ॥

विस्तृतः करः यस्य तस्मिन्, प्रकोष्ठे = कूर्पराधोभागे [५]हस्तः ( हसति इति तन् ) यह एक पुं० नाम एक हाथ ( केहुनी के नीचे वाले भाग से मध्यमांगुलि के अन्तिम भाग तक अर्थात् २ बित्ता ) प्रमाणविशेष का है ।

बद्धया [६]मुष्ट्या सः = हस्त—रत्निः[७] ( अर्यतेऽनेन 'ऋ' धातोः कत्निच् यणि च ) यह एक पुं० स्त्री० नाम निमुठ हाथ ( मुट्ठी बांधकर हाथ से नापे हुये प्रमाणविशेष ) का है ।

निष्कनिष्ठेन = निर्गता कनिष्ठा यस्मात्तेन, मुष्टिना उपलक्षितः—[८]अरत्निः ( रत्निभिन्नः

---

१. चपेटः इति वा पाठः । चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च । इति विश्वः ।

२. प्रतलं पातालभेदे तताङ्गुलिकरे पुमान् । इति मेदिनी । तलं वा पाठः—तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोः । इति विश्वः । तलस्त्वपेटे तालद्रौ इति हैमः । ३. प्रसृतः सप्रसारे स्याद्विनीते वेगिते त्रिषु । अर्धाञ्जलौ तु पुंलिङ्गो जङ्घायां प्रसृता मता ॥ इति मेदिनी । ४. अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च । इति मेदिनी । ५.हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परे व्राते । इति मेदिनी ।

६. संपीडिताङ्गुलिर्मुष्टिः । इति हलायुधः । मुष्टिर्द्वयोः फले । बद्धपाणौ त्सरौ । इति मेदिनी ।

७. रत्न्यरत्नी स्त्रियौ बद्धमुष्टिततताङ्गुलौ । इत्यमरमाला । ८. अरत्निर्ना सप्रकोष्ठतताङ्गुलिकरेऽपि च । कफोणावपि । इति मेदिनी ।

व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥
कण्ठो गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपि ।
कम्बुग्रीवा त्रिरेखा साऽवटुर्घाटा कृकाटिका ॥ ८८ ॥
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।

---

नञ्समासः ) यह एक स्त्री० पुं० नाम कनिष्ठा अंगुलिको मुट्ठी से बाहर रखकर शेष अंगुलियों को मुट्ठी बांधकर हाथ से नापे हुए प्रमाण विशेष का है ॥ ८६ ॥

सकरयोः बाह्वोः ततयोः = विस्तृतयोः तिर्यक्-अन्तरम् इति सम्बन्धः—व्यामः ( विशेषेण अम्यतेऽनेन इति घञ् ) यह एक पुं० नाम दोनों तरफ ( अपने-अपने बगल में ) हाथ सहित दोनों फैले बाँह के मध्य से नापे हुए प्रमाणविशेष का है ।

दोषौ च पाणी च तत् दोःपाणि । ऊर्ध्वं विस्तृतं दोःपाणि येन सः ना, तस्य यन्मानम् परिमाणम् तत्र—पौरुषम्[1] ( पुरुषः प्रमाणमस्य इति अण् ) यह एक त्रि० नाम खड़े होकर हाथ को ऊपर उठाकर जो प्रमाण होता है ( जिसे पोरसा कहते हैं ) उस प्रमाण विशेष का है ॥ ८७ ॥

[2]कण्ठः ( कणति शब्दं करोति इति ठः, शोकार्थककाडिधातोरचि वा ) [3]गलः ( गलति इति णचि गलअदने धातोः ) ये दो पुं० नाम कण्ठ ( ग्रीवा के अग्रभाग ) के हैं ।

[4]ग्रीवा ( गीर्यतेऽनया इति वनुप्रत्ययान्ता, ईडागमश्च निपातनात् ) शिरोधिः ( शिरो धीयते अस्याम् इति किः ) [5]कंधरा ( कं शिरो धारयति इति खच्, ह्रस्वश्च, धरतीति धरा अच, कं = शिरसः धरा इति वा ) ये ३ स्त्री० नाम गर्दन के हैं ।

सा = ग्रीवा त्रिरेखा = तिस्रः रेखा यस्यां सा चेत् इति सम्बन्धः—कम्बुग्रीवा ( कम्बुः = शङ्ख इव ग्रीवा ) यह एक स्त्रीलिङ्ग नाम शङ्खाकार गर्दन का है ।

[6]अवटुः ( अवटलति, अवटीकते वा डुः मितद्र्वादिः ) घाटा ( घाटयति इति अच् ) कृकाटिका ( कृकं = कण्ठं अटति इति इन्, कन् च स्वार्थे ) ये ३ नाम गर्दन में ऊँचे भाग ( घाँटी ) के हैं जिनमें प्रथम पुं० शेष दो स्त्री० हैं ॥ ८८ ॥

[7]वक्त्रम् (उच्यतेऽनेन इति वचादेशे औणादिकस्त्रः) [8]आस्यम् (आस्यन्दते अम्लादिना प्रस्रवति इति 'स्यन्दू प्रस्रवणे' धातोः डः ) वदनम् ( वदन्त्यनेन इति ल्युट् ) तुण्डम् ( तुण्डति 'तुडि तोडने' धातोरच् )

---

१. पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि । ऊर्ध्वविस्तृतदोःपाणिनृमाने त्वभिधेयवत् ॥ इति मेदिनी । २. समीपगलशब्देषु त्रिषु कण्ठं विदुर्बुधाः । इति शाश्वतः । कण्ठो गले सन्निधाने ध्वनौ मदनपादपे । इति विश्वः । ३. गलः कण्ठे सर्जरसे इति मेदिनी ।

४. ग्रीवे शिरोधितच्छिरे । इति हैमः । ५. कंधरो वारिवाहे स्याद् ग्रीवायां कंधरा मता । इति विश्वः । ६. अवटुः पुरुषे कृकाटिका घाटा । इति वोपालितः ।

७. वक्त्रमास्ये छन्दसि च । इति हेमचन्द्रः । ८. मुखं मुखान्तरालं च द्वयमास्यमितीरितम् । इति शाश्वतः । आस्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ । इति मेदिनी ।

क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥
ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः ॥ ९० ॥
रदना दशना दन्ता रदास्तालु तु काकुदम् ।

---

आननम् ( आनन्त्यनेन 'अन प्राणने' धातोः ल्युट् ) लपनम् ( लप्यते उच्यते अनेन इति ल्युट् ) [१] मुखम् ( खन्यते इति अच् सच डित् धातोर्मुडागमः ) ये ७ नपुं० नाम मुखके हैं ।

[२]घ्राणम् ( घ्रायतेऽनेन इति ल्युट् ) [३]गन्धवहा ( वहतीति अच् , गन्धस्य वहा ) घोणा ( घोणत्यनया घञ् ) [४]नासा ( नासते इति अच् ) [५]नासिका ( नासते इति ण्वुल् ) ये ५ नाम नासिका के हैं, जिनमें १म नपुं० शेष ४ स्त्रीलिंग हैं ॥ ८९ ॥

ओष्ठः ( उष्णाहारेण उष्यते इति थन् ) [६]अधरः ( ध्रियते इतिः घः, नञ् समासः । न चात्र ओष्ठस्च इति द्वन्द्वे 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकत्वे ओष्ठाधरमिति स्यादिति शङ्कनीयम् । उक्तैकत्वविधायकसूत्रस्यानित्यत्वात् । ओष्ठाभ्यां युतावधरौ इति मध्यपदलोपिसमासत्वाद्वा ) रदनच्छदः ( रदनाः = दन्ताः छाद्यन्तेऽनेन इति घः, छादेर्घे परे ह्रस्वः ) दशनवासः ( आच्छादकत्वात् दशनानां वास इव इति ) ये ४ नाम ओठ मात्र के हैं जिनमें १-३ पुं०, शेष नपुं० हैं ।

अधरोष्ठस्याधस्तात् इति सम्बन्धः—[७]चिबुकम् ( चीवति 'आदानसंवरणार्थकचीवृ' धातोर्मृगय्वादित्वात् उः, स्वार्थे कन् च ) यह एक न० नाम ओठ के नीचे के भाग का है ।

[८]गण्डः ( गण्डति इति अच् ) कपोलः ( कम्पते इति ओलच्प्रत्ययविधायकसूत्रे 'कपि' इति निर्देशात् नलोपः ) ये दो पुं० नाम गाल के हैं ।

ताभ्यां कपोलाभ्यां परः इति सम्बन्धः—[९]हनुः ( हन्ति इति उः ) यह १ स्त्री० पुं० नाम ठुड्ढी ( दाढी ) का है ॥ ९० ॥

रदनः ( विलेपनार्थकरदधातोः रद्यतेऽनेनेति करणे ल्युट् ) दशनः ( दश्यतेऽनेनेति करणे ल्युट् ) दन्तः ( दाम्यतीति अन्तर्भावितण्यर्थात् बाहुलकात् तन् ) रदः ( रदतीति अच् ) ये ४ पुं० नाम दाँत के हैं ।

---

१. प्राक् खनो मुडुदात्तश्च ततोऽच्च प्रत्ययो भवेत् । प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः ॥ इति निरुक्तम् । मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः । इति हैमः ।

२. घ्राणं क्लीबं नासिकायां घ्राते स्याद्वाच्यलिङ्गकम् । इति मेदिनी ।

३. स्याद्गन्धवहा नासायां पुंलिङ्गे मातरिश्वनि । इति मेदिनी ।

४. नासा तु नासिकायां च द्वारोर्ध्वदारुणि स्त्रियाम् । इति मेदिनी ।

५. घ्राणं गन्धवहा नासा नसा नस्या च नासिका । इति साहसाङ्कः । कुल्या गन्धवहा घोणा घ्राणं नासा च नासिका । इति कात्यः । ६. अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत् । इति मेदिनी ।

८. अधस्तादधरोष्ठस्य चिबु स्याच्चिबुकं तथा । इति निगमः । ७. गण्डः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे ॥ इति मेदिनी ।

९. हनुर्हट्टविलासिन्यां मृत्यावस्त्रे गदे स्त्रियाम् । द्वयोः कपोलावयवे । इति मेदिनी ।

**रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्कणी ॥९१॥**
**ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।**
**कूर्चमस्त्री भ्रुवोर्मध्यं तारकाऽक्ष्णः कनीनिका ॥९२॥**

---

तालु ( तरन्त्यनेन वर्णाः इति ञुण् वृद्धौ, त्रोः रस्य लः । केचित्तु—तृ का इति प्रश्लिष्य द्वयोरपि सवर्णदीर्घे त्री, तयोस्त्रोरित्युक्त्वा, 'ऋ गतौ' इत्यस्मादपि ञुण् रस्य लः इति व्याख्याय इर्यति अर्यते वा आलुः शाकविशेषो घटी चेत्याहुः । 'कर्कर्यालुर्गलन्तिका' इति तत्त्वबोधिनीकाराः । तालयति 'तल प्रतिष्ठायां' धातोः चौरादिकत्वात् मृगय्वादित्वात् उः वा ) काकुदम् ( काकुः = जिह्वा उद्यतेऽनुद्यते अस्मिन्निति कः, पृषोदरादिः, अनेकार्थत्वाद् वदिरुत्क्षेपणे-वर्तते ) ये दो न० नाम तालु के हैं ।

रसज्ञा ( रसं जानातीति कः ) [1]रसना ( रसयतीति नन्द्यादित्वाल्ल्युः, करणे युच् वा, रसति = शब्दयति इति औणादिको युच् वा ) जिह्वा ( लिहन्त्यनया वन् प्रत्ययान्तो निपातः लकारस्य जः, गुणाभावश्च ) ये ३ स्त्री नाम जिह्वा के हैं ।

ओष्ठस्य प्रान्तौ—[2]सृक्कणिः ( लालादि सृजति इति कनिन्, कत्वयुक्तम् = [3]सृक्विणी, [4]सृक्कणी ङ्यन्ताऽपि, अदन्तम् [5]सृक्कम्, इकारान्तः क्लीबोऽपि [6]सृक्किशब्दः तत्र बाहुलकात्किर्बोध्यः वारिवद् रूपाणि ) यह एक पुं० नाम ओठ के दोनों किनारों का है ॥ ९१ ॥

ललाटम्, ( ललनम् ईप्सार्थकललधातोः, विलासार्थकलडधातोर्वा, लड पक्षे डलयोरेकत्वम् ललम्, ललं विलासमीप्सां वा अटति इति ललतीति वा बाहुलकादाटच् ) [6]अलिकम् ( अलतीति इकन् बाहुलकात् ) । [7]गोधिः ( गोध्यते इति इन् ) ये ३ नाम ललाट के हैं जिनमें १–२ नपुं० ३ य पुं० हैं ।

दृग्भ्यां = नेत्राभ्याम् ऊर्ध्वे = उपरि—भ्रूः ( भ्रमतीति डूः ) यह एक स्त्री० नाम भौं का है ।

भ्रुवोः मध्यम्—कूर्चम् ( कुरति इति बाहुलकात् चट् ) यह एक पुं०, न० नाम नाक के ऊपर दोनों भौं के बीच वाले स्थान का है ।

---

१. रसनं स्वजने ध्वनौ । जिह्वायां तु न पुंसि स्यात् । इति दर्शनात् दन्त्यतालव्यमध्योऽयम् । रसनं तु ध्वनौ स्वादे रसज्ञारसनयोः स्त्रियाम् । इति रभसः ।

२. प्रान्तावोष्ठस्य सृक्कणी । इति क्लीबकाण्डेऽमरदत्तः । महासृक्कायशोभितो नृसिंहनखाग्रवत् । इति लताश्लेषात् कद्वयम् । ३. स्मितस्य संभाव्य सृक्वणा कणान् । इति श्रीहर्षप्रयोगात् वकारयुक्तं च ।

३. स सृक्कणी प्रान्तमसृक्प्रदिग्धं प्रलेलिहानो हरिणारिरुच्चैः । इति पाणिनिप्रयोगान् ङीवन्तोऽपि ।

४. सृक्के द्वे चैव विज्ञेये चत्वारिंशच्च वक्त्रजाः । इत्युक्तेरदन्तं सृक्कमपि ।

५. क्लीबे वारिशब्दवत् इत्युक्तेः 'सृक्कणि' इतीदन्तमपि । सृक्किशब्दः ह्रस्वेकारान्तोऽपि क्लीबः । सक्थ्यक्षिदधिसृक्कि तथा वारि स्यात् । इति अरुणः ।

६. अलीकमहितेऽपि । इति कात्यः । अलिकं ह्रस्वदीर्घमध्यमिति राजदेवः । अलीकमिति कोकजन्तम् । अलीकमप्रियेऽपि स्याद्दिव्यसत्ये नपुंसकम् । इति मेदिनी । अलीकमप्रिये प्रोक्तमलीकमनृते दिवि । इति विश्वः । अलीकमप्रिये भाले वितथे । इति हेमचन्द्रः ।

७. गोधिभालौ महाशङ्खः । इति त्रिकाण्डशेषः ।

लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ॥९३॥
अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने ।
कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥९४॥

---

[१]तारका ( तरतीति ण्वुल्, तारका ज्योतिषी इति निर्देशात् इत्वाभावः, नक्षत्रं नेत्रकनीनिका च ज्योतिः ) [२]कनीनिका ( कनतीति बाहुलकादीनः, स्वार्थे कन् टाप् इत्वञ्च ) ये २ स्त्री० नाम आँख की पुतली के हैं ॥ ९२ ॥

लोचनम् ( लोच्यतेऽनेन इति ल्युट् ) नयनम् ( नीयतेऽनेन इति ल्युट् ) [३]नेत्रम् ( नीयते इति पक्षे ष्ट्रन् ) [४]ईक्षणम् ( ईक्ष्यते इति ल्युट् ) चक्षुः ( चष्टे, चक्ष्यतेऽनेन वा इति चक्षिङ्धातोः उसि, शिच्च, शित्वादनार्धधातुकत्वात् ख्याञादेशे न ) अक्षि ( अश्नुते इति क्सिः, नित्, अक्षतीति इन् वा ) दृक् पश्यतीति क्विप्, कुत्वं च दृष्टिः ( पश्यतीति क्तिन् ) ये ८ नाम नेत्र के हैं जिनमें १–६ नपुं०, ७–८ स्त्री० हैं ॥ ९३ ॥

[५]अस्रु, ( अस्यति कण्ठम् इति रुन्, नञ् पूर्वात् अश्यतेर्डुन् चेति अश्रु ) नेत्राम्बु ( नेत्रयोरम्बु ) [६]रोदनम् ( रुद्यते इति बाहुलकात् कर्मणि ल्युट् ) अस्रम् ( अस्यते = क्षिप्यते इति रक् ) ये ५ नपुं० नाम आँसू के हैं ।

नेत्रयोः = नयनयोः अन्तौ = बाह्यौ इति सम्बन्धः । [७]अपाङ्गः ( अपकृष्टानि अङ्गानि अस्मात् ) यह एक पुं० नाम नेत्रों के समीप स्थान ( किनारों ) का है ।

[८]कटाक्षः ( कटौ अतिशयितौ अक्षिणी यत्र, कटं = गण्डं 'अक्षति अक्षूव्याप्तौ' अस्मात् कर्मण्यण् ) अपाङ्गदर्शनम् ( अपाङ्गेन दर्शनम् ) ये दो नाम कटाक्ष के हैं जिनमें प्रथम पुं० द्वितीय नपुंसक हैं ।

[९]कर्णः ( कीर्यते = क्षिप्यते शब्दग्रहणाय, नः । कीर्यते शब्दोऽस्मिन् । कर्णयति = भिनत्ति अदन्ताद् अस्मात्कर्णधातोरच् ) शब्दग्रहः ( शब्दो गृह्यतेऽनेन इति अप् ) श्रोत्रम् ( श्रूयतेनेन इति ष्ट्रन् [१०]श्रुतिः ( श्रूयतेऽनया इति क्तिन् ) [११]श्रवणम् ( श्रूयतेऽनेन इति ल्युट् ) श्रवः ( श्रूयतेऽनेन असुन् ) ये ६ नाम कान के हैं जिनमें १—२ पुं०, ४ र्थ स्त्री० शेष ३ नाम नपुं० हैं ॥ ९४ ॥

---

१. तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु । इति मेदिनी ।

२. कनीनिका तारकेऽक्ष्णः स्यात्कनिष्ठाऽङ्गुलावपि । इति मेदिनी ।

३. नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां तु नेत्री नेतरि वाच्यवत् ॥ इति मेदिनी । ४. ईक्षणं दर्शने दृशि । इति मेदिनी ।

५. अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते । इति मेदिनी । जगरे चाश्रमश्रुणि । इत्यूष्मभेदा-त्तालव्यमध्यमपि । ६. रोदनं क्रन्दनेऽस्रेऽपि दुरालम्भौषधौ स्त्रियाम् । इति मेदिनी ।

७. अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च । इति विश्वः ।

८. कटाक्षकाक्षौ । इति रभसात् काक्षोऽपि । ९. कर्णः पृथासुते ज्येष्ठे सुवर्णालौ श्रुतावपि । इति मेदिनी । १०. श्रुतिः श्रोत्रे च तत् कर्मण्याम्नायवार्तयोः स्त्रियाम् । इति मेदिनी ।

११. श्रवणं श्रुतौ च कर्णे नक्षत्रे न नपुंसकम् । इति मेदिनी ।

उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।
चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥९५॥
तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः ।
ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥९६॥

---

उत्तमाङ्गम् ( उत्तमञ्च तदङ्गं च ) [1]शिरः ( श्रीयते उष्णीषादिना इति श्रिञ् सेवायामस्माद् धातोः स्वाङ्गे वाच्येऽसुन् स च कित् धातोः शिरादेशः, घञर्थे कप्रत्यये तु [2]शिर इत्यदन्तोऽपि ) शीर्षम् ( शिरःशब्दस्य शीर्षादेशः ) मूर्धा ( मुह्यति अस्मिन्नाहते इति कनि मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च निपातनात्, राजवत् रूपाणि ) मस्तकः ( मस्यतेरम इति क्तः स्वार्थे कन् च ) ये ५ नाम शिर के हैं, जिनमें प्रथम ३ नाम नपुं०, ४ र्थ पुं०, और ५ म पुं० नपुं हैं ।

[3]चिकुरः ( 'चि' इति अव्यक्तं कुरति इति कः ) [4]कुन्तलः ( कुन्तं लाति इति कः ) [5]बालः ( बलतीति णः ) [6]कचः ( कच्यते इति घः ) [7]केशः ( के शेते इति डः सप्तम्या अलुक् ) शिरोरुहः ( शिरसि रोहतीति कः ) ये ६ पुं० नाम बाल के हैं ॥ ९५ ॥

तेषां = केशानां वृन्दे = समूहे—कैशिकम् ( केशानां समूहः इति ठक् ) कैश्यम् ( समूहार्थेष्यञ् ) ये २ नपुं० नाम केश समूह के हैं ।

[8]अलकः ( अलतीति युन् ) चूर्णकुन्तलः ( चूर्णस्य = क्षोदस्य कुन्तलः ) ये दो पुं० नाम टेढ़े बाल के हैं ।

ते = चूर्णकुन्तलाः ललाटे = भाले प्राप्ताः सन्तः—[9]भ्रमरकः ( भ्रमर इव इति कन् ) यह एक पुं० नाम ललाट पर आये हुए टेढ़े बाल ( काकुल, बुलबुली ) का है ।

काकपक्षः ( काकस्य पक्ष इव ) [10]शिखण्डकः ( शिखाया अण्ड इव कन् शकन्ध्वादिः ) ये दो पुं० नाम शिखा सामान्य के हैं ॥ ९६ ॥

---

१. शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च । इति मेदिनी । २. शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा । इति कोशान्तरम् । पिण्डं दद्यात् गयाशिरे । इति वायुपुराणम् । कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान्द्रौणिर्नालेभ्य इव पङ्कजान् ॥ इति महाभारतम् ।

३. कुन्तला मूर्धजास्त्वस्त्राश्चिकुराश्चिकुराः कचाः । इति दुर्गः ।

४. कुन्तलश्चषके वाले यवे ना भूम्नि नीवृति । इति मेदिनी ।

५. वालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ । नालिकेरे हरिद्रायां मल्लिकाभिद्यपि स्त्रियाम् ॥ वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम् । अलंकारान्तरे मेध्ये वाली वाला त्रुटिः स्त्रियोः ॥ इति मेदिनी । ६. कचः शुष्कव्रणे केशे बन्धे पुत्रे च गीर्पतेः । कचा करेण्वाम् । इति हैमः । ७. केशः स्यात् पुंसि वरुणे ह्रीवेरे कुन्तलेऽपि च । इति मेदिनी ।

८. अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले । इति मेदिनी । ९. अथ भ्रमरको भृङ्गे गैरिके चूर्णकुन्तले । इति मेदिनी । १०. शिखण्डौ तु शिखाबर्हौ । इति रभसः । शिखण्डो बर्हचूडयोः । इति मेदिनी । शिखण्डिकशिखण्डकौ । इति वाचस्पतिः ।

कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः ।
शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ॥९७॥
वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ।
पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥९८॥

---

[1]कबरी ( कूयते इति अरन् ङीष् च ) केशवेशः ( केशानां वेशः रचना ) ये दो नाम बालों के रचनाविशेष के हैं ।

संयताः = बन्धनगताः कचाः = केशाः—धम्मिल्लः ( धमतीति विच्, धमधातुः सौत्रः, मिलतीति लक् बाहुलकात्, धम् चासौ मिल्लश्चेति ) यह एक पुं० नाम जूड़ा, खोपा ( बान्धे हुए स्त्रियों के बाल के रचनाविशेष ) का है।

[2]शिखा ( शेते इति खः ह्रस्वश्च ) [3]चूड़ा ( चुड्यते इति 'चुड समुच्छ्राये' धातोः चौरादिकणिचो वैकल्पिकत्वात् पक्षे भिदादिपाठादङ्दीर्घत्वे ) केशपाशी ( केशानां पाशः, अल्पः केशपाशः इति गौरादिः ) ये तीन स्त्री नाम चोटी के हैं।

व्रतिनः शिखा—[4]जटा ( जायते इति टन् नलोपश्च ) [5]सटा ( सटति इति अच् ) ये दो स्त्री० नाम तपस्वियों के सटे बालों के हैं ॥ ९७ ॥

[6]वेणिः ( वेणतीति, गिन्तार्थकवेण्धातोः इन् ) प्रवेणी ( उपसर्गान्तरव्यावृत्त्यर्थः प्रग्रहः ) ये दो स्त्री नाम गुथी हुयी चोटी के हैं । ( प्राचीनकाल में प्रोषितभर्तृकाओं में प्रथा थी कि वे बालों को बाँधती नहीं थीं । केवल गूँथकर चोटी बना लेती थीं । उसी के ये दो नाम हैं । )

विशदे = निर्मले कचे = केशे—[7]शीर्षण्यः ( शिरसि भवः इति यत्, शीर्षन्नादेशो वैकल्पिकः ) शिरस्यः ( यत् ) ये दो पुं० नाम स्नानादि से निर्मल बाल के हैं ।

कचात् = कचवाचकात् परे ( एते = पाशादयः ) कलापार्थाः = कलापः = समूहः अर्थो येषां ते = समूहवाचका इत्यर्थः । [8]पाशः ( पाश्यते चौरादिकपशधातोः घञ् ) [9]पक्षः ( पक्ष्यते परिग्रहार्थकपक्ष-धातोः घः [10]हस्तः ( हसतीति तन् ) ये ३ पुं० शब्द कचवाचक शब्द के अन्त में रहने पर समूह अर्थ को कहते हैं ।

---

१. कबरं लवणाम्लयोः । कबरी केशविन्यासशाकयोः । इति हैमः ।

२. शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च । इति मेदिनी । ३. चूडा शिखाग्रयोः । बाहुभूषावलभ्योश्च । इति हैमः ।

४. जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी । इति मेदिनी । ५. सटा जटाकेसरयोः । इति मेदिनी कोटीरस्तु जटा सटा । इति रभसः । ६. वेणी सेतुप्रवाहयोः देवताडे केशबन्धे । इति हैमः । ७. शीर्षण्यं तु शीर्षके । सुकेशे पुंसि । इति मेदिनी । ८. पाशस्तु मृगपस्त्रादिबन्धने । कर्णान्ते शोभनार्थः स्यात् कचान्ते निकरार्थकः । छात्राद्यन्ते च निन्दार्थः । इति हैमः । ९. पक्षौ मासार्धके गेहपार्श्वसाध्यविशेषयोः । केशादेः परतो वृन्दे बले सखि सहाययोः । इति मेदिनी । १०. हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परे व्राते । इति मेदिनी ।

तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे।
आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥९९॥
दशैते त्रिष्वलंकर्ताऽलंकरिष्णुश्च मण्डितः।
प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥१००॥
विभ्राड् भ्राजिष्णुरोचिष्णू भूषा तु स्यादलंक्रिया।
अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥१०१॥

[१]तनूरुहम् ( तन्वां रोहतीति कः ) रोम ( रोहतीति निपातनात् रौतेः वा मनिन् लोम ( कपिल-कादित्वात् लत्वम् ) ये ३ न० नाम शरीर के रोम के हैं।

पुंमुखे = पुंसः मुखे तस्य = रोम्णः वृद्धिः तस्यां = श्मश्रु ( श्म = मुखं श्रयति, श्मनि = = मुखे श्रयते मितद्र्वादित्वात् डुः, संपदादिक्विप् वा क्विपि तुक् नोद्भावनीयः आगमशास्त्रस्यानि-त्यत्वात् ) यह एक नपुं नाम दाढी के बढे हुए बाल और मूछ का है।

[२]आकल्पः ( आकल्पनम् इति घञ् रोः लः ) [३]वेषः ( वेषणम् इति घञ्, तालव्यान्तोऽपि तत्र वेशनम् इति विश प्रवेशने' धातोः घञ् ) [४]नेपथ्यम् ( नयतीति णिच् गुणः, निनः = नेत्रस्य नेतुः पथ्यम् ) प्रतिकर्म ( प्रत्यङ्गकर्म शाकपार्थिवादिः ) प्रसाधनम् ( प्रसाध्यतेऽनेन इति ल्युट् ) ये ५ नाम आभूषण आदि रचना विशेष के हैं। जिनमें १–पुं० शेष नपुंसक हैं ॥ ९९ ॥

रोचिष्णुपर्यन्ता एते वक्ष्यमाणाः दश शब्दाः त्रिषु लिङ्गेषु बोध्याः इति सम्बन्धः—अलंकर्ता ( अलं करोतीति तृन् ) अलंकरिष्णुः ( इष्णुच् ) ये दो त्रि० नाम अलंकरणशील ( सुशोभित करने वाले ) के हैं।

मण्डितः ( मण्ड्यते स्म इति क्तः ) प्रसाधितः ( प्रसाध्यते स्म इति स्वार्थण्यन्तात् क्तः ) अलंकृतः ( अलं क्रियते स्म इति क्तः ) भूषितः ( भूष्यते स्म इति क्तः ) परिष्कृतः ( सुट् परिष्क्रियते स्म इति क्तः, ) ये ५ त्रि० नाम आभूषणों से सुशोभित के हैं ॥ १०० ॥

विभ्राट् ( विभ्राजते तच्छीलः इति क्विप्, षत्वम्, जश्त्वचर्त्वे ) भ्राजिष्णुः ( भुवश्चेति सूत्रे चकारात् भ्राजेरपि इष्णुच् ) रोचिष्णुः ( रोचते तच्छीलः इति इष्णुच् ) ये ३ त्रि० नाम अलंकारादि से सुशो-भित के हैं।

भूषा ( भूषणम् इति अकारप्रत्ययः ) अलंक्रिया ( अलंकरणम् इदि शः, शे परतः रिङादेशे कृते इयङि ) ये दो स्त्री० नाम गहना से सुशोभित करने के हैं।

[५]अलंकारः ( अलंक्रियते अनेन इति घञ् ) आभरणम् ( आभ्रियते अनेन इति ल्युट् ) परिष्कारः

---

१. तनूरुहं तु लोम्नि स्यात् पतत्त्रे च नपुंसकम्। इति मेदिनी। तनूरुहस्तु पुत्रे गरुति लोम्नि च। इति हैमः। २. आकल्पः कल्पने वेशे। इति मेदिनी। ३. वेशो वेश्यागृहे गृहे नेपथ्ये च। इति मेदिनी। ४. नेपथ्यं तु प्रसाधने। रङ्गभूमौ वेषभेदे। इति हैमः।

५. अलंकारः कंकणादिषु। उपमादौ। इति हैमः।

मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् ।
चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥१०२॥
बालपाश्या पारितथ्या पत्रपाश्या ललाटिका ।
कर्णिका तालपत्रं स्यात् कुण्डलं कर्णवेष्टनम् ॥१०३॥
ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका ।

---

( परिष्क्रियतेऽनेन इति घञ् ) विभूषणम् ( विभूष्यतेऽनेन इति ल्युट् ) [1]मण्डनम् ( मण्ड्यते अनेन इति ल्युट् ) ये ५ नाम गहना के हैं। जिनमें १ म, ३ य पुं० हैं शेष २ य, ४ र्थ, ५ म नपुं० हैं।

मकुटम् ( मङ्कते इति बाहुलकादुटः, नुमभावः, मुकुटम् इति उकारद्वयपाठे बाहुलकात् धातोरत उः ) किरीटम् ( किरतीति कीटन् ) ये दो पुं०, न० नाम किरीट के हैं।

[2]चूडामणिः ( चूडायाः मणिः ) शिरोरत्नम् ( शिरसः रत्नम् ) ये दो नाम शिरोमणि के हैं जिनमें १ म पुं०, द्वितीय नपुं० हैं।

हारमध्यगः = हारस्य मध्यं, हारमध्यं गच्छतीति डः = हारमध्यगः = सुमेरुपदवाच्यः इति सम्बन्धः— [3]तरलः ( तरं लातीति कः ) यह एक पुं० नाम सुमेरु ( माला के मध्यमणि ) का है ॥ १०२ ॥

बालपाश्या ( बालपाशे = केशसमूहे साधु इति यत् ) पारितथ्या ( परितः तथाभूताः एव इति चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ) ये दो स्त्री० नाम स्त्रियों की चोटी में लगायी जानेवाली सोने की पट्टी ( या आभूषण विशेष ) के हैं।

पत्त्रपाश्या ( पाशानां समूहः पाश्या, पत्त्रमिव पाश्या इति ) ललाटिका ( ललाटस्य अलंकारः इति कन् ) ये दो स्त्री० नाम बिन्दी, मनटिका आदि ललाट के भूषण के हैं।

[4]कर्णिका ( कर्णस्यालंकारः, इति कन् ) [5]तालपत्त्रम् ( तालस्य पत्त्रम् ) ये दो नाम कनफूल या ऐरन झूमक, तरकी, ढेला आदि कर्णफूल के हैं, जिनमें प्रथम स्त्री०, द्वितीय नपुं० हैं। 'ताटङ्क' भी इसी अर्थ में है। सुवर्णनिर्मित का भी ये ही नाम हैं।

[6]कुण्डलम् ( कुण्डते इति वृषादित्वात् कलच् ) कर्णवेष्टनम् ( कर्णस्य वेष्टनम्, वेष्ट्यतेऽनेन इति ल्युट् ) ये दो नपुं० नाम कुण्डल के हैं ॥ १०३ ॥

ग्रैवेयकम् ( ग्रीवायां भवम् इति ढकञ् ) कण्ठभूषा ( भूष्यते इति भूषा, कण्ठस्य भूषा ) ये दो नाम कण्ठा, हँसुली, नेकलेस आदि ग्रीवाभरण के हैं, जिनमें प्रथम नपुं० द्वितीय स्त्री० हैं।

लम्बनम् ( लम्बते इति ल्युः नन्द्यादित्वात् ) ललन्तिका ( ललतीति शतृ, उगित्वान्ङीप्, नुम्,

---

१. मण्डनं तु प्रसाधने। मण्डनोऽलंकरिष्णौ।
इति हैमः। २. चूडामणिः काकचिञ्चाफले मूर्धमणावपि। इति हैमः। ३. तरलं चञ्चले पिङ्गे भास्वरेऽपि त्रिलिङ्गकम्। हारमध्यमणौ पुंसि यवागूसरयोः स्त्रियाम् ॥ इति मेदिनी।

४. कर्णिका कर्णभूषणे। बीजकोशे सरोजस्य करमध्याङ्गुलावपि ॥ कुट्टिन्यां हस्तिहस्ताग्रे। इति हैमः।

५. तालपत्रं तु कुण्डले। स्यात्तालपत्री रण्डायाम्। इति हैमः। ६. कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च। काञ्चनद्गुडूच्योः स्त्री। इति मेदिनी।

**स्वर्णैः प्रालम्बिकाऽथोरःसूत्रिका मौक्तिकैः कृता ॥१०४॥**
**हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका ।**
**हारभेदा यष्टिभेदाद् गुत्सगुत्सार्धगोस्तनाः ॥१०५॥**
**अर्धहारो माणवक एकावल्येकयष्टिका ।**
**सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः ॥१०६॥**

---

डलयोरेकत्वम्, स्वार्थे कन् च ) ये दो नाम कुछ लटकने वाली कण्ठभूषा के हैं, जिनमें प्रथम नपुं०, द्वि० स्त्री० हैं ।

ललन्तिकैव स्वर्णनिर्मिता चेत्—प्रालम्बिका ( प्रालम्बते इति ण्वुल् ) यह एक स्त्री० नाम गले से थोड़ा नीचे लटकने वाले गहने ( सिकड़ी आदि ) के हैं ।

ललन्तिकैव मुक्ताभिः रचिता—उरःसूत्रिका ( उरसः सूत्रमिव इति कन् ) यह एक स्त्री० नाम मुक्तामाला का है ॥ १०४ ॥

[1]हारः ( ह्रियते मनो अनेन इति घञ्, भिदादिपाठादङि [2]हारा च ) मुक्तावली ( मुक्तानामवली दीर्घा पंक्तिः ) ये दो नाम मुक्ताहार के हैं, जिनमें प्रथम पुं० द्वि० स्त्रीलिङ्ग हैं ।

असौ हारः [3]शतयाष्टिकः सन्—देवच्छन्दः ( देवैः छन्द्यते इति घञ् ) यह एक पुं० नाम सौ लड़ी वाले हार का हैं ।

यष्टीनां भेदात् हारभेदाः स्यु इति सम्बन्धः—[4]गुत्सः ( गुष्यते इति सः स च कित् [5]गुत्सार्धः ( गुत्सस्य अर्धः ) [6]गोस्तनः ( गोः स्तन इव ) अर्धहारः ( अर्धेन एकदेशेन कृतः हारः मध्यमपदलोपी ) माणवकः ( माणवो बालः स इव, इति कन् यवादिः ) एकावली ( एका चासौ आवली च ) एकयष्टिका ( एकैव यष्टिः यस्याः सा ) ये ७ नाम हारों के भेद-विशेष के हैं जिनमें ५ पुं० शेष २ स्त्रीलिङ्ग हैं ।

[7]सप्तविंशतिमौक्तिकैः एकावृत्त्यैव कृता माला—नक्षत्रमाला ( नक्षत्राणां माला इव ) यह एक स्त्री नाम २७ दानों के हार का है ॥ १०६ ॥

---

१. हारो मुक्तासरे युधि । इति मेदिनी । २. हारा मुक्तावली हारः । इति रभसः ।

३. यष्टिर्हारलताशस्त्रभेदयोः । इति विश्वः । यष्टिर्लता सरः सरिः । इत्यनेकार्थमाधवी ।

४. गुत्सः स्यात् स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः । इति मेदिनी । अयं दान्तोऽपि । स्याद् गुच्छः स्तबके स्तम्बे हारभेदकलापयोः । इति मेदिनी । विग्रहस्तु—गूयते इति बाहुलकात् छक् । द्वात्रिंशल्लतिको गुच्छः = ३२ लड़ी की माला को गुत्स अथवा गुच्छ कहते हैं ।

५. गुच्छार्धस्तत्त्वसंख्यकः । चतुर्विंशतियष्टिको हारो गुत्सार्ध = २४ लड़ी के हार को गुत्सार्ध या गुच्छार्ध कहते हैं । ६. चतुस्त्रिंशल्लतो हारश्चतुःशरिच्च गोस्तनः = ३४ लड़ी के हार को गोस्तन कहते हैं । ७. विंशतियष्टिको हारो माणवः परिकीर्तितः । २० लड़ी के हार को माणव कहते हैं । माणवो हारभेदे वाले कुपुरुषे वटौ । इति मेदिनी । हारों के भेद में हेमचन्द्राचार्य ने कहा है—अर्धहारश्चतुःषष्टि-र्गुच्छमाणवमन्दराः । अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम् ॥ औरों ने—'चतुष्षष्टिलतो हारोऽथाष्टहीना यथोत्तरम् । रश्मिकलापौ माणावोऽर्धहारोऽर्धगुच्छकः । कलापच्छान्दो मन्दरश्च गुच्छः सप्ततियष्टिकः'—कहा है ।

**आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।**
**केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ॥१०७॥**
**साऽक्षराङ्गुलिमुद्रा स्यात् कङ्कणं करभूषणम् ।**
**स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ॥१०८॥**
**क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ।**

---

आवापकः ( उप्यते इति अच् कन् च ) पारिहार्यः ( परिह्रियते घञ् ततः अण् ) [1]कटकः ( कटति इति क्वुन् ) [2]वलयः ( वलते इति कयन् ) ये ४ नाम कलाई के आभूषण के हैं। जिनमें १– २पुं० हैं, ३–४ पुं० नपुं० हैं।

केयूरम् ( के बाहुशिरसि यौति इति ऊरः, खर्जादित्वात्, बाहुलकाद्धिलोपोऽलुक् च सप्तम्याः ) [3]अङ्गदम् ( अङ्गं द्यति इति कः ) ये दो नपुं० नाम बाँह पर धारण किये जाने वाले आभूषण के हैं।

[4]अङ्गुलीयकम् ( अङ्गुलौ भवम् इति छः कन् ) [5]ऊर्मिका ( ऊर्मिरिवा इति कन् ये दो नाम अंगूठी के हैं, जिनमें प्रथम नपुं० द्वि० स्त्री० हैं ॥ १०७ ॥

सा ऊर्मिका साक्षरा = अक्षरैः सहिता चेत्—अङ्गुलिमुद्रा ( अङ्गुल्या मुदं रातीति कः। मोदते इति रक्, अङ्गुल्याः मुद्रा इति वा ) यह एक स्त्री० नाम नामाङ्कित अंगूठी का है।

[6]कङ्कणम् ( कं = सुखं कणति = कथयति इति अच् ) [7]करभूषणम् ( करस्य भूषणम् ) ये नपुं० नाम मणिबन्ध पर पहने जाने वाले आभूषण के हैं।

मेखला[8] ( मखं गतिं लातीति कः पृषोदरादिः ) [9]काञ्ची ( काञ्चते इति इन् बह्वादित्वान्ङीष् ) सप्तकी (सप्तस्वरान् कायतीति कः गौरादिः) [10]रशना (अश्नुते इति युः रशादेशश्च, 'रस आस्वादने' धातोः युचि दन्त्यमध्योऽपि ) [11]सारसना ( सारमुत्कृष्टं सनस्य 'षण सम्भक्तौ' धातोः घः ) ये ५ नाम कटिभूषण के हैं जिनमें १–४ स्त्री० और ५ वाँ नपुंसक है।

---

१. कटकोऽस्त्री नितम्बोऽद्रेर्दन्तिनां दन्तमण्डने। सामुद्रलवणे राजधानीवलययोरपि ॥ इति मेदिनी। २. वलयः कण्ठरोगे ना कंकणे पुन्नपुंसकम्। इति मेदिनी।

३. अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम्। अङ्गदा याम्यदिग्दन्तिहस्तिन्यामपि योषिति ॥ इति मेदिनी। ४. अयं मैथिल्याभिज्ञानं काकुत्स्थस्याङ्गुरीयक । इति भट्टिप्रोगात् पुंलिङ्गोऽपि। ५. ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः। इति मेदिनी। ६. कङ्कणं करभूषायां सूत्रमण्डनयोरपि। इति-मेदिनी। हस्तमण्डनसूत्रे स्यात् कङ्कणो ना प्रतीसरः। इति रत्नकोशः।

७. क्लीबं मण्डने सूत्रे कङ्कणं करभूषणम्। इति रभसः। ८. मेखलाद्रिनितम्बे स्याद्रशना खड्गबन्धयोः। इति हैमः। ९. काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च। इति मेदिनी।

१०. रशनाऽपि च जिह्वायाम्। दन्त्यमध्याऽपि–रसनं स्वदने ध्वाने रसना काञ्चिजिह्वयोः। रसनं चापि रास्नायाम्। इति विश्वप्रकाशः।

११. मेखलायां सारसनमुरस्त्रे च तनुत्रिणम्। इति रभसः। 'स्त्रीकट्याम्' अत्र 'स्त्री' अविवक्षितम्, तेन पुंस्कटिभूषणेऽपि। काञ्च्या भेदस्तु—एका यष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका। रशना षोडश ज्ञेयाः कलापः पञ्चविंशकः ॥ इत्यभियुक्तोक्तेः।

पादांगदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥१०९॥
हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका।
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ॥११०॥
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत्।
कौशेरं कृमिकोशोत्थं रांकवं मृगरोमजम् ॥१११॥

---

पुंसां कट्यां चेत् काञ्ची—[1]शृङ्खालम् ( शृङ्गैः खलतीति अच्, पृषोदरादिः ) यह एक त्रिलिङ्ग नाम पुरुष की करधनी का हैं।

पादाङ्गदम् ( पादस्य अङ्गदमिव, पाद एवाङ्गं पादाङ्गं, पादाङ्गं दयते इति को वा ) [2]तुलाकोटिः ( तुलाकारं कोटिः अग्रमस्य ) [3]मञ्जीरः ( मञ्जति=ध्वनिं करोति 'मजि ध्वनौ' सौत्रो धातुः, तस्मात् बहुलकादीरन् ) नूपुरः ( नूयते=स्तूयते इति सम्पदादिः, नुवि पुरति इति कः ) ये ४ नाम पायजेव के हैं जिनमें प्रथम नपुं०, द्वि० स्त्री० ३–४पुं० हैं ॥ १०९

हंसकः ( हंस इव कायति डः ) पादकटकः ( पादस्य कटको वलयः ) ये दो पुं० नाम नूपुर के हैं और इसके पूर्व के लिखे हुए ४ नाम भी पर्यायवाचक हैं।

[4]किङ्किणी ( किंचित् किणां करोति इति किणशब्दात् करोत्याद्यर्थे ण्यन्तादच् गौरादिः ) क्षुद्रघण्टिका ( घण्टेव इति कन्, क्षुद्रा चासौ घण्टिका चेति कर्मधारयः ) ये दो स्त्री० नाम घूँघुरू के हैं।

त्वगादीनि-वस्त्रयोनिः ( वस्त्रस्य योनिः कारणम् ) । यह एक स्त्री० नाम वस्त्र बनाने में उपयोगी, छाल, फल, कृमि और रोंए ) का है। आगे कहे जाने वाले दस नाम स्त्रीलिङ्ग है।

वाल्कम् ( वाल्कस्य विकारः इत्यण् ) क्षौमम्[5] ( क्षुमाया विकारः इत्यण् ) ये दो त्रि० नाम तीसी या केले आदि के छाल से बन हुए कपड़ों के हैं।

[6]फालम् ( फलस्य विकारः इत्यण् ) कार्पासम्, ( कर्पासस्य विकारः फलम् इत्यण् ) ( बादरम् बदरायाश्च विकारः फलम् इत्यण् ) ये त्रि नाम कपास के बने सूती कपड़े के हैं

कौशेयम् ( कोशे सम्भूतः इति ढञ् ) यह एक त्रि० नाम कृमिकोश से निकले सूत से बने पीताम्बर आदि रेशमी कपड़े के हैं।

मृगरोम्णा जातम् इति सम्बन्धः—राङ्कवम् ( रङ्कौ भवम् इत्यण् ) यह १ त्रि० नाम ऊनी कपड़े का है। 'मृगरोमजम्' यहाँ पर मृगशब्द पशुमात्र परक है अतः राङ्कवम् से कम्बलादि भी लिये जायँगे।

---

१. शृङ्खलं पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने। इति हैमः।

२. तुलाकोटिर्मानभेदेऽर्बुदे स्यान्नूपुरेऽपि च। इति हैमः। ३. मञ्जीरास्त्री स नूपुरः। इति रभसः। ४. कंकणः स्यात्प्रतिसरः कङ्कणी क्षुद्रघण्टिका। इति भागुरिः।

५. क्षौमं वल्कलजांशुके। शणजेऽतसीजे। इति मेदिनी। ६. फालं तु वसने फाल उत्प्लुतौ। इति हैमः। क्लीबं सीरोपकरणे पुंसि शंकरसीरिणोः॥ इति मेदिनी।

अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् ।
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥११२॥
पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ।
क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रावृतं त्रिषु ॥११३॥
स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः ।
दैर्घ्यमायाम आरोहः परिणाहो विशालता ॥११४॥

---

अनाहतम् ( न आहतम् ) । निष्प्रवाणि ( निर्गता प्रवाणी तन्तुवायशलाकाऽस्मात् ) तन्त्रकम् ( तन्त्राद्‌चिरापहृतम् इति कन् प्रत्ययान्तो निपा० ) नवाम्बरम् ( नवं च तदम्बरञ्च इति ) ये ४ नाम कोरे कपड़े के हैं, जिनमें १–३ त्रि० च० नपुं० लिङ्ग हैं ।

उद्गमनीयम् ( उद्गम्यतेऽभिलष्यते इति अनीयर् ) यह १ न० नाम धुलाए हुए कपड़े के हैं। युग शब्द की विवक्षा यहाँ नहीं है ॥ १२ ॥

[1]पत्त्रोर्णम् ( पत्रेषु कृतोर्णा, पत्त्रोर्णाऽस्त्यत्र इत्यच् ) धौतकौशेयम् ( धाव्यते स्म इति क्तः ऊठ् वृद्धौ, धौतं च तत् कौशेयं चेति ) ये दो न० नाम धुलाए हुए रेशमी कपड़े के हैं ।

बहुमूल्यम् ( बहुमूल्यमस्य इति ) महाधनम् ( महद् धनं मूल्यमस्य इति ) ये दो न० नाम ज्यादे दामवाले वस्त्र के हैं ।

[2]क्षौमम् ( क्षौति, क्षूयते वा इति मन् अणि च ) दुकूलम् ( दुष्टं कूलति इति कः ) ये दो नपुं० नाम पीताम्बर के हैं ।

निवीतम् ( निव्रीयते स्म इति क्तः ) प्रावृतम् ( प्राव्रियते स्म इति क्तः ) ये दो नपुं० नाम ढके हुए वस्त्र के हैं ।

[3]दशाः ( दश्यते इति भिदाद्यङ् ) [4]वस्तयः ( वस्यते इति तिः ) ये दो नाम वस्त्र की किनारी के हैं जिनमें प्रथम स्त्री० नित्य ब० व० द्वितीय स्त्री०, पुं० नित्यबहु वचन है । दैर्घ्यम् ( दीर्घस्य भावः इति ष्यञ् ) आयामः ( आयम्यतेऽनेन इति घञ् ) [5]आरोहः ( आरुह्यते अनेन इति अच् ) ये तीन नाम कपड़े आदि की लम्बाई के हैं, जिनमें प्र० न० पुं० और द्वि० तृ० पुं० हैं ।

परिणाहः ( परिणह्यतेऽनेन इति घञ् ) विशालता ( विशालस्य भावः इति तल् ) ये दो नाम कपड़े आदि की चौड़ाई के हैं, जिनमें प्रथम पुं० द्वि० स्त्री० हैं ॥ ११४ ॥

---

१. पत्त्रोर्णं धौतकौशेये पत्त्रोर्णः शोणकद्रुमे । इति हैमः । २. क्षौमपट्टे दुकूलेऽस्त्री । इति मेदिनी ।
३. दशा वर्त्यामवस्थायां वस्त्रान्ते भूम्नि पुंस्त्रियोः । इति रभसः ।
४. वस्तिर्द्वयोर्निरूहे नाभ्यधो भूम्नि दशासु च । इति मेदिनी ।
५. आरोहस्त्ववरोहे च वरयोषित्कट्यपि । आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये ॥ इति मेदिनी ।

**पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ।**
**वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ॥११५॥**
**सुचेलकः पटोऽस्त्री ना वराशिः स्थूलशाटकः।**
**निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ॥११६॥**
**अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके।**

---

पटच्चरम् ( पटति इति बाहुलकादत, भूतपूर्व पटत् इति चरट्। ) जीर्णवस्त्रम् ( जीर्णं च तद्वस्त्रं च इति ) ये दो नपुं० नाम पुराने कपड़े के हैं।

नक्तकः ( नजते इति बाहुलकात्तन् स्वार्थे कन्। नक्तं कं सुखमस्माद्वा पृषोदरादित्वात् मलोपः। लक्तकः पाठो वा लवयते स्म क्तः स्वार्थे कन् च। ) कर्पटः ( करोतीति विच्, कर् चासौ पटश्चेति समासः ) ये दो पुं० नाम कपड़े के टुकड़े ( गमछे ) के हैं।

वस्त्रम् ( वस्यतेऽनेन इति ष्ट्रन् ) आच्छादनम् ( आच्छाद्यतेऽनेन इति ल्युट् ) वासः ( वस्यतेऽनेन इत्यसुन् ) [1]चेलम् ( चिल्यतेऽनेन इति घञ् ) [2]वसनम् ( वस्यतेऽनेन इति ल्युट् ) [3]अंशुकम् ( अंशून् कायति इति कः ) ये छः नपुं० नाम कपड़ा मात्र के हैं॥ ११५॥

सुचेलकः ( शोभनं चेलमेव इति स्वार्थे कन् ) [4]पटः ( पटति इति कः ) ये दो नाम अच्छे कपड़े के हैं, जिनमें प्र० पुं० और द्वि० पुं० नपुं० है।

[5]वराशिः ( वरं श्रेष्ठं अश्नुते इति इन् ) स्थूलशाटकः ( शटति इति ण्वुल् स्थूलश्चासौ शाटकश्च इति समासः ) ये दो नाम मोटे कपड़े के हैं। जिनमें १ म पुं०, २ य त्रि० हैं।

[6]निचोलः ( निचोल्यते इति घञ् ) प्रच्छदपटः ( प्रच्छदति इति अच्, प्रच्छदश्चासौ पटश्चेति समासः ) ये दो पुं० नाम पालकी आदि के ओहार एवं सारङ्गी आदि की खोली के हैं। इनमें प्र० त्रि० भी है। बुरका, बिस्तरे का चादर आदि को भी निचोल कहते हैं।

[7]रल्लकः ( रमते इति क्विप् मलोपः तुक् च, लाति इति क्विप्, रत् चासौ लश्च इत्येवं समासः कन् च ) [8]कम्बलः ( कम्बति इति वृषादित्वात् कलच् ) ये दो पुं० नाम कम्बल के हैं॥ ११६॥

अन्तरीयम् ( अन्तरे भवम् इति गहादित्वाच्छः ) उपसंव्यानम् ( उपसंव्रीयतेऽनेन इति ल्युट् ) परिधानम् ( परिधीयते इति ल्युट् ) अधोंऽशुकम् ( अधोदेहभागस्यांशुकम् इति ) ये चार नपुं० नाम कमर से नीचे पहननेवाले कपड़ों के हैं।

---

१. चेलो नीचेऽधमे त्रिषु। नपुंसकं तु वसने। इति मेदिनी। २. वसनं छादने वस्त्रे। इति मेदिनी। ३. अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितेः। इति हैमः। ४. पटश्चित्रपटे वस्त्रेऽस्त्री, प्रियालद्रुमे पुमान्। इति मेदिनी। ५. 'वराशिर्ना' इति तालव्यान्ते शाब्दिकः। वरासिरपि।

६. निचुलस्तु निचोले स्यादिज्जलाख्यमहीरुहे। इति मेदिनी। ७. रल्लकः कम्बले स्मृतः, तथैव कम्बलमृगे। इति हैमः। ८. कम्बलः क्रिमिसास्नयोः। नागप्रभेदे प्रावारे वैकक्ष्ये कम्बलं जले। इति हैमः।

द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥११७॥
संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् ।
नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ॥११८॥
अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् ।
स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ॥११९॥
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ।
प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥१२०॥

---

प्रावारः ( प्रव्रियतेऽनेन इति घञ् उपसर्गस्य दीर्घः ) उत्तरासङ्गः ( उत्तरे ऊर्ध्वभागे आसज्यते इति घञ् ) [1]बृहतिका ( बृहत्येव इति कन् ) [2]संव्यानम् ( संवीयतेऽनेन इति ल्युट् ) उत्तरीयम् ( उत्तरस्मिन्देहभागे भवम् इति छः ) ये पाँच नाम कमर से ऊपर पहनने वाले कपड़ों के हैं, जिनमें १–२ पुं० लि०, तृ० स्त्री०, च० पुं० नपुं० हैं ।

चोलः ( चोल्यतेऽनेन इति अच् ) [3]कूर्पासकः ( कूर्परे आस्ते इति घञ् ) ये दो नाम स्त्रियों की कुर्ती चोली आदि के हैं, जिनमें प्र० स्त्री, द्वि० पुं० नपु० हैं । यहाँ 'स्त्रियाः' पाठभेद विशेषोक्ति विवक्षित नहीं हैं । अतः पुरुष के कुर्ता, कमीज भी लिये जा सकते हैं ।

नीशारः ( नितरां शीर्यते हिमानिलौ अत्र, अनेन वा इति घञ् दीर्घः ) यह एक पुंलि० नाम शीत से बचने के लिये जाड़े में ओढ़े जाने वाले वस्त्रमात्र का है ।

अर्धोरुकम् ( ऊरोरर्धम् इति समासः अर्धोरौ काशते इति डः ) [4]चण्डातकम्—( चण्डां कोपनवरस्त्रियमतति इति क्वुन् ) ये दो नाम लहँगा के हैं । जिनमें प्र० पुं० नपुं० हैं ।

यत् आप्रपदं प्राप्नोति तत्—आप्रपदीनम् ( पादस्याग्रं प्रपदं तन्मर्यादीकृत्य इति आप्रपदम् आप्रपदं प्राप्नोति इति खः ) यह १ त्रि० नाम पैर तक लटकने वाले कपड़े का है ॥ ११९ ॥

[5]वितानम् ( वितन्यते इति घञ् ) उल्लोचः ( ऊर्ध्वं लोच्यते इति अच् ) ये दो नाम चँदवा के हैं । जिनमें प्र० पुं० नपुं, द्वि० पुं० हैं ।

[6]दूष्यम् ( दूषयति इति ण्यन्तात् यत् ) यह एक नपुं० नाम कपड़े के घर तम्बू आदि का है । आदि पद से पटकुटी, पटवासः, पटगृहम्, पटकुड्यम्, का ग्रहण है ।

प्रतिसीरा ( प्रतिसिनोति इति रक् ) जवनिका ( जवत्यस्याम् इति ल्युट् ) तिरस्करिणी ( तिरस्करोति इनि णिनिः ) ये तीन स्त्री० नाम पर्दा कनात आदि के हैं ॥ १२० ॥

---

१. बृहती वसनान्तरे । इति मेदिनी । २. संव्यानं छदनेंऽशुके । इति विश्व-मेदिन्यौ ।
३. कूर्पासस्त्वर्धचोलकः । इति हारावली । ४. अर्धोरुकम् वरस्त्रीणां वासश्चण्डातकः स्मृतः । इति पालितात् पुंलिङ्गोऽपि । ५. वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् । क्लीबं वृत्तविशेषे स्यात् त्रिलिङ्गो मन्दतुच्छयोः ॥ इति मेदिनी । ६. दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे । इति मेदिनी ।

परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ।
उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ॥१२१॥
स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ।
अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे ॥१२२॥
तमालपत्रतिलकचित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ॥१२३॥

---

परिकर्म (परि मलवर्जनार्था क्रिया परिकर्म स्नानोद्वर्तनादि इति ) अङ्गसंस्कारः (अङ्गं संस्क्रियतेऽनेन इति घञ् ) ये दो नाम साबुन आदि से शरीर के संस्कार करने के हैं ।

मार्ष्टिः ( मार्जनम् इति ण्यन्तात् क्तिन् इण्निषेधः णिलोपश्च ) [1]मार्जना ( ण्यन्ताद् युच् ) मृजा ( मिदाचङ् ) ये तीन स्त्री० नाम पोंछकर शरीरको निर्मल करने के हैं ।

[2]उद्वर्तनम् ( उद्वर्त्यतेऽनेन इति ण्यन्तात् ल्युट् ) उत्सादनम् ( उत्साद्यतेऽनेन इति ण्यन्तात् ल्युट् ) ये दो नपुं० नाम उबटन, साबुन आदि से शरीर को मलने के हैं।

आप्लावः ( आप्लवनम् इति घञ् ) आप्लवः ( आप्लवनम् इति घञभावे अप् ) स्नानम् ( स्नायतेऽनेन इति ल्युट् ) ये तीन नाम स्नान करने के हैं ।

[3]चर्चा ( चर्चनम् इत्यङ् ) चार्चिक्यम् ( चर्चनम् इति ण्वुल् ततः ष्यञ् ) [4]स्थासकः ( तिष्ठतीति बाहुलकात्सः कन् च ) ये तीन नाम शरीर में चन्दन आदि लगाने के हैं। जिनमें प्र० स्त्री० द्वि० नपुं० और तृ० पुं हैं ।

प्रबोधनम् ( प्रबुद्ध्यते इति भावे ल्युट् ) अनुबोधः ( अनुपूर्वाद्भावे घञ् ) ये दो नाम निकले हुए गन्ध को प्रयत्न द्वारा फिर से लाने के हैं। जिनमें प्र० नपुं० द्वि० पुं० हैं ।

पत्रलेखा ( पत्राकारा लेखा इति मध्यमपदलोपी समासः ) पत्राङ्गुलिः ( पत्रार्थोऽङ्गुलिरङ्गुलिव्यापारः ) ये दो स्त्रीलिङ्ग नाम स्तन, गाल पर केसर आदि से बनायी गयी चित्रकारी के हैं ॥ १२२॥

[5]तमालपत्रम् ( तमालपत्रमिव इति ) [6]तिलकः ( तिलति इति क्वुन् ) [7]चित्रकम् ( चित्रयति इति क्वुन् ) [8]विशेषकम् ( विशिनष्टि इति ण्वुल् ) ये चार नाम कस्तूरी, चन्दन आदि से ललाट पर तिलक लगाने के हैं । जिनमें द्वि० च० पुं० नपुं० और प्र० तृ० केवल नपुंसक हैं ।

---

१. मार्जनो लोध्रशाखिनि, मार्जनं शुद्धिकरणे मार्जना मुरजध्वनौ । इति हैमः ॥ २. उत्सादनं समुल्लेखोद्वर्तनोद्वाहनेषु च । इति हैम-मेदिन्यौ । ३. चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि । इति हैमः । ४. स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे । इति हैमः ।

५. तमालपत्रं तापिच्छे तिलके पत्रके । इति विश्वः । ६. तिलकं रुचके लोम्नि । इति हैमः ।
७. चित्रकं तिलके ना तु व्याघ्रमिचञ्चुपाटिषु । इति मेदिनी । ८. विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु । इति मेदिनी ।

काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने ।
रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ॥१२४॥
राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।
लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् ॥१२५॥
कालीयकं च कालानुसार्यं चाथ समार्थकम् ।

---

कुङ्कुमम् ( कुक्यते इति बाहुलकादुमच् नुम् च ) [1]काश्मीरजन्मा ( कशतीति ईरन्, मुट् च, पृषोदरादिः काश्मीरे जन्मास्य इति ) [2]अग्निशिखम् ( अग्निरिव शिखा केसरोऽस्य इति ) [3]वरम् ( व्रियते इत्यप् ) [4]बाह्लीकम् ( वल्हते इति बाहुलकादीकन् ) [5]पीतनम् ( पीतं करोति इति ण्यन्ताल्ल्युः ) [6]रक्तम् ( रज्यते स्म इति क्तः ) [7]संकोचम् ( संकोचति इत्यच् ) [8]पिशुनम् ( पिंशति इत्युनन् ) [9]धीरन् ( दधाति इति क्रन् ईत्वश्च ) [10]लोहितचन्दनम् ( लोहितं च तच्चन्दनञ्च ) ये ग्यारह नपुं० नाम केसर, कुङ्कुम के हैं ॥ १२४ ॥

राक्षा ( रक्ष्यतेऽनया इत्यः ) [11]लाक्षा ( लक्ष्यतेऽनया इत्यः ) जतु ( जायत इत्युः तोऽन्तादेशः ) यावः ( यौति अच् यव एव याव इत्यण् ) अलक्तः ( न लज्यते स्म इति बाहुलकात्तन् ) द्रुमामयः ( द्रुमाणामामयः इति ) ये छः नाम लाक्षा ( लाख ) के हैं। जिनमें १–२ स्त्री०, ३ य नपुं०, ४–६ पुं० हैं।

लवङ्गम् ( लुनाति, लूयते वा इत्यङ्गच् ) देवकुसुम् ( देवानां कुसुमम्, दैवयोग्यं कुसुमम् ) श्रीसंज्ञम् ( श्रियः संज्ञा यस्य इति ) ये तीन नपुं० नाम लौंग के हैं।

जायकम् ( जयति गन्धान्तरम् इति ण्वुल् ) [12]कालीयकम् ( कालस्य वर्णस्येदम् इति छः कन् च ) [13]कालानुसार्यम् ( कालेन वस्तुनाऽनुसार्यम् इति ) ये तीन नपुं० नाम सुगन्धित पीले चन्दन के हैं।

---

१. काश्मीरं कुङ्कुमेऽपि स्याट्टङ्कपुष्करमूलयोः । इति मेदिनी ।

२. अथाग्निशिखमुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च । इति मेदिनी । ३. काश्मीरजं वह्निशिखं बाह्लीकं पीतनं वरम् । इति वाचस्पतिः । ४. बाह्लीकं बाह्लिकं धीरहिङ्गुनीर्नादमदेशयोः । इति त्रिकाण्डशेषः ।

५. पीतनं पीतनारुणि, कुङ्कुमे हरिताले च पुमानाम्रातके मतः । इति मेदिनी । ६. रक्तं नील्यादिरञ्जिते, कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे । इति हैमः ।

७. संकोचो मीनभेदे च बन्धं क्लीबं तु कुङ्कुमे । इति मेदिनी । ८. पिशुनं कुङ्कुमेऽपि च, कपिवक्त्रे च काके ना सूचककूरयोस्त्रिषु । पृक्कायां पिशुना स्त्री स्यात् । इति मेदिनी । ९. धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे । १०. लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने । इति मेदिनी ।

११. लाक्षायां रक्षणे रक्षा । इति रुद्रः । १२. कालीयकं च कालेयं वर्णकं कान्तिदायकम् । इति व्याडिः । कालेयकमिति वा पाठः तत्र कलेरिदमित्यर्थे ढक् बोध्यः । १३. कालानुसार्यं शैलेये कालीये शिंशपाद्रुमे । इति विश्व-मेदिन्यौ ।

वंशिकागुरुराजार्हलोहकृमिजजोङ्गकम् ॥ १२६ ॥
कालागुर्वगुरु स्यात्तु मङ्गल्या मल्लिगन्धि यत् ।
यक्षधूपः सर्जरसोऽरालसर्वरसावपि ॥ १२७ ॥
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ ।
तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ पायसः ॥ १२८ ॥

---

अथ समार्थकम् इति सम्बन्धः। [१]वंशिकम् ( वंशोऽस्त्यत्र इति ठन् ) [२]अगुरु ( न गुरु यस्मात् इति) [३]राजार्हम् ( राजानमर्हति इत्यच् ) [४]लोहम् ( लुह्यते इति घञ् ) [५]कृमिजम् ( कृमिभिर्जन्यते इति डः ) जोङ्गकम् ( जुङ्गति क्वुन् पृषोदरादिः ) ये छः नपुंसक नाम अगर के हैं ॥ १२६ ॥

कालागुरु ( कालं च तदगुरु च इति ) अगुरु ( न गुरु यस्मात् इति ) ये दो नपुं० नाम काले अगर के हैं।

मल्लिकापुष्पस्येव गन्धो यस्य इतीत्। यदगुरु मल्लिगन्धि तत् मङ्गल्या स्यात् इति सम्बन्धः। [६]मङ्गल्या ( मङ्गले साधुः इति यत् ) यह एक स्त्री० नाम बेला के फूल के समान सुगन्ध देने वाले अगर का है।

यक्षधूपः ( यक्षान् धूपायति इति अण् ) सर्जरसः ( सर्जस्य सालस्य रसः इति ) [७]अरालः ( न राति दुःखम् इति बाहुलकाल्लक् ) सर्वरसः ( सर्वैः रस्यते इति घञ् ) [८]बहुरूपः ( बहूनि रूपाण्यस्य इति ) ये पाँच पुं० नाम राल, धूप के हैं।

वृकधूपः ( वृक इव धूपः इति ) कृत्रिमधूपः ( कृत्रिमश्चासौ धूपश्च इति कन् ) ये दो पुं० नाम अनेक सुगन्धित द्रव्यों से बनाये हुए धूप के हैं।

[८]तुरुष्कः ( तुतोर्ति इति बाहुलकादुस्, गुणाभावः स्वार्थे कन् च ) [९]पिण्डकः ( पिण्डते इति कन् ) सिह्लः ( सिनह्यति इति बाहुलकाल्लक् अन्तर्भावितण्यर्थः, पृषोदरादिः ) यावनः ( यवनदेशे भवः इत्यण् ) ये चार पुं० नाम लोहबान के हैं।

---

१. राजार्हं वंशिकं नतम्, वनद्रुमः परमदो वंशकं लोहनामकम्। इति वाचस्पतिः।

२. कुस्तुम्बुरुकधान्याकमगुरु वा पुंसि लघुनाम च। इति बोपालितः। अगुरुस्त्वगुरौ लघौ। शिंशिपायाम्। अगुर्वगरु राजार्हम्। इति हैमः। ३. राजार्हं ओङ्गके क्लीबं राजयोग्येऽभिधेयवत्। इति मेदिनी। ४. लोहोऽस्त्री शस्त्रके लोहं जोङ्गके सर्वतैजसे। इति मेदिनी।

५. अगुरु प्रवरं लोहं क्रिमिजग्धमनार्यजम्। इति शाश्वतः।

६. मङ्गल्यः स्यात्त्रायमाणाश्वत्थबिल्वमसूरके। स्त्रियां शम्यामधःपुष्पीमिसिशुक्लवचासु च। रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु। इति मेदिनी।

७. अरालः सर्जवक्रयोः, इति। राजः सर्वरसोऽरालो धूपको वह्निवल्लभः। इति रभसः। राळः इति वा पाठः। ८. बहुरूपः स्मरे विष्णौ सरटे धूपके शिवे। इति हैमः।

८. तुरुष्कः सिंहलके म्लेच्छजातौ देशान्तरेऽपि च. इति विश्वमेदिन्यौ।

९. पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः। इति मेदिनी।

श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ।
मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ॥ १२९ ॥
कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥
गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१ ॥

---

[1]पायसः ( पय एव इत्यण् ) [2]श्रीवासः ( श्रियो वासः इति ) [3]वृकधूपः ( वृकनामा धूपः इति शाकपार्थि० ) श्रीवेष्टः ( श्रियः सरलद्रवस्य वेष्ट इति ) [4]सरलद्रवः ( सरलस्य देवदारोर्द्रवः इति ) ये पाँच पुंलिङ्ग नाम देवदारु के गोंद से बने हुए सुगन्धित द्रव्य विशेष के हैं ।

[5]मृगनाभिः ( मृगस्य नाभिः इति ) । मृगमदः ( मृगस्य मदः इति ) कस्तूरी ( कसति गन्धोऽस्याः इति ऊरः पृषो० ) ये तीन नाम कस्तूरी के हैं । जिनमें प्र० द्वि० पुं० और तृ० स्त्री हैं ।

कोलकम् ( कोलति इति ण्वुल् रलयोरेकत्वात् [6]कोरकमपि ) कक्कोलकम् ( ककन्तेऽत्र इति सम्पदादिः, कोलतीति गः, कक् च तत् कोलं चेति कन् ) कोशफलम् ( कोशे फलमस्य इति ) ये तीन नपुं० नाम कङ्कोल के हैं ।

कर्पूरम् ( करोति इति विच् । पूर्यते इति कः, कर् चासौ पूरश्चेति ) [7]घनसारः ( घनो दृढः सारोऽस्य इति ) चन्द्रसंज्ञः ( चन्द्रस्य संज्ञा यस्य इति ) सिताभ्रः ( सितं शौक्ल्यमभ्रति स्वसंबद्धम् इति अण् ) [8]हिमवालुका ( हिमा चासौ वालुका च इति ) ये पाँच नाम कपूर के हैं । जिनमें १ नपुं० २—४ पुं० और ५ म स्त्री० हैं ।

गन्धसारः ( गन्धवान् सारः स्थिरभागोऽस्य इति ) मलयजः ( मलये जातः इति डः ) [9]भद्रश्रीः ( भद्रा श्रीरस्य इति ) [10]चन्दनः ( चन्दयति इति ण्यन्तात् ल्युट् ) ये चार नाम श्रीखण्ड चन्दन के हैं । जिनमें प्र० द्वि० पुं०, तृ० स्त्री०, च० पुं० नपुं० हैं ।

[11]तैलपर्णिकम् ( तिलपर्णे वृक्षभेदे जाता इत्यण् वृद्धौ ङीप्, कन् ऽह्रस्वश्च ) गोशीर्षम् ( गोः शीर्षमिव इति ) हरिचन्दनम्[12] ( हरेरिन्द्रस्य चन्दनम् इति ) ये तीन नाम क्रमशः सफेद

---

१. पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः । इतिमेदिनी ।

२. श्रीवासो वृकधूपे स्यात् पङ्कजे मधुसूदने । इति मेदिनी ।

३. वृकः स्यात् कुक्कुरेऽनेकधूपेऽपि सरलद्रवे । इति रभसः । ४. सरलद्रवःश्रीपिष्टो दधिक्षीरघृताह्वयः । इतिरभसः । ५. मृगनाभिर्मृगमदो मृगः कस्तूरिकापि च । इति माधवः । ६. कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः । इति मेदिनी ।

७. घनसारस्तु कर्पूरे दक्षिणावर्तपारदे । इति हैमः । ८. वेणुसारस्तु कर्पूरो चन्द्रभस्म हिमाह्वयम् । इति त्रिकाण्डशेषः ९. हस्तिजात्यन्तरे भद्री वाच्यवच्छ्रेष्ठसाधुनोः । इति विश्वः । १०. मालयस्तु स्याच्छ्रीखण्डो रौहिणश्च सः । इति त्रिकाण्डशेषः ११. तैलपर्णी मलयजे श्रीवासे सिल्हकेऽपि च । इति मेदिनी । १२. हरिचन्दनमस्त्री स्यात् त्रिदशानां महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि । इति मेदिनी ।

तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चाथ जातीकोशजातीफले समे ॥ १३२ ॥
कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।
गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥
चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ।
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ १३४ ॥
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।

---

चन्दन, कमल के समान गन्धवाले चन्दन, कपिल या पीले वर्ण वाले चन्दन के हैं। जिनमें प्र० द्वि० नपुं०, तृ० पुं० नपुं० हैं।

तिलपर्णी ( तिलस्येव पर्णान्यस्याः इति ङीष् ) [1]पत्राङ्गम् ( पत्रमेवाङ्गमस्य इत्यच् ) [2]रञ्जनम् ( रञ्जयति ण्यन्तात् युच् ) रक्तचन्दनम् ( रक्तं च तत् चन्दनं च इति ) [3]कुचन्दनम् ( निर्गन्धत्वात् कुत्सितं चन्दनम् इति ) ये पाँच नाम लालचन्दन के हैं। जिनमें १ म स्त्री०, २–५ नपुं० हैं।

जातीकोशम् ( जात्याः कोशः इति ) [4]जातीफलम् ( जात्याः फलम् इति ) ये दो नपुं० नाम जायफल के हैं ॥ १३२ ॥

कर्पूरादिभिः समभागैः—यक्षकर्दमः ( यक्षप्रियः कर्दमः इति ) यह एक पुं० नाम कपूर, अगर, कस्तूरी और कङ्कोल इन चारों को बराबर बराबर मिलाकर बनाये हुए लेप-विशेष का है।

गात्रानुलेपनी ( गात्रमनुलिप्यते यया इति ल्युट् ) [5]वर्त्तिः ( वर्त्यते इति ण्यन्तात् इः ) वर्णकम् ( वर्णं करोति इति ण्वुल् ) विलेपनम् ( विलिप्यतेऽनेन इति ल्युट् ) ये चार नाम लेप करने के लिये पीसे या घिसे हुए गन्ध द्रव-विशेष के हैं। जिनमें प्रथम द्वितीय स्त्री०, तृतीय चतुर्थ नपुं० हैं ॥ १३३ ॥

[6]चूर्णम् ( चूर्ण्यते इति घञ् ) वासयोगः ( वासे सुगन्धिकरणे योगा उपायाः इति ) ये दो नाम कपड़े को सुगन्धित करने योग्य गन्धद्रव के चूर्ण के हैं।

भावितम् ( भाव्यते स्म इति ण्यन्तात् क्त ) [7]वासितम् ( वास्यतेस्म इति क्तः ) ये दो त्रिलिङ्ग नाम केवड़ा या गुलाब आदि से सुगन्धित कपड़े आदि के हैं।

माङ्गल्यधूपादिभिर्वस्त्रादीनां ताम्बूलादीनां च यः संस्कारः तत्—अधिवासनम् ( अधिकं वास्यते इति ल्युट् ) यह एक नपुं० नाम गुलाब जल या सुगन्धित फूल आदि से पान, तिल, वस्त्र आदि को सुवासित करने का है।

[8]माल्यम् ( मल्यते इति ण्यत्, मालैव वा ष्यञ् ) [9]माला ( मां लाति इति कः ) स्रक् ( सृज्यते

---

१. पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने। इति मेदिनी। २. रञ्जनं रक्तचन्दने। इति मेदिनी।

३. कुचन्दनं च पत्राङ्गे रक्तचन्दने। इति विश्व-मेदिन्यौ। ४. फलं लाभे जातिकोषे बाणाग्रे फलकेऽपि च। इति रुद्रः। ५. वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः। गात्रानुलेपने दीपदशादीपेषु योषिति। इति मेदिनी। ६. चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु। इति मेदिनी। ७. वासितं भाविते रुते। इति मेदिनी। ८. माल्यं कुसुमतत्स्रजोः। इति मेदिनी। ९. माला तु पंक्तौ पुष्पादिदामनि। इति हैमः।

प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ॥ १३५ ॥
प्रालम्बमृजुलम्बि स्यात् कण्ठाद् वैकक्षिकं तु तत् ।
यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ॥ १३६ ॥
रचना स्यात्परिस्पन्द आभोगः परिपूर्णता ।
उपधानं तूपबर्हः शय्यायां शायनीयवत् ॥ १३७ ॥
शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।

---

सृजति सुखं वा इति ण्वुल्) ये तीन नाम शिरसे धारण की हुई मालामात्र के हैं। जिनमें प्र० नपुं० द्वि० तृ० स्त्री० हैं। यहां 'मूर्ध्नि' अविवक्षित है। क्योंकि अन्यत्र भी माला पहनी जाती है।

गर्भकः (गर्भ इव इति कन्।) यह एक पुं० नाम केश के बीच में लगायी जानेवाली माला का है।

शिखालम्बि=शिखातो लम्बमानम्—प्रभ्रष्टकम् ( प्रभ्रंशितुं प्रवृत्तम् इति क्तः, कन् च ) यह एक नपुं० नाम चोटी से लटकती हुई माला का है।

तदेव माल्यम् पुरो भागे ललाटपर्यन्तं न्यस्तम्—ललामकम् ( ललाममिव इति कन् ) यह एक नपुं० नाम ललाट पर धारण की हुई माला का है।

कण्ठादूर्ध्वं लम्बमानम्—प्रालम्बम् ( प्रालम्बते इति अच् ) यह एक नपुं० नाम गले में सीधी लटकती हुई माला का है।

यन्माल्यमुरसि तिर्यक् क्षिप्तं तत्—वैकक्षिकम् ( विशिष्टः कक्षोऽस्माद्विकक्षमुरः तत्र भवम् इत्यण् ) यह एक नपुं० नाम जनेऊ की तरह तिर्छी पहनी हुई माला का है।

शिखाक्षिप्तं माल्यम्—आपीडः ( आपीडयति इत्यच् ) शेखरः ( शिङ्कति इति बाहुलकादरः ) ये दो पुं० नाम शिखा में पहनी हुई माला के हैं।

रचना ( रचयतीति युच् ) [1]परिस्पन्दः ( परिस्पन्दनम् इति भावे घञ् ) ये दो नाम शिल्पादि-रचना के हैं जिनमें प्रथम स्त्री०, द्वितीय पुं० हैं।

[2]आभोगः ( आ समन्तात् भोजनम् इति भावे घञ् ) परिपूर्णता ( परितः पूर्यते स्म इति क्तः निष्ठानत्वञ्च, परिपूर्णस्य भावः इति तल् ) ये दो नाम सभी प्रकार से पूर्णता के हैं जिनमें प्रथम पुं० द्वितीय स्त्रीलिङ्ग है।

उपधानम् ( उपधीयते शिरोऽत्र इति अधिकरणे ल्युट् ) उपबर्हः ( उपबृंह्यतेऽनेन इति घञ् ) ये दो नाम तकिया के हैं जिनमें प्रथम नपुं०, द्वितीय पुं० हैं।

[3]शय्या ( शय्यतेऽत्र इति क्यप्, अयङि च ) शयनीयम् ( अनीयरि ) [4]शयनम् ( ल्युटि ) ये तीन नाम बिछावन के हैं, जिनमें प्रथम स्त्री० शेष दो नपुं० हैं।

मञ्चः ( मञ्चते इति अच् ) पर्यङ्कः ( परितोऽङ्क्यते इति घञ् ) [5]पल्यङ्कः ( लत्वम् वैकल्पिकम् )

---

१. परिस्यन्दः इति वा पाठः। २. आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि। इति विश्व-मेदिन्यौ। ३. शय्या स्याच्छयनीयेऽपि गुम्फनेऽपि च योषिति। इति मेदिनी। ४. शयने सुरते निद्राशय्ययोश्च नपुंसकम्। इति मेदिनी। ५. पल्यङ्को मञ्चपर्यङ्कवृषीपर्यस्तिकासु च। इति मेदिनी।

गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥ १३८ ॥
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ।
प्रसाधनी कङ्कतिका पिष्टतः पटवासकः ॥ १३९ ॥
दर्पणे मकुरादर्शौ व्यजनं तालवृन्तकम् ॥ १३९.१/२ ॥

---

खट्वा ( खट्यते काङ्क्ष्यते निद्रालुभिः इति क्वन् ) ये ४ नाम पलंग के हैं जिनमें १–३ पुं०, शेष स्त्री० हैं।

गेन्दुकः ( गे = गगने इन्दुरिव, गाते इति विच्, गा = गच्छन् इन्दुरिव इति कन् ) कन्दुकः ( कन्यते इति बाहुलकादुः कन् च ) ये दो पुं० नाम गेंद के हैं।

*दीपः ( दीप्यते अनेन इति कः ) प्रदीपः ( उपसर्गान्तरनिवृत्त्यर्थः प्रः ) ये दो पुं० नाम दीप के हैं।

[1]पीठम् ( पिठन्त्यत्रेति घञ्, दीर्घश्च। आसनम् ( आस्यतेऽत्रेति अधिकरणे ल्युट् ) ये दो नपुं० नाम आसन के हैं ॥ १३८ ॥

समुद्गकः ( समुद्गच्छतीति डः, कन् च ) सम्पुटकः ( सम्पुटयते इति वुन् ) ये दो पुं० नाम सम्पुट के हैं।

प्रतिग्राहः ( प्रतिगृह्णाति इति णः, वृद्धौ, पक्षे [2]अच् ) पतद्ग्रहः ( गृह्णातीति ग्रहः पततो ग्रहः ) ये दो पुं० नाम पीकदानी के हैं।

[3]प्रसाधनी ( प्रसाध्यतेऽनया इति ल्युट् ) [4]कङ्कतिका ( कङ्कते इति बाहुलकादतच्, गौरादिः स्वार्थे कन्, ह्रस्वश्च ) ये दो स्त्री० नाम कंघी के हैं।

पिष्टातः ( पिष्टमतति कर्मण्यण् ) पटवासकः ( पटो वास्यतेऽनेन इति घः कन् च ) ये दो पुं० नाम बुक्का के हैं ॥ १३९ ॥

[5]दर्पणः ( दर्पयति इति ण्यन्तात् ल्युः ) [6]मकुरः ( मंकते इति मण्डनार्थकमकिधातोः उरच्, नलोपश्च ! बाहुलकाद्धातोरुपधायाः पक्षे उकारः मुकुरोऽपि ) [7]आदर्शः ( आदृश्यते रूपमत्र इति घञ् ) ये तीन पुं० नाम दर्पण ( ऐना, शीशा ) के हैं।

व्यजनम् ( व्यजन्ति अनेन इति ल्युट् ) तालवृन्तकम् ( तालस्येव [8]वृन्तमस्य, ताले करतले वृन्तमिव बन्धनमस्य ) ये दो नपुं० नाम पंखा के हैं ॥ १३९.१/२ ॥

इति मनुष्यवर्गः

---

*दीपस्तु स्नेहाशः कज्जलध्वजः। १. विष्टरः पीठमस्त्रियाम्। इति त्रिकाण्डशेषः।

२. प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। योग्येभ्यो विधिवद्देये तद्गृहे च ग्रहान्तरे ॥ इति मेदिनी।

३. प्रसाधनी तु कङ्कत्यां सिद्धौ वेशे प्रसाधनम्। इति विश्वः। ४. कङ्कती तु प्रसाधनी, कङ्कतं तु प्रसाधनम्। इति अमरमाला।

५. आदर्शो दर्पणः प्रोक्तः। इति अमरमाला। 'किं तद्दर्पणमस्ति यत्र सकलम्' इति धर्मसेनप्रयोगात् क्लीबमपि। ६. मकुरो मुकुरोऽपि च। इति विश्वः। मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे। कुलालदण्डे। इति मेदिनी। ७. आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि। इति मेदिनी। ८. वृन्तं प्रसवबन्धे स्याद्घट-धाराकुचाग्रयोः। इति विश्वः।

# अथ ब्रह्मवर्गः

सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥
विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
राजवीजी राजवंश्यो वीज्यस्तु कुलसंभवः ॥ २ ॥

---

[१] संततिः ( संतन्यते इति क्तिन् ) [२]गोत्रम् ( गूयते इति ष्ट्रन् गुणौ ) [३]जननम् ( जन्यते इति कर्मणि ल्युट् ) [४]कुलम् ( कूयते इति वाहुलकाल्लक् ) [५]अभिजनः ( अभिजन्यते इति अञ् . णिलोपस्य स्थानिवत्त्वात्, जनिवध्योश्च इति निषेधाद्वा न वृद्धिः ) अन्वयः ( अन्वीयते इति अच् ) [६]वंशः ( उइयते इति घञ् नुम् च ) अन्ववायः ( अन्ववाय्यते इति घञ् ) [७]सन्तानः ( संतन्यते इति घञ् ) ये ९ नाम वंश ( कुल ) के हैं। जिनमें १ म स्त्री० २—४ न०, शेष ५ पुं० हैं।

[८]वर्ण ( वर्णयति इति अच् ) यह एक पुं० नाम ब्राह्मण, क्षत्रिय, वैश्य, शूद्र चारों वर्णों का वाचक है ॥ १ ॥

विप्रश्च क्षत्रियश्च विट् च शूद्रश्च इति ते, चत्वार एव वर्णाः चातुर्वर्ण्यपदेन व्यवह्रियन्ते तत्र— चातुर्वर्ण्यम् ( चत्वारो वर्णाः इति स्वार्थे ष्यञ् ) यह एक नपुं० नाम चारों वर्ण का है।

राजवीजी ( राज्ञो वीजमितुं शीलमस्येति णिनिः ) राजवंश्यः ) ( राजवंशे साधुः इति यत् ) ये दो पुं० नाम राजकुल में उत्पन्न व्यक्ति के हैं।

वीज्यः ( वीजमस्यास्ति इति यप् ) कुलसम्भवः ( कुले सम्भवति इति अच् ) ये २ पुं० नाम कुलमात्र में उत्पन्न व्यक्ति के हैं ॥ २ ॥

---

१. संततिः स्यात्पङ्क्तौ गोत्रे पारम्पर्ये च पुत्रपौत्राणाम्। इति मेदिनी।

२. गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः। संभावनीयबोधे च काननक्षेत्रवर्त्मसु। मेदिनी।

३. जननं वंशजन्मनोः। इति मेदिनी। ४. कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवनं च तनौ क्लीवं कण्टकार्यौषधौ कुली। इति मेदिनी। ५. भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे। कुलेऽपि च पुमान्। इति मेदिनी। ६. वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च। इति त्रिकमेदिन्यौ।

७. सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे। इति मेदिनी।

८. वर्णो द्विजादिशुक्लादियज्ञे गुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने ॥ इति मेदिनी।

माहाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ।
विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः ॥ ४ ॥
विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।

---

माहाकुलः ( महच्च तत् कुलं च इति, महाकुलस्यापत्यमिति अञ् ) [1]कुलीनः ( कुलस्यापत्यम् इति खः ) आर्यः ( अर्यते इति ण्यत् ) सभ्यः ( सभायां साधुः इति यः ) [2]सज्जनः ( संश्चासौ जनश्च ) [3]साधुः ( साध्नोति धर्मम् इत्युण् ) ये ६ पुं० नाम उत्तम कुल में उत्पन्न व्यक्ति के हैं।

ब्रह्मचारी ( ब्रह्म चरितुं शीलमस्येति णिनिः ) गृही ( गृहाः दाराः सन्त्यस्येति इनिः ) वानप्रस्थः ( वनप्रस्थे भवः इति अण् ) भिक्षुः ( भिक्षणशीलः इति उः ) ये चार पुं० नाम आश्रम शब्दवाच्य हैं, अर्थात् आश्रम ( पुं० न० ) शब्द से ब्रह्मचर्याश्रमः, गृहस्थाश्रमः, वानप्रस्थाश्रमः, संन्यासाश्रमः, इन ४ आश्रमों का ग्रहण होता है ॥ ३ ॥

[4]आश्रमः ( आश्राम्यन्ति अत्र अनेन वा इति घञ् वृद्ध्यभावश्च ) । [5]द्विजातिः ( द्वे जाती जन्मनी यस्य ) [6]अग्रजन्मा ( अग्रे आदौ जन्मास्य ) भूदेवः ( भुवो भुवि वा देव इव ) [7]वाडवः ( वडवायां जातः इति अण् ) विप्रः ( विप्राति विशेषेण पूर्तिं करोति इति कः ) ब्राह्मणः ( ब्रह्मण अपत्यमिति अण्, अन् इति टिलोपो न ) ये ८ पुं० नाम ब्राह्मण के हैं।

[8]षट्कर्मा ( षट् कर्माणि अस्य ) यह एक पुं० नाम षट्कर्मा ब्राह्मण का है। यज्ञ करना, यज्ञ कराना, पढ़ना, पढ़ाना, दान देना और दान लेना ये ६ कर्म हैं।

[9]विद्वान् ( वेत्ति इति शतृ ) विपश्चित् ( विप्रकृष्टं निश्चिनोति इति पृषोदरादिः ) दोषज्ञः ( दोषं जानाति इति कः ) [10]सन् ( अस्ति इति शतृ, अलोपः ) सुधी (सुष्ठु ध्यायति इति क्विप्, सम्प्रसारणञ्च; [11]कोविदः ( कौति धर्मादि इति क्विप् गुणः कोवेदस्य विदः ) [12]बुधः ( बुध्यते इति कः )

---

१. कौलेयः सारमेये कुलीने। इति मेदिनी। कुल्यं स्यात्कीकसेऽप्यष्टद्रोणीसूर्यामिषेषु च। कुल्या पयः प्रणाल्याञ्च नद्यां जीवन्तिकौषधौ। कुलाद्गते कुलहिते त्रिषु मान्ये पुनः पुमान्। इति मेदिनी।

२. सज्जनं तु भवेत्घट्टीवमुपरक्षणघट्टयोः। वाच्यलिङ्गं कुलीने स्यात् कल्पनायां च योषिति ॥ इति मेदिनी। ३. साधुर्वाधु(र्षि)षिके चारौ सज्जने चाभिधेयवत्। इति मेदिनी।

४. आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे। अस्त्रियाम्। इति मेदिनी।

५. मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्। इति मनुः। द्विजातिर्विप्राण्डजयोश्च पुंलिङ्गः। इति मेदिनी। ६. अग्रजन्मा द्विजश्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः। इति विश्वः।

७. वडवाकुम्भदास्योः स्त्रीविशेषे द्विजस्त्रियाम्। इति रभसः। वडवाऽश्वाकुम्भदास्योः स्त्रीविशेषे द्विजस्त्रियाम्। इति विश्वः। ८. इज्याध्ययनदानानि याजनाध्यापने तथा। प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते। ९. विद्वान् ज्ञानिनि धीरे च विद्वानध्यात्मवेदके। इति धरणिः। विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्। इति विश्वः। १०. सन् साधौ धीरशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्व्युभयोः स्त्रियाम्। इति मेदिनी। ११. विदा ज्ञाने च निर्दिष्टा मनीषायां च योषिति। इति मेदिनी। १२. बुधः

धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ॥ ५ ॥
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।
दूरदर्शी दीर्घदर्शी श्रोत्रियच्छान्दसौ समौ ॥ ६ ॥
'मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि ।
वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि ॥ प्र० ॥
नैयायिकस्त्वक्षपादः स्यात् स्याद्वादिक आर्हकः ।
चार्वाकलौकायतिकौ सत्कार्ये साङ्ख्यकापिलौ' ॥ प्र० ॥
उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद्गुरुः ।

---

धीरः (धियं राति इति कः) मनीषी (मनीषाऽस्यास्ति इति इनिः) ज्ञः (जानाति इति कः) [1]प्राज्ञः(प्रज्ञाः-ऽस्यास्ति इति कः) संख्यावान् ( संख्या विचारणास्त्यस्येति । मतुप् ) [2]पण्डितः ( पण्ड्यतेऽनया इत्यः, पण्डा जाताऽस्येति इतच् ) [3]कविः ( कवते कौति वा इति इः ) [4]धीमान् ( धीः अस्यास्ति इति मतुप् ) [5]सूरिः (सूते सूयते वा इति क्रिः ) [6]कृती ( प्रशस्तं कृतं कर्मास्य इति इनिः ) [7]कृष्टिः ( कर्षति इति क्तिच् ) लब्धवर्णः ( लब्धः वर्णः स्तुतिर्येन ) विचक्षणः ( विचष्टे इति युच् ) दूरदर्शी ( दूरान् दूराद् वा पश्यति इति णिनिः ) दीर्घदर्शी ( दीर्घान् पश्यति इति णिनिः ) ये २२ पुं० नाम विद्वान् के हैं ।

श्रोत्रियः ( छन्दोऽधीते इति निपातनात् साधुः ) छान्दसः ( छन्दोऽधीते इति श्रोत्रभावाभावपक्षे अण् ) ये २ पुं० नाम वेद पढ़ने वाले ब्राह्मण के हैं ॥ ६ ॥

[8]उपाध्यायः ( उपेत्याधीयतेऽस्मात् इति घञ् ) अध्यापकः ( अध्यापयति इति ण्वुल् ) ये २ पुं० नाम वेद के एक देश को या वेदाङ्गों को जीविका के लिए पढ़ाने वाले के हैं ।

सोऽध्यापकः निषेको गर्भाधानमादिर्यस्य सीमन्तोन्नयनादेस्तस्य कर्ता इति सम्बन्धः—[9]गुरुः ( गृणाति धर्मादि इति उः ) यह १ पुं० नाम निषेकादि संस्कारों को सविधि करके अन्नादि से पालन करते हुए पढ़ाने वाले का है ।

---

साम्ये च पण्डिते । इति मेदिनी । १. प्राज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति । इति मेदिनी । २. पण्डः षण्डे धियि स्त्री स्यात् । इति मेदिनी । ३. कविः वाल्मीकिकाव्ययोः । सूरौ काव्य-करे पुंसि स्यात् खलीने तु योषिति ॥ इति मेदिनी । ४. धीमान् पण्डिते च बृहस्पतौ । इति मेदिनी ।

५. दूरदृक् कोविदः सूरिः । इति रभसः । ६. कृती स्यात् पण्डिते योग्ये । इति हैमः ।

७. कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान् । इति मेदिनी ।

८. एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥ इति मनुः ।
९. गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि ॥ इति मेदिनी ।
मनुश्च–निषेकादीनि कर्माणि यः करोति यथाविधि सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥

मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च स सोमवति दीक्षितः ।
इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥ ८ ॥
स गीष्पतीष्ट्या स्थपतिः सोमपीती तु सोमपः ।
सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।

---

मन्त्रव्याख्याकृत् ( मन्त्रस्य वेदस्य व्याख्यानं करोति इति क्विप् ) [१]आचार्यः ( आचर्यते इति ण्यत् ) ये २ पुं० नाम मन्त्रों की व्याख्या करने वाले या शिष्य का यज्ञोपवीत संस्कार कर कल्प और रहस्य के सहित वेदों को पढ़ाने वाले ब्राह्मण के हैं ।

आदेष्टा = आदिशत्यृत्विजः, अध्वरे = यागे स्वेष्टसंपादनाय प्रेरयति इति तृच् , इति सम्बन्धः—व्रती ( व्रतं भोजनादिनियमोऽस्यास्ति इति इनिः ) यष्टा ( यजते इति तृच् ) याजमानः (यजते इति शानच् ) ये ३ पुं० नाम यजमान अर्थात् यज्ञ करने वाले के हैं ।

स व्रती सोमपानवति यागे आदेष्टा सन् इति सम्बन्धः—दीक्षितः ( दीक्षा जाताऽस्येति इतच् ) यह १ पुं० नाम यज्ञ में ऋत्विजों को आदेश देने वाले अथवा सोमयाजी यजमान का है ॥ ७. ॥

इज्याशीलः ( इज्या शीलति इति णः ) यायजूकः ( पुनः पुनः भृशं वा यजते इति यङ्, ऊकश्च ) २ पुं० नाम वार वार यज्ञ करने वाले के हैं ।

विधिनेष्टवान् तु यज्वा इत्यन्वयः यज्वा ( यजते स्म इति ङ्वनिप् ) यह १ पुं० नाम विधिपूर्वक यज्ञ करने वाले का है ॥ ८ ॥

स यज्वा बृहस्पतिसवनामकयागेनेष्टवान् सन् इत्यन्वयः—स्थपतिः[२] ( स्थानम् स्थः 'सुपिस्थः' इत्यत्र 'स्थः' योगविभागात् कः पतिः इति ) यह १ पुं० नाम बृहस्पति नामक यज्ञ करने वाले का है ।

सोमपीती ( सोमस्य पीतम् , सोमपीतमस्यास्ति इति इनिः ) सोमपः ( सोमं पिबति इति कः ) ये २ पुं० नाम सोमयज्ञ करने के हैं ।

सर्ववेदाः ( सर्वस्वं दक्षिणा यत्र विश्वजिदादौ सः येन कृतः । सर्वं विन्दति इति असुन् ) यह १ पुं नाम सर्वस्वदक्षिणा वाला विश्वजिदादि यज्ञ का है ॥ ९ ॥

[३]अनूचानः ( अन्ववोचत् इति निपातनात् ) यह १ पुं० नाम व्याकरण आदि ६ अङ्गों के सहित वेद को पढ़ने वाले का है । यः गुरोः शिक्षाद्यङ्गषट्कोपेते इति साङ्गे, प्रोच्यते इति ल्युट् प्रवचनः वेदः, तत्र अधीतमनेन इति इनिः अधीती—स अनूचानः इति अन्वयः ।

---

१. उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । साङ्गं च स रहस्यं च तमाचार्यं प्रचक्षते ॥ इति मनुः ।

३. स्थपतिः कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे नासत्तमे त्रिषु । इति मेदिनी । २. अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे । इति विश्वः ।

लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥ १० ॥
छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ।
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् ।
पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥
उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः ।

---

समावृत्तः ( समावर्तते स्म इति क्तः ) यह १ पुं० नाम गुरु की आज्ञा से गृहस्थाश्रम में रहने के लिए गुरुकुल से लौटे हुए ब्रह्मचारी का है। गुरोः सकाशाल्लब्धाऽनुज्ञा येन सः, इति सम्बन्धः।

सुत्वा ( सुतवान् इति ङ्वनिप् तुक् च ) यह १ पुं नाम यज्ञ के अन्त में अवभृथ स्नान किए हुए का है। अभिषवे=अवभृथस्नाने कृते इत्यन्वयः ॥ १० ॥

छात्रः ( गुरुदोषच्छादनं छात्रम्, तच्छीलमस्येति णः ) [1]अन्तेवासी ( अन्ते समीपे वस्तुं शीलमस्येति णिनिः, सप्तम्या अलुक् च ) शिष्यः ( शिष्यते इति क्यप् इत्वश्च ) ये ३ पुं० नाम छात्र के हैं।

शैक्षाः ( शिक्षामधीयते इत्यण् ) प्राथमकल्पिकाः[2]( प्रथमकल्पः=आद्यारम्भः प्रयोजनं येषां ते इति ठक् ) ये २ पुं० नाम अध्ययन को प्रथम आरम्भ किए हुए ब्रह्मचारी के हैं।

सब्रह्मचारी ( ब्रह्म=वेदः तदध्ययनव्रतमप्युपचाराद् ब्रह्म। एकस्मिन् ब्रह्मणि व्रताचरणम् येषां ते एकब्रह्मव्रताचाराः मिथः=परस्परं सब्रह्मचारिणः=समानं ब्रह्म चरन्ति इति णिनिः समानस्य सभावः ) यह १ पुं० नाम आपस में समान वेद, समान आचरण वाले ब्रह्मचारियों अर्थात् समान शाखा पढ़ने वालों का है ॥ ११ ॥

सतीर्थ्याः ( समाने तीर्थे वसति इति यत् समानस्य सभावः ) एकगुरवः ( एकः गुरुः येषां ते एकगुरवः ) ये २ पुं० नाम एक गुरु से पढ़ने वाले अर्थात् सहाध्यायी के हैं।

अग्निं चितवान् इत्यन्वयः। अग्निचित् ( अग्निमचैषीत् इति क्विप् तुक् च ) यह १ पुं० नाम अग्निहोत्री ( अग्न्युपासक ) का है।

ऐतिह्यम् ( इति ह, इति निपातसमुदायः तस्मात् उपदेशपारम्पर्ये ष्यः ) इति ह ( इति=एवं ह=किल इति निपातसमुदायः ) ये दो नाम अव्यय हैं जो परम्परया प्राप्त उपदेश अर्थ को कहते हैं। पारम्पर्योपदेशे=पारम्पर्यस्यासावुपदेशश्चेति तस्मिन्। परम्परया आगतः इत्यण् ष्यञ् च।

उपज्ञा ( उपज्ञानम् इति आदन्तात् सोपसर्गात् ज्ञाधातोः अङ् ) यह १ स्त्री० नाम गुरूपदेश के बिना उत्पन्न सर्वप्रथम ज्ञान का है जैसे—बिना गुरूपदेश के श्लोक निर्माण करने का ज्ञान वाल्मीकि को हुआ था।

[3]उपक्रमः ( उप=प्रथमं क्रमणम् इति घञ् वृद्धिनिषेधश्च ) यह १ पुं० नाम गुरु आदि से ज्ञान प्राप्त कर कार्य आरम्भ करने का है।

---

१. अन्तेवासी भवेच्छिष्ये चण्डाले प्रान्तगेऽपि च। इति विश्वः। २. कल्पः शास्त्रे विधौ न्याये। इति मेदिनी। ३. उपक्रमस्तूपधायां ज्ञात्वारम्भे च विक्रमे। चिकित्सायाम्। इति मेदिनी।

यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥
समज्या परिषद्गोष्ठी सभासमितिसंसदः ।
अस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥

---

[1]यज्ञः ( इज्यते अनेनेति नङ् ) [2]सवः ( सूयते सोमोऽत्रेति अप् ) [3]अध्वरः ( न ध्वरति इति अच् यद्वा अध्वानं राति इति आदन्तादनुपसर्गादिति कः ) यागः ( इज्यते अनेनेति घञ् ) सप्ततन्तुः ( सप्तभिः छन्दोभिः अग्निजिह्वाभिर्वा तन्यते इति तुन् ) मखः ( मखन्ति देवाः अत्रेति घन् ) [4]क्रतुः ( करोति क्रियते वा क्रतुः ) ये ७ पुं० नाम यज्ञ के हैं ॥ १३ ॥

[5]पाठः ( पठनं पाठनं वा घञ् ) यह १ पुं० नाम वेदादि पाठ करने का है। इसे ब्रह्मयज्ञ कहते हैं। होमः ( हवनमिति मन् ) यह १ पुं० नाम हवन करने का है।

अतिथीनाम्–सपर्या ( अतिथीनाम् = अदृष्टपूर्वाणां गृहमागतानाम् सपर्यणम् इति यगन्तात् अः ) यह १ स्त्री० नाम अन्न जलपान इत्यादि देकर अतिथियों के सत्कार का है। इसे नृयज्ञ कहते हैं।

तर्पणम् ( तृप्यते इति भावे ल्युट् ) यह १ न० नाम पिण्डदान ( श्राद्धादि ) से पितरों को सन्तुष्ट करने का है, इसे पितृयज्ञ कहते हैं।

[6]बलिः ( बलनम् इति इन् ) यह १ पुं० नाम बलि वैश्वदेव अर्थात् काकादि को बलि देने का है। इसे भूतयज्ञ कहते हैं। महान्तश्च ते यज्ञाश्च। ब्रह्मयज्ञ आदिर्येषां तानि, [7]ब्रह्मयज्ञादीनि नामानि येषां ते। ये ५ महायज्ञ कहे जाते हैं ॥ १४ ॥

समज्या ( समजन्त्यस्याम् इति क्यप् वीभावाभावश्च ) परिषत् ( परितः सीदन्ति अस्यामिति क्विप् षत्वं च ) [8]गोष्ठी ( गावोऽनेकाः वाचरितिष्ठन्त्यस्याम् इति कः षत्वं गौरा० ) [9]सभा ( समाना भान्त्यस्याम् इति अङ् समावश्च ) [10]समितिः ( सह विद्यमाना मिलितैर्वा मितिः प्रमाऽस्याम् इति ) संसत् ( संसीदन्ति अस्यामिति क्विप् ) आस्थानी ( आतिष्ठन्त्यस्याम् इति ल्युट् ङीप् च ) आस्थानम् ( आतिष्ठन्त्यस्मिन्निति ल्युट् ) सदः ( सीदन्त्यस्याम् इति असुन् ) ये ९ नाम सभा के हैं। जिनमें १–७ नाम स्त्री, ८ वाँ न० और 'सदः' स्त्री०, न० दोनों हैं ॥ १५ ॥

---

१. यज्ञः स्यादात्मनि मखे नारायणहुताशयोः। इति हैमः।

२. सवो यज्ञे च संधाने। इति मेदिनी। ३. अध्वरः सावधाने स्याद्वसुभेदे क्रतौ पुमान्। इति मेदिनी। ४. क्रतुः यज्ञे मुनौ पुंसि। इति मेदिनी।

५. पाठश्च पठने ख्यातो विद्धतर्ण्यां तु योषिति। इति मेदिनी। ६. बलिर्दैत्योपहारयोः। करे चामरदण्डे च गृहदारुस्कंधांशयोः। त्वक्संकोचे गन्धके च। इति हैमः। ७. अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ इति मनुः। ८. गोष्ठी सभासंलापयोः स्त्रियाम्। इति मेदिनी। ९. सभा सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि। इति मेदिनी।

१०. समितिः संपराये स्यात् सभायां संगमेऽपि च। इति मेदिनी।

प्राग्वंश प्राग्घविर्गेहात् सदस्या विधिदर्शिनः ।
सभासदः सभास्तारा: सभ्याः सामाजिकाश्च ते ॥ १६ ॥
अध्वर्यूद्गातृहोतारो यजुः सामर्ग्विदः क्रमात् ।
आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥
वेदिः परिष्कृता भूमिः समे स्थण्डिलचत्वरे ।
चषाली यूपकटकः कुम्बा सुगहना वृतिः ॥ १८ ॥
यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।

प्राग्वंशः ( प्राञ्चति इति क्विन् प्राग्, प्राग् वंशाऽत्रेति ) यह १ पुं० नाम हवनशाला के पूर्व तरफ यजमान को बैठने के लिए बनाए हुए स्थान का है।

सदस्यः ( सदसि साधुः इति यत् ) यह १ पुं० नाम यज्ञ में न्यूनाधिक विधि को देखने वाले ऋत्विक् का है।

सभासद् ( सभायां सीदति इति क्विप् ) सभास्तारः ( सभां स्तृणाति इति अण् ) सभ्यः ( सभायां साधुः इति यत् ) सामाजिकः ( समाजं समवयति रक्षति वेति ठक् ) ये ४ पुं० नाम सभासद के हैं।

अध्वर्युः ( अध्वरमिच्छति इति क्यच् अन्त्यलोप उश्च ) उद्गाता ( उद्गायति सामेति तृन् ) होता ( जुहोति इति 'नप्तृनेष्ट्' इत्यादिना साधुः ) ये ३ पुं० नाम यजुर्वेद, सामवेद, ऋग्वेद, जानने वालों का क्रमसे एक-एक है।

आग्नीध्रः ( अग्नीनिन्धे इति क्विप्, नलोपः, अग्नीत् = ऋत्विक् अग्नीधः स्थानं तात्स्थ्यात् सोपि रणि वृद्धौ ) ऋत्विक् ( धनैर्हेतुभिः वरणैः करणैर्वा व्रियते इति ण्यत् वार्यः, ऋतौ यजति इति क्विन्नन्तः 'ऋत्विक्' इत्यादिना साधुः ) [1]याजकः ( यजन्ति इति ण्वुल् ) ये ३ पुं० नाम यज्ञ कराने वाले ब्राह्मणों के हैं। आग्नीध्र आद्यो येषां ब्रह्मोद्गातृहोत्रध्वर्यु ब्राह्मणाच्छंसि अच्छावाक् नेष्ट्रादीनां षोडशानाम्।

[2]वेदिः ( विद्यते शोधनेन ज्ञायते इतीन् ) यह १ स्त्री० नाम यज्ञ के लिए साफ की हुई भूमि का है।

स्थण्डिलम् ( स्थलत्यस्मिन् इति मिथिलादयश्च इति साधुः ) [3]चत्वरम् ( चतन्त्यस्मिन्निति ष्वरच् ) ये २ न० नाम यज्ञ के लिए साफ किये हुए स्थान विशेष के हैं।

चषालः ( चषति इति चषेरालः निपातनात् साधुः ) यूपकटकः ( यूपस्याग्रे कृतः कटकाकारः ) ये० २ पुं नाम यज्ञस्तम्भ के ऊपर गोल बनाये हुए काष्ठविशेष के हैं।

कुम्बा ( कुम्ब्यते अनया इति अङ् ) यह १ स्त्री० नाम चाण्डालादि यज्ञ न देखे इसलिये यज्ञभूमि के चारों तरफ बनाये हुए घेरे का है ॥ १८ ॥

यूपाग्रम् ( यूपस्याग्रम् ) तर्म ( तरति इति मनिन् ) ये २ न० नाम यज्ञस्तम्भ के ऊपरी भाग के हैं।

[4]अरणिः ( निर्मथ्यते इति ण्यत् निर्मन्थ्यं च तद् दारु च तस्मिन्, ऋच्छति इति अनिः ) यह

---

१. याजकस्तु गजे राज्ञो याज्ञिकेऽपि। इति मेदिनी। २. वेदिः स्यात्पण्डिते पुमान्। स्त्रियामङ्गुलिमुद्रायां स्यात् परिष्कृतभूतले। इति मेदिनी। ३. चत्वरं स्थण्डिलेऽङ्गणे। इति मेदिनी।
४. अरणिः वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि। इति मेदिनी।

दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः ।
समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥
यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।
तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥
ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।
गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान् ॥ २२ ॥

---

१ पुं०, स्त्री० नाम जिस काष्ठ को परस्पर रगड़कर यज्ञ के लिए आग निकाली जाय उस काष्ठविशेष का है ।

दक्षिणाग्निः ( दक्षिणोऽग्निः इति समासः ) गार्हपत्यः ( गृहपतिना संयुक्तः इति ञ्यः ) आहवनीयः ( आहूयते प्रणीयते प्रक्षिप्यते वेति हविरत्र इति अनीयर् ) ये ३ पुं० नाम अग्नि विशेष के हैं ॥ १९ ॥

[1] त्रेता ( त्रित्वमितेति पृषोदरादित्वात् साधुः ) यह १ स्त्री० नाम तीनों अग्नियों के समुदाय का है ।

प्रणीतः ( प्रकर्षं नीतः ) यह १ पुं० नाम मन्त्र से संस्कृत अग्नि का है ।

अग्नौ प्रयोगिण.–समूह्यः ( समूह्यते इति निपातनात् साधुः ) परिचाय्यः ( परिचीयते इति निपातनात् साधुः ) उपचाय्यः ( उपचीयते इति निपातनात् साधुः ) ये ३ पुं० नाम स्थान विशेष की अग्नि के हैं ॥ २० ॥

आनाय्यः ( आनीयते इति निपातनात् साधुः ) यह १ पुं० नाम गार्हपत्याग्नि से लाकर दक्षिणाग्नि से संस्कृत अग्नि का है ।

अग्नायी ( अग्नेः स्त्री इत्यैङीष् च ) स्वाहा ( सुष्ठु आहूयन्ते देवाः अनया इति डः ) हुतभुक्प्रिया ( हुतभुजः प्रिया ) ये ३ स्त्री० नाम अग्नि की स्त्री स्वाहा के हैं ॥ २१ ॥

सामिधेनी ( समिधामाधेनी 'समिधामाधाने' इति षेण्यण्, ङीष् यलोपश्च ) धाय्या ( धीयतेऽग्निरनया इति निपातनात् साधुः ) ये २ स्त्री० नाम अग्नि में लकड़ी छोड़कर जलाने में प्रयोग किये जाने वाले मन्त्र के हैं ।

[2] गायत्री ( गायन्तं त्रायते इति कः ङीष्, छन्दः-चन्दते इति आदेः छ' असुन् च ) यह १ स्त्री० नाम गायत्री इत्यादि छन्द का है ।

पचनं पाकः हव्यस्य पाकः तस्मिन्— [3] चरुः ( चर्यते इति उः ) वह १ पुं० नाम अग्नि में हवन किये जाने वाले अन्न का है ॥ २२ ॥

---

१. त्रेता युगेऽग्नित्रये च । इति हैमः ।

२. गायत्री त्रिपदा देवी छन्दोभित्खदिरेषु च । इति मेदिनी । षडक्षरपदा गायत्री । प्रमुखपदेन— उष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वरी इत्यादि एकाक्षरवृद्ध्या बोध्यम् । प्रमुखः प्रथमे चोमे प्रधाने च प्रकीर्तिते । ३. चरुर्भाण्डे च हव्यान्ने । इति विश्वप्रकाशः । अथ चरुः पुमान्हव्यान्नभाण्डयोः । इति मेदिनी ।

आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥
पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम् ।
हव्यकव्ये दैवपैत्रे अन्ने पात्रं स्रुवादिकम् ॥ २४ ॥
ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।
उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥

---

शृते क्वथिते तप्ते च पयसि दध्नः योजनात् या स्यात् सा—इति सम्बन्धः आमिक्षा ( आमिष्यते इति बाहुलकात् सक्, पृषो० ) यह १ स्त्री० नाम उष्ण दूध में दही छोड़ने पर उत्पन्न विकार विशेष या छाछ का है ।

मृगचर्मणा यत् रचितं व्यजनं तत्—धवित्रम् ( धूयतेऽनेनेतीत्रः, कुटादित्वेन धुवतेः ङित्वाद्गुणाभावादुवङि धुवित्रम् वा ) यह १ न० यज्ञ में आग के वास्ते मृगचर्म के बने पंखे का हैं ॥ २३ ॥

पृषदाज्यम् ( पर्षति इति पृषत्, पृषच्च तदाज्यं च, सदध्याज्ये दध्ना सहिते घृते इति सम्बन्धः ) यह १ न० नाम दधिमिश्रित घी का है ।

परमान्नम् ( परमं च तदन्नं चेति समासः ) [१]पायसम् ( पयसि संस्कृतम् इति अण् ) ये २ न० नाम खीर के हैं ।

हव्यम् ( हूयन्ते देवाः येनेति यत् ) यह १ न० नाम देवताओं के उद्देश्य से हवन द्वारा दिए जाने वाले अन्न का है ।

पितॄणामिदम् पैत्रं—कव्यम् ( कूयते पितृभ्यः इति यत् ) यह १ न० नाम ब्राह्मण भोजनादि द्वारा पितरों के उद्देश्य से दिये जाने वाले अन्न का है ।

[२]पात्रम् ( पाति पिबत्यनेनेति ष्ट्रन् ) यह १ न० नाम स्रुवा, चमस, प्रोक्षणीं, प्रणीता, सूर्प, व्यजन, उलूखल, मुसल, ग्रह, स्फ्य इत्यादि बर्तनों का है ॥ २४ ॥

[३]ध्रुवा ( ध्रुवति इति कः ) उपभृत् ( उपबिभर्ति इति क्विप् ) जुहूः ( जुहोति इति क्विप् दीर्घश्च ) ये ३ स्त्री० नाम स्रुवा के भेदों के हैं ।

[४]स्रुवः ( स्रवति इति कः ) स्रुक् ( स्रवति इति चिक् ) ये २ नाम स्रुव के हैं जिनमें १ म पुं० २ य स्त्री० है ।

उपाकृतः ( उपाक्रियते स्म इति क्तः ) यह १ पुं० नाम वेद मन्त्र से अभिमन्त्रित कर यज्ञ में मारे

---

१. पायसः श्रीवासे च पायसं परमान्नके । इति हैमः । पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः इति मेदिनी । २. पात्रं तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे च । इति मेदिनी ।

३. ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे । वसुयोगभिदोः पुंसि क्लीबं निश्चिततर्कयोः ॥ स्त्री मूर्वाढ्योः शालपर्ण्यां गीतीस्रुग्भेदयोस्त्रिषु । संतते शाश्वते च । इति मेदिनी । ध्रुवा वटपत्राकृतिः उपभृच्चक्राकृतिः । जुहूरर्धचन्द्राकृतिः । ४. स्रुवः पुमान् । स्रुवो द्वयोर्होमपात्रे शल्लकीमूर्वयोः स्त्रियाम् इति मेदिनी ।

परम्पराकं शमनं प्रोक्षणं च अधार्थकम् ।
वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥
सांनाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् ।
दीक्षान्तोऽवभृथो यज्ञः तत्कर्मार्हं तु यज्ञियम् ॥ २७ ॥
त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत् ।

---

जाने वाले पशु का है । असौ पशुः यः क्रतौ = यज्ञे अभिमन्त्र्य = अभितो मन्त्रयित्वा हतः = हन्तुमारब्धः इति सम्बन्धः ॥ २५ ॥

परम्पराकम् ( अकनम् आकः, भावे घञ्, परम्परायाः आकम् इति ) [1]शमनम् शम्यते शमु उपशमे इति भावे ल्युट् ) प्रोक्षणम् ( प्रकृष्टमुक्षणम् इति ल्युट् ) ये ३ न० नाम यज्ञ में पशु मारने के हैं । वधो हिंसाऽर्थोऽस्येति सम्बन्धः ।

[2]प्रमीतः ( प्रमीयते स्मेति क्तः ) [3]उपसम्पन्नः ( उपसम्पद्यते स्मेति क्तः ) प्रोक्षितः ( प्रोक्ष्यते स्मेति क्तः ) ये ३ त्री० नाम यज्ञ में मारे हुये पशु के हैं ॥ २६ ॥

सांनाय्यम् ( संनीयते इति निपातनात् साधुः ) हविः ( हूयते इति इसिः ) ये २ न० नाम हवन करने योग्य पदार्थ के हैं । सांनाय्यं = हविर्विशेषः ।

अग्नौ—हुतम् ( हुतं = प्रक्षिप्तम् ) वषट्कृतम् ( वषट्मन्त्रेण कृतं प्रक्षिप्तम् ) ये २ त्रि० नाम अग्नि में हवन किये हुए पदार्थ के हैं । अग्नौ वषट्मन्त्रेण यत् कृतम् = प्रक्षिप्तम् तत् हुतम् त्रिषु इति सम्बन्धः । वषडिति मन्त्रोपलक्षणम् ।

अवभृथः ( अवभ्रियतेऽनेनेति क्यन् ) यह १ पुं० नाम यज्ञ के अन्त में यज्ञ समाप्ति सूचक स्नान का है । दीक्षायाः अन्तः प्रधानकर्मसमाप्तौ क्रियमाणो यज्ञः इष्टिविशेषः तस्य एकं नाम इति सम्बन्धः ।

तत्कर्मार्हम्—यज्ञियम् ( यज्ञमर्हति इति घः ) यह १ त्रि० नाम यज्ञ के योग्य ब्राह्मण तथा पदार्थ का है ॥ २७ ॥

[4]इष्टम् ( यजनम् इति क्तः ) यह १ न० नाम यज्ञ कार्य और दान देने का है । क्रतुः = यज्ञः, कर्म च = दानादि तदिष्टशब्दवाच्यम् ।

[5]पूर्तम् ( पूर्यते क्तः ) यह न० नाम बावली, कूआँ, देवालय औषधालयादि बनवाने का है खातं पुष्करणीखननमादिर्यस्य देवालयारामादि निर्माणस्य । खातादि च तत्कर्म च = क्रिया तस्मिन्निति सम्बन्धः ।

---

१. शमनं शान्तिवधयोः शमनः श्राद्धदैवते । इति विश्वमेदिन्यौ ।

२. प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च । इति मेदिनी ।

३. उपसम्पन्नमुन्निष्टं निहते च सुसंस्कृते । इति विश्वमेदिन्यौ ।

४. इष्टं यागे च दाने च वाञ्छितेऽपि प्रयुज्यते । इत्यजयः । एकाग्निकर्महवनं त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥ इति मनुः इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि । इति मेदिनी । ५. पुष्करिण्यः सभा वापी देवतायतनानि च । आरामाश्च विशेषेण पूर्तं कर्म विनिर्दिशेत् ॥ इति स्मृतिः । पूर्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि ।

अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥
त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ३० ॥
पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः ।
अन्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥ ३१ ॥

---

[1]अमृतम् ( अमृतमिव ) विघसः ( विशिष्टैरद्यते इति अप् घस् लादेशश्च ) ये २ पुं० नाम यज्ञ तथा ब्राह्मणादि के भोजन से बचे हुए अन्न का है जिनमें प्रथम नपुं० २ य पुं० हैं ।

[2]त्यागः ( त्यजनमिति घञ् ; विहापितम् ( विहायनम् इति क्तः ) [3]दानम् ( दितिति ल्युट् ) उत्सर्जनम् ( उत्सर्जष्टम् इति । उत्पूर्वकात् सृजेः ल्युट् ) [4]विसर्जनम् ( विसृष्ट् ल्युट् ) विश्राणनम् ( विश्राणितम् इति ल्युट् ) वितरणम् ( वितीर्णमृइति ) [5]स्पर्शनम् ( स्पृष्टमिति ल्युट् ) [6]प्रतिपादम् ( प्रतिपादितम् ) प्रादेशनम् ( प्रादिष्टम् ) निर्वपणम् ( निरुप्तम् ) ( अपवर्जितम् वृजी वर्जने ) [7]अंहति ( हन्ति दुरितमतया इत्यतिः अंहादेशश्च ) ये १३ नाम दान के हैं, जिनमें १ म पुं०, २–१२ नपुं० और १३ वाँ स्त्रलिंग० हैं ।

और्ध्वदैहिम् ( देहादूर्ध्वम् ऊर्ध्वदेहः ऊर्ध्वदेहे भवम् इति ठञ् उभयपदवृद्धिः ) यह १ त्रि० नाम मरे हुए के उद्देश्य से एकादशाह तक दिए हुए पिण्डदानादि का है । मृताय इदम् । अर्थेन नित्यसमासः । तच्च तदहश्च इति टच् । तदहे = प्रेतदिने यद्दानं तत् इति सम्बन्धः ॥ ३० ॥

पितृदानम्—निवापः ( न्युप्यते निवपनं वेति घञ् ) यह १ पुं० नाम सपिण्डी के बाद पितरों के उद्देश्य से दिये हुए दान का है ।

श्राद्धम् ( श्रद्धाऽत्रास्ति इति णः तत्कर्म = तेषां पितॄणां कर्म । शास्त्रतः = शास्त्रविधानेन ) यह १ न० नाम पितरों के उद्देश्य से पिण्डदानादि कार्य का है ।

[8]अन्वाहार्यम् ( अनु आह्रियते इति ण्यत् ) मासिकः ( मासे भवम् इति ठञ् ) इन दो नामों में १ पुं० नाम अमावस्या को किये जाने वाले मासिक श्राद्ध का है ।

---

१. अमृतं यज्ञशेषे स्यात् पीयूषे सलिले त्रिषु । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः ॥ इति मेदिनी ।
२. त्यागो दाने च वर्जने इति मेदिनी । ३. दानं गजमदे त्यागे पालनच्छेदशुद्धिषु । इति विश्वमेदिन्यौ ।
४. विसर्जनं परित्यागे दाने सम्प्रेषणेऽपि च । इति मेदिनी ।

५. स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम् । ६. प्रतिपादनं तु दाने च प्रतिपत्तौ प्रबोधने । इति मेदिनी । ७. अंहतिस्त्यागरोगयोः । इति हैमः । ८. पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् । इति मनुः ।

**पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ।**
**सनिस्त्वध्येषणा याच्ञाऽभिशस्तिर्याचनार्थना ॥ ३२ ॥**
**षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि ।**
**क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥**
**स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।**
**'प्राघूणिकः प्राघुणकश्चाभ्युत्थानं तु गौरवम्' ॥ प्र० ॥**

---

[1]कुतपः ( कुत्सितं तपति इति खच् मुमभावश्च ) यह १ न० पुं० नाम दिन का आठवाँ हिस्सा ( सप्तममुहूर्त के उपरान्त तथा नवम मुहूर्त के मध्य का ) श्राद्ध योग्य समय विशेष का है। पञ्चदश-मुहूर्तात्मकस्य दिनस्याष्टमो भागः।

पर्येषणा ( इषेरिच्छार्थस्य परेर्वा पर्येषणम् इति युच् ) [२]परीष्टिः ( इत्यत्र पक्षे क्तिन् ) अन्वेषणा ( अन्वेषणम् इत्यत्र युच् ) गवेषणा ( गवेषणम् गवेष-मार्गणे इति ण्यन्तात् युच् ) ये ४ स्त्री० नाम धर्माद्यन्वेषण करने के हैं।

सनिः ( सननम् इति इन् ) अध्येषणा ( अध्येषणम् इति युच् ) ये २ स्त्रीलिङ्ग नाम गुरु माता पिता इत्यादि की सेवा करना या गुरु आदि श्रेष्ठ जनों को प्रार्थनापूर्वक किसी काम में प्रवृत्त कराने का है।

याच्ञा ( याचनम् इति नङ् ) [३]अभिशस्तिः ( अभिशंसनम् इति क्तिन् ) याचना ( इत्यत्र तु युच् ) अर्थना ( अर्थनम्, अर्थ याच्ञायाम् इति ण्यन्तात् युच् ) ये ४ स्त्री० नाम मांगने के हैं ॥ ३२ ॥

अर्घ्यम् ( अर्घायेदमिति यत् ) यह १ त्रि० नाम अर्घ के लिए जल का है। अर्घार्थे जले इति सम्बन्धः।

पाद्यम् ( पादायेदमिति यत् ) यह १ त्रि० नाम पैर धोनेके लिए जल का है। पादाय वारिणि सम्बन्धः ॥ ३३ ॥

आतिथ्यम् ( अतिथये इदम् इति ञ्यः ) यह १ त्रि० नाम अतिथियों के निमित्त वस्तु का है।

आतिथेयम् ( अतिथौ साधुः इति ढञ् ) यह १ त्रि० नाम अतिथियों का अच्छा व्यवहार करने वाले का है या अतिथि निमित्त सिद्ध वस्तु का है ॥ ३३ ॥

[४]आवेशिकः ( अवेशेऽगृहे भवः ठञ् ) आगन्तुः ( आगच्छति इति तुन् ) [५]अतिथिः ( अतति इति इथिन् ) ये त्रि० पुं० नाम अतिथि ( घर में आये ) के हैं।

---

१. दिवसस्याष्टमे भागे मन्दीभवति भास्करः। स कालः कुतपो ज्ञेयः पितृणां दत्तमक्षयम् ॥ इति शातातपः। कुतपोऽस्त्रियां दौहित्रे वाद्ये छागजकम्बले। कुशे दिनस्याष्टमांशे ना सूर्ये कुतपी पुनः। वि सारिकायाम्। इति मेदिनी। २. परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम्। इति मेदिनी।

३. अभिशस्तिः पुनर्लोकापवादे प्रार्थितेऽपि च। इति हैमः।

४. वेशो वेश्यागृहे। इति मेदिनी। नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा। इति मनुः। ५. अध्वनीनोऽतिथिर्ज्ञेयः। इति स्मृतिः। अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि च। इति विश्वमेदिन्यौ। प्राघुणस्त्वतिथिद्वयोः। इति त्रिकाण्डशेषः।

पूजा नमस्याऽपचितिः सपर्यार्चार्हणा समाः ॥ ३४ ॥
वरिवस्या तु शुश्रूषा परिचर्याप्युपासना ।
व्रज्याटाट्या पर्यटनं चर्या त्वीर्यापथस्थितिः ॥ ३५ ॥
उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् ।
'प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ॥ प्र० ॥
वाल्मीकश्चाथ गाधेयो विश्वामित्रश्च कौशिकः ।
व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः' ॥ प्र० ॥
आनुपूर्वी स्त्रियां वावृत् परिपाटी अनुक्रमः ॥ ३६ ॥
पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः ।

---

पूजा ( पूजनम् इति अङ् ) नमस्या ( नमस्करणम् इति क्यच् अः च ) अपचितिः ( अपचयनम् इत्यत्र अकारः, क्तिन् चिभावश्च ) सपर्या ( सपर्यणम् इति यक् अश्च ) अर्चा ( अर्चनम् अर्च पूजायामिति अः ) अर्हण ( अर्हणम् अर्ह पूजायाम् इति युच् ) ये ६ स्त्री० नाम पूजा के हैं ॥ ३४ ॥

वरिवस्या ( वरिवसः करणम् इति क्यच् अः, वरिवस्शब्दः पूजार्थः ) शुश्रूषा ( शुश्रूषणम् इति, अः ) [1]परिचर्या ( परिचरणम् इति निपातनात् साधुः ) [2]उपासना ( उपासनम् इति युच् ) ये ४ स्त्री० नाम शुश्रूषा करने के हैं ।

व्रज्या ( व्रज गतौ इति क्यप् ) अटाट्या ( अटनमिति निपातनात् साधुः ) पर्यटनम् ( परितोऽटनम् इत्यत्र ल्युट् ) ये २ स्त्री० १ नपुं० नाम घूमने के हैं ।

चर्या ( चरणम् इति यत्, ) यह १ स्त्री० नाम ध्यान मौन इत्यादि योगमार्ग में स्थित होने का है ॥ ३५ ॥

ईर्यते ज्ञायते इति ण्यत् ईर्यायाः पन्थाः इति अः, तस्मिन् = ध्यानाद्युपाये स्थितिः चर्या इति सम्बन्धः ।

[3]उपस्पर्शः ( उपस्पर्शनम् इति घञ् ), आचमनम् ( आचम्यतेऽम्भोऽत्र इति ल्युट् ) यह १ पुं० १ न० नाम आचमन करने के हैं ।

मौनम् ( मुनेः कर्म भावो वा इत्यण् ) अभाषणम् ( न भाषणम् इति ल्युट् ) ये २ न० नाम मौन रहने का है ।

आनुपूर्वी ( पूर्वं पूर्वं अनुपूर्वं तस्य भावः इति ष्यञ् ङीष् यलोपश्च पक्षे क्लीबता–आनुपूर्व्यम् ) आवृत् ( आवर्तननम् इति क्विप् ) परिपाटी ( परिपाटनम् स्वार्थण्यन्तः, इः, द्विवचनप्रयोगान्न यण् । कृदिकारादिति ङीषि परिपाटी च ) अनुक्रमः ( अनुक्रमणमिति घञ् वृद्धिनिषेधश्च ) पर्यायः ( पर्ययणमिति घञ् ) ये ३ स्त्री० २पु० नाम क्रम के हैं ॥ ३६ ॥

अतिपातः ( अतिक्रम्य पतनम् इति घञ् ) पर्ययः ( पर्ययणम् इत्यच् ) उपात्ययः ( उपगतस्यातिक्रम्यायनम् इति अच् ) ये ३ पुं० नाम भिन्न क्रम ( क्रमोल्लंघन ) के हैं ।

---

१. परिचर्या तु पर्येष्टिः । इति भागुरिः । २. उपासनम् शराभ्यासेऽप्युपास्तावासनेऽपि च । इति विश्वमेदिन्यौ । ३. उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि । इति मेदिनी ।

नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ॥ ३७ ॥
औपवस्तं तूपवासो विवेकः पृथगात्मता ।
स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः ॥ ३८ ॥
पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः ।
ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ ॥ ३९ ॥
मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ।

[1]नियमः ( नियमनम् इति अप् ) व्रतम् ( व्रियते इति अतच् कित्वाद् गुणाभावः ) ये २ नाम नियम या व्रत के हैं। जिसमें १म पुं० और द्वि० नपुं० पुं० दोनों हैं।

पुण्यकम् ( पुण्यमेवेति कन् ) यह १ न० नाम उपवासादि शास्त्रविहित व्रत का है ॥ ३७ ॥

औपवस्त्रमिति पाठे उपवसति तृच्, उपवस्तुरिदं कर्म इति अण्। औपवस्तम् ( उपवसनम् इति भावे क्तः, अनेकार्थत्वादभोजने वृत्तिः, प्रज्ञाद्यण् ) उपवासः ( उपवसनम् इति घञ् ) ये २ नाम उपवास के हैं। जिनमें १म नपुं० पुं०, २य पुं० है।

[2]विवेकः ( विवेचनम् इति घञ् ) पृथगात्मता ( पृथगात्मा यस्य सः तस्य भाव इति तल् ) ये २ नाम प्रकृति और पुरुष के भेद ज्ञान या भावों के पृथक् स्वरूप ज्ञान के हैं। जिनमें प्रथम पुं० द्वितीय स्त्री० हैं।

ब्रह्मवर्चसम् ( ब्रह्मणो वेदस्य तपसो वा वर्चः इति अच् ) वृत्ताध्ययनर्द्धिः ( वृत्तं चाचारः अध्ययनञ्च गुरुमुखाद्वेदाक्षरग्रहणम् तयोर्ऋद्धिः ) ये २ नाम वेदाभ्यास की वृद्धि या सम्पत्ति के हैं। जिनमें १म नपुं० तथा द्वि० स्त्री० हैं।

ब्रह्माञ्जलिः ( ब्रह्मणोऽञ्जलिः ) यह १ पुं० नाम पढ़ने के पहले व्यस्त हाथ से गुरु के पैर को छूकर प्रणाम करने का है या पाठकाल में हाथों को जोड़ने का है।

ब्रह्मबिन्दवः ( ब्रह्मणः बिन्दुः ) यह १ पुं० नाम वेदादि पढ़ने के समय मुख से निकले हुए जलकण का है। पाठे = वेदपाठे विप्रुषः = मुखान्निर्गतबिन्दवः इति सम्बन्धः।

ध्यानं प्रत्ययैकतानता च, योगश्चित्तवृत्तिनिरोधश्च तयोरासनम् तस्मिन्—ब्रह्मासनम् ( ब्रह्मणः सम्बन्धि आसनम् ) यह १ न० नाम ध्यान और योग के आसन का है।

[3]कल्पः ( कल्पते अनेनेति अच् ) [4]विधिः ( वेधनम् विधानं वा इति इन्, किः वा ) [5]क्रमः ( क्रमणम् इति घञ् वृद्धिनिषेधश्च ) ये ३ पुं० नाम शास्त्रोक्त विधि के हैं ॥ ३९ ॥

मुख्यः ( मुखमिवेति यः ) यह १ पुं० नाम० शास्त्रोक्त प्रधान विधि का है।

अनुकल्पः ( अनु हीनः कल्पः इति प्रादिसमासः ) यह १ पुं० नाम शास्त्रोक्त गौण विधि का है।

---

१. नियमो यन्त्रणायाञ्च प्रतिज्ञा निश्चये व्रते। इति मेदिनी। २. विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः। इति मेदिनी।

३. कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने। इति मेदिनी।

४. विधिर्ना नियतौ काले विधाने परमेष्ठिनि। इति मेदिनी।

५. क्रमस्त्वानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च। इति मेदिनी।

**संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥ ४० ॥**
**समे तु पादग्रहणमभिवादनमित्युभे ।**
**भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ४१ ॥**
**तपस्वी तापसः पारिकांक्षी वाचंयमो मुनिः ।**
**तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ॥ ४२ ॥**
**ऋषयः सत्यवचसः स्नातकस्त्वाप्लवव्रती ।**

---

उपाकरणम् ( उपाक्रियते अनेनेति ल्युट् ) यह १ न० संस्कार के साथ २ वेद ग्रहण करने का है। संस्कारः = उपनयनं पूर्वं यत्र तत् । श्रुतेः ग्रहणम् इति सम्बन्धः ॥ ४० ॥

पादग्रहणम् ( पादयोर्ग्रहणम् स्पर्श इति ) अभिवादनम् ( अभिमुखीकरणार्थं वादनम् इति ल्युट् ) ये २ न० नाम अपना नाम कहते हुए प्रणाम करने का है। ण्यन्ताद्वदेः ल्यट् आभिमुख्येन = वादयते = आशीः कार्यतेऽनेन वा ।

भिक्षुः ( भिक्षणशीलः इति उः ) परिव्राट् ( परित्यज्य सर्वं व्रजति इति क्विप् ) कर्मन्दी ( कर्मन्देन प्रोक्तमधीते इति इनिः ) पाराशरी ( पाराशर्येण प्रोक्तमधीते इति णिनिः ) मस्करी ( मस्करो वेणुरस्यास्ति इति इनिः ) ये ५ पुं० नाम संन्यासी के हैं ॥ ४१ ॥

[1]तपस्वी ( तपोऽस्यास्ति इति विनिः ) तापसः (इत्यत्राण् ) पारिकाङ्क्षी ( परिकाङ्क्षितुं शीलमस्येति णिनिः पृषोदरादिः ) ये ३ पुं० नाम तपस्वी के हैं।

वाचंयमः ( वाचं यच्छति इति खच् अमन्तत्वं निपातनात् ) मुनिः ( मन्यते इति उत् इन् च ) ये २ पुं० नाम मुनि के हैं।

तपःक्लेशसहः ( तपसः क्लेशः, तं सहते इति अच् ) दान्तः ( दाम्यति स्म इति क्तः ) ये २ पुं० नाम तपस्या के क्लेश को सहने वाले का है।

[2]वर्णी ( वर्णः स्तुतिरस्यास्ति इति इनिः ) ब्रह्मचारी ( ब्रह्म वेदाध्ययनव्रतं चरति तच्छील इति णिनिः ) ये २ पुं० नाम ब्रह्मचारी के हैं ॥ ४२ ॥

[3]ऋषिः ( ऋषति जानाति इतीन् ) सत्यवचाः ( सत्यं वचो यस्य ) ये २ पुं० नाम ऋषि-सामान्य के हैं।

स्नातकः ( स्नाति स्म क्तः कन् च ) आप्लवव्रती ( आप्लवते इति अच् आप्लवश्चासौ व्रती च ) ये दो पुं० नाम वेदव्रत समाप्त होने के पश्चात् गुरु आज्ञा से समाप्तिसूचक स्नान किये हुए ब्रह्मचारी के हैं।

---

१. तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति । मांसिकाकटुरोहिण्योः । इति मेदिनी ।
२. वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि । इति विश्वमेदिन्यौ ।
३. ऋषिर्वेदे वशिष्ठादौ दीधितौ च पुमानयम् । इति मेदिनी ।

**ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ ४३ ॥**
**यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ।**
**स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ॥ ४४ ॥**
**पवित्रः प्रयतः पूतः पाखण्डाः सर्वलिङ्गिनः ।**
**पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः ॥ ४५ ॥**
**अस्त्री मण्डलुः कुण्डी व्रतिनामासनं वृषी ।**

---

निर्जितेन्द्रियग्रामः ( इन्द्रियाणां ग्रामः, निर्जितः इन्द्रियग्रामो येन सः ) यती ( यमनम् इति भावे क्तः मलोपः यतमुपरमणमस्ति यस्य इति इनिः ) [1]यतिः ( यतन्ते इति इन् ) ये ३ पुं० नाम जितेन्द्रिय के हैं ॥ ४३ ॥

स्थण्डिलशायी ( स्थण्डिले शेते इति इनिः ) स्थाण्डिलः ( इत्यत्राण् ) ये २ पुं० नाम विना साफ की हुई भूमि पर सोने वाले व्रती का है । स्थण्डिले = अनास्तृतभूमौ नियमानुरोधेन यः शेते असौ इति सम्बन्धः ।

विरजस्तमाः ( रजस्तमोभ्यां विगतः इति समासः ) द्वयातिगः ( द्वयमतिगच्छति इति डः ) ये २ पुं० नाम सत्त्वगुणी के हैं ॥ ४४ ॥

[2]पवित्रः ( पवते पुनाति वेति इत्रः ) प्रयतः ( प्रयच्छति स्मेति क्तः ) [3] पूतः ( पवते स्मेति क्तः ) ये ३ पुं० नाम पवित्र के हैं ।

पाषण्डः ( पापं सनोति इति अमन्ताड्ुः ) सर्वलिङ्गी ( सर्वाणि च तानि लिङ्गानि सन्त्यस्य इतीनिः ) ये २ पुं० नाम पाखण्डी के हैं ।

[4]आषाढ़ः ( आषाढ़ी पूर्णिमा प्रयोजनमस्येत्यण् ) यह १ पुं० नाम ब्रह्मचर्यावस्था में धारण किये हुए पलाशदण्ड का है । पलाशस्य विकार इत्यञ् । व्रते = ब्रह्मचर्ये इति सम्बन्धः ।

[5]राम्भः ( रम्भस्य वेणोर्विकारः इति अञ् ) यह १ पुं० नाम ब्रह्मचर्यावस्था में धारण किए हुए बाँस के दण्ड का है ॥ ४५ ॥

कमण्डलुः ( कस्य प्रजापतेर्जलस्य वा वा मण्डः, तं लाति इति उः ) [1]कुण्डी ( कुणति इति अमन्ताड्ुः, ङीष् च ) ये २ नाम कमण्डलु के हैं जिनमें प्रथम पुं० नपुं० है एवं द्वितीय स्त्री० है ।

वृषी ( व्रुवन्तः सीदन्त्यस्याम् इति डः पृषोदरादिः, वर्षति सुखं कः गौरादिः ) यह १ स्त्री नाम ब्रह्मचारी आदि व्रतियों के आसन का है ।

---

१. यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान् । इति मेदिनी । २. पवित्रं वर्षणे कुशे । ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत् । इति मेदिनी । ३. पूतं त्रिषु पवित्रे च शटिते बहुलीकृते । इति मेदिनी । ४. आषाढ़ो व्रतिनां दण्डे मासे मलयपर्वते । स्त्री पूर्णिमायाम् । इति मेदिनी ।
५. रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे । इति मेदिनी ।

५. कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न ना । इति मेदिनी ।

अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥
स्वाध्यायः स्याज्जपः सुत्याऽभिषवः सवनं च सा ।
सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७ ॥
दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ।
शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥ ४८ ॥
नियमस्तु स यत्कर्माऽनित्यमागन्तुसाधनम् ।
'क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु' ॥ प्र० ॥

---

अजिनम् ( अजति इति इनच् ) [१]चर्म ( चरति चर्यते वा इति मनिन् ) [२]कृत्तिः ( कृत्यते इति क्तिन् ) ये ३ नाम मृगादि के चमड़े का है, जिनमें १–२ पुं० हैं और ३य स्त्री० है ।

भैक्षम् ( भिक्ष्यते इति अः, भिक्षाणां समूह इति अण् ) यह १ त्रि० नाम भिक्षा में मिले हुए पदार्थों का है ॥ ४६ ॥

स्वाध्यायः ( सु अतीव आवृत्त्याध्ययनम् इति घञ् ) जपः ( जपनम् इति अप् ) ये पुं० नाम नियम से वेदादि अभ्यास करने के हैं ।

सुत्या ( सवनम् इति क्यप् तुक् च ) अभिषवः[३] ( इत्यत्राप् षत्वं च ) सवनम्[४] ( सुतमित्यत्र ल्युट् ) ये ३ नाम क्रमशः १ स्त्री०, १ पुं०, १ न० सोमलता को कूटने के हैं ।

अवमर्षणम् ( सर्वाणि एनांसि मानसादिपापानि अपध्वंसयितुं शीलमस्येति णिनिः, जप्यते इति इति यत् अघं = पापं मर्षति अभिभवति इति ल्युट् ) यह १ त्रि० नाम सब पापों को नाश करने वाले जप का है ॥ ४७ ॥

[५]दर्शः ( दर्शे अमावास्यायां क्रियमाणत्वादुपचारात् दर्शशब्देन याग उच्यते ) [६]पौर्णमासः ( पौर्णमास्यां भवः इति अण् ) ये २ पुं० नाम अमावास्या और पूर्णिमा को होने वाले यज्ञ के क्रमशः हैं ।

यमः ( यच्छति, यमनम् वेति अच् ) यह १ पुं० नाम जीवन भर शरीर से करने योग्य संयम का है ।

शरीरमात्रेण साध्यं नित्यं = यावज्जीवं यत् कार्यं तत् कर्म इति सम्बन्धः । यथा—अहिंसा, सत्य, अस्तेय, ब्रह्मचर्य, अपरिग्रह ॥ ४८ ॥

[७]नियमः ( नियच्छति अच् ) यह १ पुं० नाम जीवन पर्यन्त की अपेक्षा किसी विशेष समय किये जाने वाले कार्य का है । यत् कर्म अनित्यं नतु यावज्जीवं कर्तव्यं, आगन्तुकैः कादाचित्कैः कामनया समयविशेषादिभिः साधनैः साध्यमुपवासस्नानजपादि तत् नियमः इत्यन्वयः ।

---

१. चर्म कृत्तौ तु फलके । इति मेदिनी । २. कृत्तिश्चर्मत्वचोर्भूर्जे कृत्तिकायां द्वयं स्त्रियाम् । इति मेदिनी । ३. भवेदभिषवः स्नाने मद्यसन्धानयज्ञयोः । इति मेदिनी । ४. सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च । इति मेदिनी ।

५. पक्षान्तेष्टौ दर्शने च दर्शः सूर्येन्दुसंगमे । दर्शस्तु स्यादमावास्या यागभेदावलोकने ॥ इति मेदिनी ।

६. पौर्णमासः पुमान् यज्ञभेदे स्त्री पूर्णिमातिथौ । इति मेदिनी । ७. नियमो यन्त्रणायां च प्रतिज्ञानिश्चिते व्रते । इति मेदिनी । शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । इति पातञ्जलयोगसूत्रम्

उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४९ ॥
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ।
अंगुल्यग्रे तीर्थं दैवं स्वल्पांगुल्योर्मूले कायम् ॥ ५० ॥
मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम् ।
स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५१ ॥
देवभूयादिकं तद्वत्कृच्छ्रं सान्तपनादिकम् ।

---

उपवीतम् ( उपवीयते स्मेति क्तः ) यज्ञसूत्रम् ( यज्ञस्य सूत्रम् इति समासः ) ये दो न० नाम यज्ञोपवीत के हैं। दक्षिणे करे प्रोद्धृते समुत्थापिते सति वामस्कन्धार्पितम् यज्ञस्य सूत्रं, तथा च गोभिलः दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवति एवं यज्ञोपवीती भवति।

प्राचीनावीतम् ( प्राचीनं प्रदक्षिणम् आवीयते स्मेति क्तः । अन्यस्मिन् = वामकरे प्रोद्धृते सति सम्बन्धः ) यह १ न० नाम दाहिने कन्धे से लटकते हुए यज्ञोपवीत का है। गोभिल ने कहा है—सव्यं बाहुमुद्धृत्य शिरोवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति।

[1]निवीतम् ( निवीयते स्मेति क्तः नि = अधो भागे वीतम् = गमनस्य वा ) यह १ न० नाम माला की तरह पहने हुए जनेऊ का है। कण्ठाल्लम्बितम् इत्यन्वयः।

दैवम् ( देवानामिदमित्यण् ) यह १ न० नाम अंगुलियों के अग्रभाग का है। अंगुलीनामग्रे दैवं तीर्थमिति सम्बन्धः।

[2]कायम् ( कः प्रजापतिर्देवताऽस्येति अण् इणादेशः आदिवृद्धिश्च ) यह १ न० नाम कनिष्ठ अंगुली के अधोभाग का है ॥ ५० ॥

अङ्गुष्ठतर्जन्योः मध्ये पित्र्यम् ( पितरो देवताऽस्येति यत् रीङादेशे भस्य लोपे च ) यह १ न० नाम हाथ के अंगूठे ओर तर्जनी के मध्य भाग का है।

ब्राह्मम् ( ब्रह्मा देवताऽस्येति अण् निपातनात् ) यह १ न० नाम हाथ के अंगूठे के मूल भाग का है।

ब्रह्मभूयम् ( ब्रह्मणः भावः इति क्यप् ) ब्रह्मत्वम् ( ब्रह्मणः भावः इति त्वप्रत्ययः ) ब्रह्मसायुज्यम् ( योजनम् युक् क्विप्, सयुजो भावः ष्यञ्, ब्रह्मणः सायुज्यम् ) ये ३ न० नाम ब्रह्ममय हो जाने का है ॥ ५१ ॥

देवभूयम् ( देवस्य भावः इति क्यप् ) देवत्वम्, देवसायुज्यम्। ये ३ न० नाम देवमय हो जाने का है।

[3]कृच्छ्रम् ( कृन्तति इति रक् छोऽन्तादेशश्च ) सान्तपनम् ( सम्यक् तपनमत्रेति अण् ) ये २ न० नाम चान्द्रायण आदि व्रत का है। आदि पद से चान्द्रायण प्राजापत्य पराकादि का संग्रह है।

---

१. राश्यधोभावविन्यासे निवीतम्। इति मेदिनी। २. कायः कदैवते मूर्तौ संघे लक्ष्यस्वभावयोः। मनुष्यतीर्थे कायं स्यात्। इति मेदिनी। ३. कृच्छ्रमाख्यातमाभीले पापसांतपनादिनोः। इति मेदिनी। गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥ इति मनुः।

संन्यासवत्यनशने पुमान् प्रायोऽथ वीरहा ॥ ५२ ॥
नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना ।
व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ॥ ५३ ॥
धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ।
सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥
अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ॥ ५५ ॥

---

[1]प्रायः ( प्रकृष्टमयनम् इति इण्धातोरच् , सम्यक् न्यासः = आत्यन्तिकस्त्यागः तद्वतेऽनशने = अभोजने इति सम्बन्धः ) यह १ पुं० नाम संन्यासपूर्वक भोजन त्यागने का है ।

वीरहा ( वीरोऽग्निः त हन्ति इति क्विप् ) नष्टाग्निः ( नष्टोऽग्निर्यस्य ) ये २ पुं० नाम प्रमाद से बुझी हुई अग्नि वाले अग्निहोत्री के हैं ॥ ५२ ॥

[2]कुहना ( कुहनम् इति युच् ) यह १ स्त्री० नाम दम्भ से मौनादिधारण करने एवं अर्थलोभ से मिथ्याधर्माचरण करने का है । लोभात् मिथ्या-तत्त्वे ईर्यापथस्याचारभेदस्य कल्पना = सम्पादना इति सम्बन्धः ।

व्रात्यः ( शरीरायासजीवी व्याधादिर्व्रातः स इवेति यः ) संस्कारहीनः ( संस्कारैः = उपनयनादिभिः हीनः ) ये २ पुं० नाम गर्भाधानोपनयनादि संस्कारहीन का है ।

अस्वाध्यायः ( न स्वाध्यायो वेदाध्ययनमस्य ) निराकृतिः ( आकृतेरध्ययनचेष्टायाः निर्गतः ) ये २ पुं० नाम वेदविहीन के हैं ॥ ५३ ॥

धर्मध्वजी ( धर्मस्य ध्वजः = चिह्नं धर्मध्वजोऽस्यास्ति इति इनिः ) लिङ्गवृत्तिः ( लिङ्गमाश्रमादिचिह्नधारणं वृत्तिर्जीविकाहेतुर्यस्य ) ये २ पुं० नाम जीविका के लिए भस्मादि धारण करके झूठा साधु बनने वाले का है ।

अवकीर्णी ( अवकीर्णं विक्षिप्तं हिंसितम् वा वृत्तमनेनेति इनिः ) क्षतव्रतः ( क्षतं खण्डितं व्रतमस्य ) ये २ पुं० नाम ब्रह्मचर्यादि व्रत मध्य में ही भग्न हुए ब्रह्मचारी के हैं ।

अभिनिर्मुक्तः ( अभि सर्वतः सायंतनेन कर्मणा निस्वयेन मुक्तः ) अभ्युदितः ( अभि सर्वतः उद् अतिशयेन इतं गतं प्रातस्तनं कर्मारम्भात् ) ये २ पुं० नाम क्रमशः जिसके सोये रहने पर सूर्यास्त और सूर्योदय हो जाय उसका १-१ है । अंशुमान् यस्मिन् सुप्ते अस्तम् एति यस्मिन् च सुप्ते उदेति तस्य यथाक्रममिति सम्बन्धः ॥ ५४ ॥

परिवेत्ता ( परिविन्दति ज्येष्ठम् परित्यज्य भार्यां लभते इति तृन् ) यह १ पुं० नाम ज्येष्ठ भ्राता के अविवाहित रहने पर विवाह किये हुए अनुज का है । अनूढे = अविवाहिते ज्येष्ठे दारपरिग्रहात् अनुजः = कनिष्ठः परिवेत्ता इति सम्बन्धः ॥ ५५ ॥

---

१. प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः । इति मेदिनी ।
२. कुहना ग्रामजालं स्यात् इति रत्नकोषः । कुहना दम्भचर्यायामीर्ष्यालौ कुहनस्त्रिषु ।

परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ।
परिविित्तिस्तु तज्ज्यायान् विवाहोपयमौ समौ ॥ ५६ ॥
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ।
व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥ ५७ ॥
त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ।
सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ॥ ५८ ॥

---

तस्य परिवेत्तुः ज्यायान्=ज्येष्ठ इति सम्बन्धः परिविित्तिः (परिवर्जनं विन्दति=लभते इति क्तिच्) यह १ पुं० नाम विवाहित छोटे भाई के अविवाहित बड़े भाई का है।

विवाहः (विशिष्टं वहनमिति घञ्) उपयमः (उपयमनम् इत्यप्) परिणयः (परिणयनम् इति अच्) उद्वाहः (उद् वहनम् इति घञ्) उपयामः (उपयमनम् इति घञ्) पाणिपीडनम् (पाणेः पीडनम्=ग्रहणम् इति) ये ६ विवाह के हैं जिनमें ५ पुं० १ न० नाम हैं ॥ ५६ ॥

व्यवायः (व्यवायनम् विअव्पूर्वकादिण् धातोः इति एरच्) ग्राम्यधर्मः (ग्रामे भवः इति यः, ग्राम्याणां धर्मः इति) मैथुनम् (मिथुनस्य कर्म इत्यण्) निधुवनम् (नितरां धुवनं हस्तपादादि चालनमत्रेति) रतम् (रमणम् इति क्तः मलोपश्च) ये ५ नाम स्त्री के साथ सम्भोग करने के हैं। जिनमें १–२ पुं० हैं तथा ३–५ नपुं० हैं।

त्रिवर्गः (त्रयाणां वर्गः समूहः) यह १ पुं० नाम धर्मार्थकाम का है। धर्मश्च कामश्च अर्थश्च, तैः कृतो वर्गः।

चतुर्वर्गः (चतुर्णां वर्गः समूहः मोक्षेण सहितैः धर्मकामार्थैः कृत्वा) यह १ पुं० नाम धर्मार्थ काम मोक्ष का है ॥ ५७ ॥

[1]चतुर्भद्रम् (बलेन सहितैः धर्मादिभिः चत्वारि भद्राणि श्रेष्ठान्यत्र वृन्दे इति) यह १ न० नाम सुदृढ चतुर्वर्ग का है।

[2]जन्यः (जनीं वधूं वहति इति यदन्तो निपातितः) यह १ पुं० नाम वर के समवयस्क मित्र या वर पक्ष के लोगों का है ॥ ५८ ॥

॥ इति ब्रह्मवर्गः ॥

---

१. भद्रो वाच्यवच्छ्रेष्ठसाधुनोः। इति विश्वः।
२. जन्यो वरवधू ज्ञातिप्रियभृत्यहितेषु च। इति विश्वः।

# अथ क्षत्रियवर्गः

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
राज्ञि राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।
चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ॥ २ ॥

---

मूर्धाभिषिक्तः ( मूर्धन्यभिषिक्तः राज्यदानसमये मूर्धनि अभिषिच्यते । तत्प्रभवत्वात् सर्वोऽपि मूर्धाभिषिक्तः ) राजन्यः ( राज्ञो अपत्यम् इति यत् ) [१]बाहुजः ( बाहुभ्यां जातः इति डः ) क्षत्रियः ( क्षत्रस्यापत्यम् इति घः ) विराट् ( विशेषेण राजति इति क्विप् ) ये ५ पुं० नाम क्षत्रिय के हैं ।

[२]राजा ( राजति इति कनिन् ) राट् ( राजति इति क्विप् ) [३]पार्थिवः ( पृथिव्याः ईश्वरः इति अञ् ) क्ष्माभृत् ( क्ष्मां बिभर्ति इति क्विप् तुक् च ) नृपः ( नॄन् पाति इति कः ) भूपः ( भुवं पाति इति कः ) महीक्षित् ( महीं क्षियति इति क्विप् तुक् ) ये ७ पुं० नाम राजा के हैं ॥ १ ॥

अधीश्वरः ( संलग्नः अन्तः एकदेशः अस्या = भूमेः इति समन्ता । समन्तायाः = स्वदेशाव्यवहितभूमेः इमे राजानः इत्यण्, सामन्ताः । प्रणताः अशेषाः सामन्ताः स्वदेशानन्तरराजाः यस्य स राजा इति सम्बन्धः—अधिकः ईश्वरः ) यह १ पुं० नाम संनिहित सभी राजाओं को वश में करने वाले राजा का है ।

[४]चक्रवर्ती ( चक्रे भूमण्डले राजमण्डले वा वर्तितुं शीलमस्य इति णिनिः ) [५]सार्वभौमः ( सर्वभूमेरीश्वरः इत्यण् ) ये २ पुं० नाम सागर तक राज्य करने वाले राजा का है ।

[६]मण्डलेश्वरः ( मंडलस्य भूम्येकदेशस्य ईश्वरः ) यह १ पुं० नाम देश के ऊपर आदेश चलाने वाले राजा का है ॥ २ ॥

---

१. बाहुजः क्षत्रिये कीरे स्वयंजाततिलेऽपि च । इति विश्वमेदिन्यौ ।

२. राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात् । इति मेदिनी ।

३. पार्थिवो नृपतौ भूमिविकारे पार्थिवोऽन्यवत् । इति विश्वः । पार्थिवो नृपे । पार्थिवी स्यात्तु सीतायां पृथिव्या विकृतौ त्रिषु । इति मेदिनी ।

४. चक्रं गणे चक्रवाके इति विश्वः । ५. सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि । इति विश्वमेदिन्यौ । ६. स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च । इति विश्वः ।

येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥ ३ ॥
राजन्यकं च नृपतिक्षत्त्रियाणां गणे क्रमात् ।
मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः ॥ ४ ॥
महामात्राः प्रधानानि पुरोधास्तु पुरोहितः ।
द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥
प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।

---

सम्राट् ( सम्यक् राजत इति क्विप् अनुस्वाराभावश्च ) यह १ पुं० नाम जो राजसूय यज्ञ किया हो तथा भूमण्डल का स्वामी हो, सम्पूर्ण राजा जिसकी आज्ञा मानते हों ऐसे राजा का है। राजसूय-कर्ता सम्राट्, द्वादशराजमण्डलस्येश्वरोऽपि सम्राट्, सर्वनृपतीनां शासकोऽपि सम्राट् इति पृथक् त्रीणि नामान्याहुरिति केचित्।

राजकम् ( राज्ञां समूहः इति वुञ् ) यह १ नाम राजसमूह का है ॥ ३ ॥

राजन्यकम् ( राजन्यानां समूहः इति वुञ् ) यह १ न० नाम क्षत्रियों के समूह का है।

मन्त्री ( मन्त्रो गुप्तभाषणमस्यास्ति इति इनिः ) धीसचिवः ( धिया धियां वा सचिवः = सहायः ) अमात्यः ( अमा सह समीपे वा भवः इति त्यप् ) ये ३ पुं० नाम मन्त्री के हैं।

ततः = धीसचिवाद्भिन्नः—कर्मसचिवः ( कर्मसु सचिवः सहायः ) यह १ पुं० नाम हर एक कार्य में सहयोग देनेवाले मन्त्री का है ॥ ४ ॥

[1]महामात्रः ( महती मात्रा यस्य ) [2]प्रधानम् ( प्रकर्षेण धीयते इति ल्युट् ) ये २ नाम क्रमशः १ पुं० १ न० राजा को मुख्य राय देनेवाले मन्त्री के हैं।

पुरोधाः ( पुरो अग्रे धीयते इति धाञोऽसिः ) पुरोहितः ( पुरोऽग्रे धीयते स्मेति क्तः दधातेर्हिः ) ये २ पुं० नाम पुरोहित के हैं।

प्राड्विवाकः 'विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः। ( प्रच्छनम् इति क्विप्, दीर्घः सम्प्रसारणभावश्च प्राट् च विवचनम् इति घञ् विवाकश्च, प्राड्विवाकौ प्रश्नविवेकावस्येति अच् प्रश्न-विचारयोः कुशलः ) अक्षदर्शकः ( अक्षाणां व्यवहाराणां दर्शकः ) ये २ पुं० नाम मुकदमा देखनेवाले न्यायाधीश के हैं। ऋणदानादीन्यष्टादश विवादस्थानानि व्यवहाराः तेषां द्रष्टरि = निर्णेतरि इति सम्बन्धः ॥ ५ ॥

[3]प्रतीहारः ( प्रतिहरणम् इति घञ् ) द्वारपालः ( द्वारं पालयति इति अण् ) द्वाःस्थः ( द्वारि तिष्ठति

---

१. मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे, क्लीबं कार्त्स्न्येऽवधारणे ॥ इति मेदिनी। महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे। इति मेदिनी।

२. प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदा ॥ इति मेदिनी। महामात्रः प्रधानः स्यादिति बोपालितात्।

३. प्रतिहारो द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति। इति विश्वमेदिन्यौ।

**रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ ॥ ६ ॥**
**स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ।**
**भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥**
**अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।**
**सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥**

---

इति कः ) [1]द्वाःस्थितः ( द्वारि तिष्ठति स्म इति क्तः ) [2]दर्शकः ( पश्यतीति ) ये ५ पुं० नाम द्वारपाल के हैं ।

रक्षिवर्गः ( अवश्यं रक्षन्ति इति णिनिः रक्षिणां वर्गः इति ) [3]अनीकस्थः ( अनीकेन अनीके वा तिष्ठति इति कः ) ये २ पुं० नाम अङ्गरक्षक के हैं ।

[4] अध्यक्षः ( अधिगतोऽक्षं व्यवहारमिति 'अत्यादयः' इति समासः, अध्यक्षतीति अच् वा ) अधिकृतः ( अधिकमुपरि वा क्रियते स्म इति क्तः ) ये २ पुं० नाम अध्यक्ष के हैं ॥ ६ ॥

ग्रामेऽधिकृतः—स्थायुकः ( स्थातुं शीलमस्येति उकञ् युक् च ) यह १ पुं० नाम एक ग्रामाध्यक्ष का है ।

भूरिषु ग्रामेषु अधिकृतः—[5]गोपः ( गोपायति इत्यच् ) यह पुं० नाम बहुत ग्रामों के अध्यक्ष का है ।

भौरिकः ( भूरिणि सुवर्णे नियुक्तः इति ठक् ) कनकाध्यक्षः ( कनकस्य अध्यक्षः ) ये २ पुं० नाम स्वर्णाध्यक्ष के है ।

[6]रूप्याध्यक्षः ( रूप्यस्य अध्यक्षः ) [7]नैष्किकः ( निष्के हेम्नि नियुक्तः इति ठक् ) ये २ पुं० नाम नाम खजाना या टकसाल के अध्यक्ष के हैं । ॥ ७ ॥

अन्तर्वंशिकः ( अन्तरो वंशो गृहम्, अन्तर्वंशे नियुक्तः इति ठक् ) यह १ पुं० नाम रनिवास में नियुक्त व्यक्ति का है ।

सौविदल्लः ( सुष्ठु विदन्तं विद्वांसमपि लान्ति वशवर्तिनं कुर्वन्ति, सुविदल्लाः स्त्रियः, तासामयं रक्षक इत्यण् सौविदल्लः ) [8]कञ्चुकी ( कञ्चुकश्चोलकोऽस्त्यस्य इति इनिः ) [9]स्थापत्यः ( स्थानां दाराणां पतिः पालकः स्थपतिः एवेति ष्यञ् ) सौविदः ( सुविदन्ति इति कः ) ये ४ पुं० नाम रनिवास में बाह्य रक्षा के लिए नियुक्त ( बेंत की छड़ी लिए हुए आने जाने वाले ) वृद्ध का है ॥ ८ ॥

---

१. द्वाःस्थितौ वेत्रधारकः । इति त्रिकाण्डशेषः । २. स्याद्दर्शको दर्शयिता प्रतीहारोऽपि दर्शकः । इति रुद्रः । द्वारपो द्वाःस्थितादर्शी इति रभसः ।

३. अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे । राजरक्षिणि चिह्ने च वीरमर्दनकेऽपि च ॥ इति विश्व-मेदिन्यौ । ४. अध्यक्षोऽधिकृते प्रोक्तः प्रत्यक्षे त्वभिधेयवत् । इति मेदिनी । ५. गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम् । इति मेदिनी । ६. रूप्यः स्यात् सुन्दरे त्रिषु । आहतस्वर्णरजते रजते च नपुंसकम् ॥ इति मेदिनी । ७. टङ्कपतिर्नैष्किको रजताध्यक्षः । इति रभसः । ८. कञ्चुकी जोङ्गकतरौ महल्ले पन्नगे विटे । इति हैमः ।

९. स्थपतिः कञ्चुकिन्यपि । इति मेदिनी ।

शण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः ।
विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥ ९ ॥
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ।
रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥

---

[1]शण्ढः ( शाम्यति शिश्नाभावात् इति ढः ) वर्षवरः ( वृणोति वरति वेति अच् , वर्षस्य रेतःपातस्य वरः ) ये दो पुं० न० नाम हिंजड़े के हैं ।

[2]सेवकः ( सेवते इति ण्वुल् ) [3]अर्थी ( अर्थोऽसंनिहितोऽस्यास्ति इति इनिः ) अनुजीवी ( अनुजीवितुं शीलमस्य इति णिनिः ) ये ३ पुं० नाम सेवक के हैं ।

शत्रुः ( शातयति इति कुन् , णिलुक् च ) यह १ पुं० नाम अपने देश के समीपस्थ देश के राजा का है । विषयस्य देशस्य अनन्तरः समीपस्थो राजा इति सम्बन्धः ।

[4]मित्रम् ( मेद्यति इति क्त्रन् ) यह १ न० नाम अपने राज्य के राजा का है ॥ ९ ॥

[5]उदासीनः ( उदास्ते इति आस् उपवेशने धातोः शानच् , ईत्वञ्च ) यह १ पुं० नाम शत्रु मित्र से भिन्न ( तटस्थ ) राजा का है ।

पार्ष्णिग्राहः ( पार्ष्णिं पश्चात् पदं गृह्णाति इति अण् ) यह १ पुं० नाम पृष्ठ भाग से रक्षा करने वाले राजा का है ।

रिपुः ( रपति दोषमिति कुः उपधाया उत् ) वैरी ( वीरस्य कर्म भावो वा, अण् वैरमस्यास्ति इतीनिः ) सपत्नः ( सपत्नीव इति 'व्यन् सपत्ने' इति निर्देशादकारः ) अरिः ( इयर्ति विरोधमिति 'अच इः' ) द्विषन् ( द्वेष्टि इति शतृ ) द्वेषणः ( द्वेषशीलः इति युच् ) दुर्हृद् ( दुष्टं हृदयमस्येति निपातनात् साधुः ) द्विट् ( द्वेष्टि इति क्विप् ) [6]विपक्षः ( विरुद्धः पक्षोऽस्य ) अहितः ( न हितमस्मात् ) अमित्रः ( अमति गच्छति इतीत्रन् ) दस्युः ( दस्यति इति युच् अनभावश्च ) शात्रवः ( शातयति इति कुनण् च ) शत्रुः ( शातयति इति कुन् ) [7]अभिघाती ( अभिहन्तुं शीलमस्य इति णिनिः ) परः ( पिपर्ति रोषमिति अच् ) अरातिः ( न राति सुखम् इति क्तिच् ) प्रत्यर्थी ( प्रतिकूलमर्थयितुं शीलमस्य

---

१. शण्ढः क्लीबस्तु कञ्चुकी इति रभसः । शण्ढः स्यात्पुंसि गोपतौ : आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि । इति मेदिनी । शण्ढषण्ढौ तु सौविदे । वन्ध्यपुंसीद्वरे क्लीबे । इति हैमः ।
२. सेवकस्तु प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि । इति मेदिनी ।
३. अर्थी पुमान् च याचके स्यात्सेवके च विवादिनि । इति मेदिनी ।
४. मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि स्त्रियां गन्धद्रव्ये दैत्यान्तरे पुमान् । इति मेदिनी ।
५. सैन्यपृष्ठे पुमान् पार्ष्णिः पश्चात्पदजिगीषयोः । इति विश्वः । ६. पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । इति विश्वमेदिन्यौ । ७. विपक्षोऽभिघातिरमित्र इति रत्नकोशः ।

वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् ।
सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।
चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ॥ १३ ॥
सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥

---

इति णिनिः ) [१]परिपन्थी ( परि दोषाख्याने पन्थयितुं शीलमस्य इति णिनिः ) ये १९ पुं० नाम शत्रु के हैं ॥ ११ ॥

वयस्यः ( वयसा तुल्यः इति यत् ) स्निग्धः ( स्निह्यति इति क्तः ) सवयाः ( समानं वयोऽस्येति समानस्य सभावः ) ये ३ पुं० नाम बराबर अवस्था वाले मित्र का है ।

मित्रम् ( मेद्यति इति क्त्रन् ) सखा ( समानं ख्यायते लोकैः इति समानशब्दे उपपदे ख्याधातोः इण् तस्य डित्वात् यलोपः, समानस्य सभावश्च ) सुहृत् ( शोभनं हृदयमस्येति निपातनात् साधुः ) ये ३ पुं० नाम मित्र के हैं । जिनमें प्रथम न०, २ पुं० हैं ।

सख्यम् ( सख्युर्भावः कर्म वेति यः ) साप्तपदीनम् ( सप्तभिः पदैरवाप्यते इति निपातनात् साधुः ) ये २ न० नाम मित्रता के हैं ।

अनुरोधः ( अनुगम्य रोधनम् इति घञ् ) अनुवर्तनम् ( अनुगम्य वर्तनम् चित्ताराधनम् ) ये २ नाम क्रमशः १ पुं० १ न० पक्ष में रहने का है ॥ १२ ॥

यथार्हवर्णः[२] ( अर्हति इति अच् , यो योऽर्हः । यथार्हं वर्णो रूपमस्य ) प्रणिधिः[३] ( प्रकर्षेण निधीयते ज्ञेयमत्रेति किः ) अपसर्पः ( अपसर्पति इति अच् ) चरः[४] ( चरति इति अच् ) स्पशः[५] ( स्पशति इति अच् ) चारः ( चरति इति अण् ) गूढपुरुषः ( गूढश्चासौ पुरुषश्च ) ये ७ पुं० नाम गुप्त रूप से पता लगाने वाले ( गुप्तचर ) के हैं ।

आप्तः ( आप्यते स्मेति क्तः ) प्रत्ययितः ( प्रत्ययो विश्वासः संजातोऽस्येति इतच् ) ये २ पुं० नाम विश्वास करने योग्य पुरुष के हैं ॥ १३ ॥

सांवत्सरः ( संवत्सरं वेत्ति इति अण् ) ज्यौतिषिकः ( ज्यौतिषमधीते वेद वेति ठक् ) दैवज्ञः ( दैवं प्राक्तनं शुभाशुभं कर्म जानाति इति कः ) गणकः ( गणयति इति ण्वुल् ) मौहूर्तिकः ( मुहूर्तम् अधीते इति ठक् ) मौहूर्तः ( मुहूर्तमधीते इति अण् ) ज्ञानी ( ज्ञानमस्यास्ति इति इनिः ) कार्तान्तिकः ( कृतान्तं वेत्ति इति ठक् ) ये ८ पुं० नाम ज्यौतिषी के हैं ॥ १४ ॥

---

१. परिशब्दश्च प्रकृते दोषाख्याने निरसने । पूजाव्याप्त्योश्च भूषणे ॥ इति मेदिनी ।

२. वर्णः स्याद् भेदरूपयोः । इति धरणिः । ३. प्रणिधिर्याचने चरे इति हैमः । ४. चरोऽक्षद्यूत-भेदे च भौमे चारे त्रसे चले । इति मेदिनी । चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः । इति मेदिनी ।

५. स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम् । इति मेदिनी ।

तान्त्रिको ज्ञातसिद्धान्तः सत्त्री गृहपतिः समौ।
लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥
लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ।
स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी ॥ १६ ॥
अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि।
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च।

---

तान्त्रिकः ( तन्त्रं सिद्धान्तमधीते वेद वेति ठक् ) ज्ञातसिद्धान्तः ( ज्ञातः सिद्धान्तः येन ) ये २ पुं० नाम तत्त्वार्थ को ठीक-ठीक जानने वाले के हैं।

[1]सत्त्री ( सत्त्रमस्यास्ति इति इनिः ) गृहपतिः ( गृहस्य पतिः ) ये २ पुं० नाम अन्नदान करने वाले गृहस्थ के हैं।

लिपिकारः ( लिपिं करोति इति टः ) अक्षरचणः ( अक्षरैर्वित्तः इति चणप् ) अक्षरचञ्चुः ( पूर्ववत् ज्ञेयः ) लेखकः ( लिखति इति ण्वुल् ) ये ४ पुं० नाम लेखन कार्य करने वाले के हैं ॥ १५ ॥

लिख्यते स्म इति क्तः, अक्षराणां विन्यासः, लिखितं चाक्षरविन्यासश्च अनयोः समाहारः तस्मिन्निति सम्बन्धः। लिपिः ( लिप्यते इति इक् ) लिबिः ( इत्यत्रापि इक्, किलिपिलिबि इति लिंगात् पस्य बो वा ) ये २ स्त्री० नाम पुस्तक इत्यादि में लिखे हुए अक्षर के हैं।

संदेशहरः ( सन्देशं वाचिकं हरति इति अच् ) दूतः ( दवति इति क्तः दीर्घश्च ) ये २ पुं० नाम सन्देशवाहक के हैं।

दूत्यम् ( दूतस्य भावः कर्म वा यः, ष्यञि दौत्यमपि ) यह १ न० नाम संदेशवाहक के कार्य का है ॥ १६ ॥

अध्वनीनः ( अध्वानमलं गच्छति इति खः टिलोपाभावश्च ) अध्वगः ( अध्वानं गच्छति इति डः ) अध्वन्यः ( अध्वानमलं गच्छति इति यत् ) पान्थः ( पन्थानं नित्यं गच्छति इति णः, स्त्रियां पान्था ) पथिकः ( ष्कन्, स्त्रियां ङीषि पथिकी ) ये ५ पुं० नाम रास्ता चलने वाले राही के हैं।

[2]स्वामी ( राजा ) अमात्यः ( मन्त्री ) सुहृत् ( मित्रम् ) कोशः ( भण्डारः ) राष्ट्रम् ( देशः ) दुर्गम् ( पर्वतादिः ) बलम् ( सैन्यम् ) ये ७ नाम क्रमशः ४ पुं० ३ न० क्रमशः १–१ राज्य के या राजकर्म के अंगों के हैं।

राज्याङ्गम् ( राज्यस्य राजकर्मणः अङ्गम् ) प्रकृतिः ( प्रकृष्टं करोति राज्यम् इति क्तिच् ) ये दो नाम उपर्युक्त स्वाम्यादि सातों के वाचक हैं, जिनमें प्रथम नपुं० द्वि० स्त्री० हैं।

पौराणां नागराणां [3]श्रेणयः ( श्रयन्ति इति निः ) उस एक स्त्री० नाम से नगर-वासियों की भी गणना राज्याङ्ग और प्रकृति में होती है। इस प्रकार राज्याङ्ग के आठ ( ८ ) भेद हैं।

---

१. सत्त्रमाच्छादने यज्ञे सदा दाने च कैतवे। इति विश्वः।

२. स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्। परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते। इति कामन्दकीये दर्शितम्। ३. पौरश्रेणिभिः सह अष्टाङ्गमपि राज्यम् इति च कामन्दकीये उक्तम्।

**संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥**
**षड् गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।**
**क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥**

---

[१]सन्धिः ( संधानम् इति किः ) [२]विग्रहः ( विरुद्धं विविधं वा ग्रहणम् इति अप् ) [३]यानम् ( यात्यत्र इति ल्युट् ) [४]आसनम् ( आस्ते इति ल्युट ) [५]द्वैधम् ( द्विप्रकारम् इति प्रकारार्थे धा, धमुञादेशे च वृद्धौ ) [६]आश्रयः ( आश्रयणम् इति अच् ) ये ६ नाम गुण शब्द वाच्य हैं। अभिप्राय यह है कि ये ६ नीतिज्ञों के गुण कहलाते हैं, जिनमें १–२ पुं०, ३–५ नपुं० ६ठा पुं० है।

प्रभावः ( भवत्यनेन इति घञ् भावः, प्रकृष्टो भावः ) उत्साहः ( उत्सहतेऽनेनेति घञ् ) मन्त्रः ( मननात् त्रायते इति मन्त्रणम् इति मन्त्रिधातोः घञ् वा ) प्रभावश्च उत्साहश्च मन्त्रश्च इति ते, तेभ्यः जाताः इति डः, तिस्रः शक्तयः ( शक्यते जेतुमनया इति क्तिन् ) राज्ञां शक्तिशब्दवाच्याः भवन्ति इति सम्बन्धः। शक्ति यह एक स्त्री० नाम प्रभाव से उत्पन्न होनेवाले, उत्साह से उत्पन्न होनेवाले और गुप्त मन्त्रणा से उत्पन्न होनेवाले सामर्थ्य को कहते हैं। इस प्रकार शक्तियाँ ३ प्रकार की होती हैं—प्रभावज, उत्साहज, और मन्त्रज। 'कोशदण्डबलं प्रभुशक्तिः' = कोश और दण्ड बल प्रभावज शक्ति है। 'विक्रमबलमुत्साहशक्तिः' = पराक्रमबल उत्साहज शक्ति है। सन्धि आदि का और सामादि उपाय का यथावत् प्रयोग करना ( ज्ञान बल का नहीं ) मन्त्रज शक्ति है।

क्षयः ( क्षयणम् इति अच्, [७]अष्टवर्गस्यापचयः ) स्थानम् ( स्थीयते इति ल्युट् अष्टवर्गस्योपचयापचयाभावः—) वृद्धिः ( वर्धतेऽनया इति क्तिन्, अष्टवर्गस्योपचय :–) ये तीन नाम क्रमशः ( अष्ट वर्ग की कमी को क्षय, समान रहने को स्थान और बढ़ने को वृद्धि ) १–१ त्रिवर्ग ( त्रयाणां वर्गः ) के हैं जिनमें प्रथम पुं०, द्वि० नपुं०, तृतीय स्त्री० हैं। ये ही नीतिज्ञों के त्रिवर्ग भी कहलाते हैं ॥ १९ ॥

---

१. स्वर्णगजादिदानेन शत्रुभिः प्रीत्युत्पादना मित्रीकरणं सन्धिः। अयं च बहुविधः।
२. शत्रुराज्ये दाहलुण्ठनच्छेदादिः विग्रहः। अयं च त्रिविधः।
३. उपचितशक्तेः कृतमूलराष्ट्ररक्षकस्य शत्रोः अवस्कन्दनाय यात्रा यानम्। तच्च पञ्चविधम्।
४. कालादिप्रतीक्षया विजिगीषोः दुर्गादीन् वर्धयतः स्थितः आसनम्। एतदपि पञ्चविधम्।
५. बलिना सह सन्धि अबलेन सह विग्रहः, बलिनोर्वैरिणोर्मध्ये काकाक्षिवदलक्षितस्य उभयत्र वाचा समर्पणम्, शत्रोर्मूलप्रकृतिभिः सह सन्धाय शत्रुणा सह विरोध, शत्रुणैव संधिविग्रह समुदायहेतोः दुर्गाश्रयस्य व्यापारो वा इति चतुर्विधं द्वैधम्।
६. बलवता रिपुणा उच्छिद्यमानस्य हीनशक्तेः यद् बलवद्धर्मविजयिसमाश्रयणं तदाश्रयः। बलिनः शत्रोः सेवया धनादिदानेन वा आश्रयणमाश्रयः। उक्तं च—उच्छिद्यमानो रिपुणा निरुपायप्रतिक्रियः। शक्तिहीनः संश्रयते बलिनं धार्मिकं नृपम् ॥ इति ॥
७. कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरबलादानं शून्यानां च निवेशनम् ॥ इत्यष्टवर्गः।

स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्।
भेदो दण्डः साम दानमित्युपायचतुष्टयम् ॥२०॥
साहसं तु दमो दण्डः साम सान्त्वमथो समौ।
भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥२१॥

---

यत्तेजः कोशदण्डजम् स इति सम्बन्धः—प्रतापः ( प्रतापयति अनेन इति ण्यन्तात् घः ) प्रभावः ( भवत्यनेन घञ् भावः, प्रकृष्टो भावः ) ये दो पुं० नाम कोश-दण्डज ( कोशः = धनम्, दण्डः दमः सैन्यञ्च ताभ्यां जातम् इति डः )—[१] तेज के हैं।

[२] भेदः ( भेदनम् इति घञ् ) [३] दण्डः (दमनम् इति डः ) साम ( सामनम् इति बाहुलकात् कनिन् ) [४] दानम् ( स्वस्य धनस्य परेभ्यः प्रतिपादनम् ) ये ४ नाम राजाओं के [५] उपायः ( उपायतेऽनेन इति घञ् पुं० ) के हैं। जिनमें १–२ पुं०, ३–४ नपुं० हैं। शत्रु के मन्त्री आदि को जिस उपाय के द्वारा एक को दूसरे से अलग कर अपने पक्ष में किया जाता है उस उपाय को 'भेद' कहते हैं। अपराधियों को किये जानेवाले शासन को 'दण्ड' कहते हैं। प्रियवचनों से क्रोध शान्त करने को 'साम' कहते हैं। अपने धनको दूसरे के लिये देनेको 'दान' कहते हैं।

[६] साहसम् ( सहसि बले भवम् इति अण् ) [७] दण्डः ( दमनम् इति अमन्ताड्डः ) [८] दमः ( दमनम् इति घञ् वृद्ध्यभावश्च ) ये ३ नाम दण्ड के हैं जिनमें १ न०, २–३ पुं० हैं।

साम ( सामनम् इति मनिन् ) सान्त्वम् ( सान्त्वनम् इति घञ् ) ये २ न० नाम शान्त करने के हैं।

[९] भेदः ( भेदनम् इति घञ् ) उपजापः ( उपांशु जपनम् इति घञ् ) ये २ पुं० नाम भेद के हैं। समौ = समानार्थौ इति सम्बन्धः।

उपधा ( उपधीयते शुद्धिज्ञानमत्र इति अङ् ) यह १ स्त्री० नाम मन्त्री के धर्म, धन, काम, भयादि के ज्ञान की राजा द्वारा परीक्षा करने का है ॥ २१ ॥

---

१. अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्। प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ इति भरतः ॥

२. स्नेहरागापनयनं संहर्षोत्पादनं तथा। संतर्जनं च भेदज्ञैः भेदस्तु त्रिविधः स्मृतः ॥

३. वधोऽर्थग्रहणं चैव परिक्लेशस्तथैव च। इति दण्डविधानज्ञैर्दण्डस्तु त्रिविधः स्मृतः ॥ परिक्लेशो बन्धनताडनादिः। ४. प्रतिदानं तथा तस्य गृहीतस्यानुमोचनम्। द्रव्यादानमपूर्वं च स्वयं ग्राह-प्रवर्तनम्। देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम्। ५. उपायानां चतुष्टयम् इति। उपायः सामभेदादौ तथैवोपगतः पुमान्। इति मेदिनी। सामं दानञ्च भेदश्च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिता। इति। अन्यत्र सप्तोपायाः उक्ताः।

६. साहसं तु दमे दुष्करकर्मणि। अविमृश्य कृतौ धाष्ट्र्ये। इति हैमः। ७. दमः स्यात्कर्दमे दण्डे दमने दमथेऽपि च। हेमचन्द्रः। ८. दण्डः सैन्ये दमे यमे। मानव्यूहग्रहभेदेष्वश्वेऽर्थानुचरे मथि। प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः ॥ इति हैमः। ९. भेदो द्वैधे विशेषे स्यादुपजापे विदारणे। इति विश्वमेदिन्यौ।

पश्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः ।
विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥२२॥
रहश्चोपांशु चालिंगे रहस्यं तद्भवे त्रिषु ।
समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात् ॥२३॥
अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।
युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥२४॥

---

अषडक्षीणः ( अविद्यमानानि षड् अक्षीण्यत्र इति स्वार्थे खः ) यह १ त्रि० नाम केवल २ व्यक्तियों के गुप्त वार्ता करने का है । पंच त्रिषु = निःशलाकान्त ५ नाम त्रिलिंग हैं ।

[1]विविक्तः ( विविच्यन्ति जना अत्रेति क्तः ) विजनः ( विगतो जनोऽस्मात् ) [2]छन्नः ( छद्यते स्मेति क्तः इडभावश्च ) [3]निःशलाकः ( निर्गता शलाकाऽप्यस्मात् ) [4]रहः ( रह्यते इति असुन् ) रहः ( अव्ययम् ) [5]उपांशु ( उपगतः अंशुः किरणः अत्र ) ये ७ नाम एकान्त के हैं। जिनमें ४ त्रि०, १ न०, २ अव्यय हैं अलिङ्गे = द्वे अव्यये ॥ २२ ॥

[6]रहस्यम् ( रहो भवम् इति यत् ) यह १ त्रि० नाम गुप्त मत का है ।

[7]विस्रम्भः ( विस्रम्भणम् इति घञ् ) विश्वासः ( विश्वसनम् इति घञ् ) ये २ पुं० नाम विश्वास के हैं ।

भ्रेषः ( भ्रेषणम् इति घञ् ) यह १ पुं० नाम अधःपतन का है। यथोचितात् = यथाप्राप्तात् भ्रंशः = अधःपतनमित्यन्वयः ।

अभ्रेषः ( भ्रेषादन्यः इति घञ् ) न्यायः ( नियमेन ईयते इति घञ् ) [8]कल्पः ( कल्पनम् इति घञ् लत्वञ्च ) देशरूपम् ( दिश्यते घञ्, देशो रूपमस्येति ) समञ्जसम् ( सम्यगञ्जोऽत्र इति अच् ) ये ५ नाम न्याय के हैं । जिनमें ३ पुं० और २ नपुं० हैं ।

[9]युक्तम् (युज्यते स्मेति क्तः) औपयिकम् (उपयन्त्यनेति अच्, उपाय एवेति ठक् ह्रस्वश्च) [10]लभ्यम् ( लभ्यते इति यत् ) भजमानम् ( भजते फलमनुबध्नाति इति चानश्, शानच् वा ) [11]अभिनीतम्

---

१. विविक्तं त्रिष्वसंपृक्ते रहःपूतविवेकिषु । इति मेदिनी । २. छिन्नं तु रहसि क्लीबं छादिते वाच्यलिङ्गकम् । इति मेदिनी । ३. शल्यं श्वाविच्छलाका स्वाच्छ्वो मदनशारिका । इति तालव्यादौ रभसः । ४. रहस्तत्त्वे रते गुह्ये । इति मेदिनी । रहो निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम् । इति रभसः । ५. उपांशुर्जपभेदे स्यात् उपांशु विजनेऽव्ययम् । इति विश्व-हैम-मेदिन्यः । ६. रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत् । इति मेदिनी । ७. विश्रम्भः केलिकलहे विस्वासे प्रणयेऽपि च । इति विश्वमेदिन्यौ । ८. कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने । इति मेदिनी ।

९. युक्तो युक्तो पृथग्भूते क्लीबं हस्तचतुष्टये । इति मेदिनी ।

१०. लभ्यं युक्ते च लब्धव्ये । इति मेदिनी ।

११. अभिनीतं संस्कृतं च न्याय्ये चामर्षणे त्रिषु । इति रुद्रः । अभिनीतं त्रिषु न्याय्ये संस्कृतामर्षिणोरपि । इति मेदिनी ।

**न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम् ।**
**अववादस्तु निर्देशो निदेशः शासनं च सः ॥२५॥**
**शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः ।**
**आगोऽपराधो मन्तुश्च समे तूद्दानबन्धने ॥२६॥**
**द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः ।**
**घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं सु प्रदेशनम् ॥२७॥**

---

( अभिनीयते स्मेति क्तः ) न्याय्यम् ( न्यायादनपेतम् इति यत् ) ये ६ त्रि० नाम न्याययुक्त कार्य के हैं ॥ २४ ॥

संप्रधारणा ( संप्रधारणम् इति युच् ) समर्थनम् ( समर्थितम् इति अर्थ उपयाच्ञायाम् इति संपूर्वकात् ल्युट् ) ये २ नाम अनुचित और उचित का विचार करके निश्चय करने के हैं, जिनमें १ स्त्री० २य नपुं० हैं ।

अववादः ( अव = कार्यमवलम्ब्य वदनमत्रेति घञ् ) [1]निर्देशः ( निर्देशनम् निःपूर्वकाद्दिशधातोः घञ् ) निदेशः ( निदेशनम् घञ् ) [2]शासनम् ( शास्त्यनेनेति शासेर्ल्युट् ) शिष्टिः ( शासनम् इति क्तिन् , शास्तिः इत्यत्र तिः ) आज्ञा ( आज्ञापनम् इत्यङ् ) ये ६ नाम आज्ञा के हैं। जिनमें १–३ पुं०, ४ र्थ नपुं०, ५–६ स्त्री० हैं ॥ २५ ॥

[3]संस्था ( संतिष्ठतेऽनया इति अङ् ) मर्यादा ( 'मर्या' इति सीमार्थेऽव्ययम् , तत्र दीयते इत्यङ् ) [4]धारणा ( धारयति धर्मम् इति युच् ) स्थितिः ( तिष्ठन्त्यत्र इति क्तिन् ) ये ४ स्त्री० नाम उचित मार्ग पर रहने के हैं ।

[5]आगः ( एति इति असुन् , आगादेशश्च ) अपराधः ( अपराधनम् इति अपपूर्वकाद् राधधातोः घञ् ) मन्तुः ( मन्यते इति तुः ) ये ३ नाम अपराध के हैं जिनमें १म नपुं०, २–३ पुं० हैं ।

उद्दानम् ( उदितम् , उपूर्वाद् द्यतेर्भावे ल्युट् ) बन्धनम् ( बद्धम् बन्धबन्धने इति भावे ल्युट् ) ये २ न० नाम बन्धन के हैं । समे = समानार्थे ।

द्विपाद्यः ( द्वौ पादौ परिमाणमस्येति यत् प्राण्यङ्गत्वाभावात् न पद्भावः ) यह १ पुं० नाम दुगुने दण्ड का है ।

भागधेयः ( भाग एव इति धेयप्रत्ययः ) [6]करः ( कीर्यते इति अप् ) बलिः ( बल्यते इति इन् ) ये ३ नाम मालगुजारी के हैं।

[7]शुल्कः ( शुल्क्यते इति घञ् ) यह १ पुं० न० नाम जङ्गल घाट नदी इत्यादि की आमदनी से दिये जानेवाले टैक्स का है ।

---

१. निदेशः शासनोपान्तकथनेषु प्रयुज्यते। इति विश्वः। २. शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु। इति मेदिनी। ३. संस्थश्चरेऽवस्थिते स्त्री स्थितौ सादृश्यनाशयोः। इति मेदिनी।
४. धारणाऽङ्गं च योगेऽस्य न पुंसि स्याद्धिधारणे। इति मेदिनी। ५. आगोऽपराधे पापे स्यात्। इति मेदिनी। ६. करो वर्षोपले पाणौ रश्मौ प्रत्ययशुण्डयोः। इति मेदिनी। कारो वधे निश्चये च वलौ रत्ने यतावपि। इति विश्वमेदिन्यौ। ७. शुल्कं घट्टादिदेये स्याद्दरादर्थग्रहेऽस्त्रियाम्। इति मेदिनी।

उपायनमुपग्राह्यमुपहारस्तथोपदा।
यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥२८॥
तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः।
सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम् ॥२९॥
अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ।
महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥३०॥

---

प्राभृतम् ( प्राभ्रियते स्मेति क्तः ) प्रदेशनम् ( प्रादेश्यते इति ल्युट् ) ये २ नाम देवता तथा मित्र को प्रसन्न करने के लिए दिये जानेवाले पदार्थ उपहार का है ॥ २७ ॥

उपायनम् ( उपेयते इति कर्मणि ल्युट् ) उपग्राह्यम् ( उपगृह्यते इति ण्यत् ) उपहारः ( उपह्रियते इति घञ् ) उपदा ( उपदीयते इति अङ् ) ये ४ नाम क्रमशः २ न०, १ पुं०, १ स्त्री० दिए जानेवाले उपहार के हैं।

[1]यौतकम् ( युतकम् = योनिसम्बन्धः इति तत्र भवम् इति अण् युतयोर्वरवध्वोरिदं वा यौतं तदेव इति कः ) सुदायः ( सुद्दीयते इति घञ् युगागमश्च ) [2]हरणम् ( ह्रियते इति ल्युट् ) ये ३ नाम उपनयन एवं विवाह संस्कार में दिये जानेवाले द्रव्य के हैं जिनमें १, ३ नपुं०, २य पुं० हैं।

तत्कालः ( स चासौ कालश्च ) तदात्वम् ( तदा इत्यस्य भावः इति त्वः ) ये २ नाम क्रमशः १ पुं०, १ न० वर्तमान काल के हैं।

[3]आयतिः ( आयंस्यन्तेऽत्रेति क्तिन् ) यह १ स्त्रीलिङ्ग नाम भविष्य काल का है।

सांदृष्टिकम् ( संदृष्टौ प्रत्यक्षे भवम् इति ठञ् ) यह १ न० नाम कार्योपरान्त सद्यः मिलनेवाले फल का है।

उदर्कः ( उदर्क्यते इति घञ् ) यह १ पुं० नाम भविष्य में होने वाले फल का है ॥ २९ ॥

अदृष्टम् ( न दृष्टम् अदृष्टहेतुकत्वाददृष्टम् इति क्तः ) यह १ न० नाम अग्नि जल इत्यादि से होने वाले भय का है। वह्निश्च तोयं च आदिर्यस्य तत् इति सम्बन्धः। आदिना 'हुताशनो जलं व्याधिर्दुर्भिक्षं मकरस्तथा। अतिवृष्टिरनावृष्टिर्मूषिकाः शलभादयः॥' गृह्यन्ते।

दृष्टम् ( दृश्यते स्मेति क्तः ) यह १ न० नाम चोर, जङ्गल दाह, चढ़ाई आदि के भय का है। स्वश्च परश्च स्वपरौ तयोश्चक्रे = सैन्ये ताभ्यां जातम् भयम् इति सम्बन्धः।

अहिभयम् ( अहिरिव भयं वा अहेर्भयम् इति अच् ) यह १ न० नाम राजाओं के अपने पक्ष से होने वाले भय का है। गृहस्थत्वादावृताकारत्वाच्च स्वस्य पक्ष एव अहिः। स्वपक्षात्प्रभवति इति पचाद्यच्। 'निजोऽथ मैत्रश्च समाश्रितश्च सम्बन्धतः कार्यसमुद्भवश्च। भृत्या गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति ॥'

---

१. युतकं युगले युक्ते संशयेऽपि च। इति रभसः। युतकं संशये युगे। नारीवस्त्राञ्चले युक्ते चलनाग्रे च यौतके। इति मेदिनी। २. हरणं यौतकादीनां द्रव्ये भुजे हृतावपि। इति मेदिनी।
३. आयतिस्तु स्त्रियां दैर्घ्यं प्रभावागामिकालयोः। इति मेदिनी।

प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम् ।
नृपासनं यद्भद्रासनं सिंहासनं तु तत् ॥३१॥
हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् ।
भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका ॥३२॥
निवेशः शिबिरं षण्ढे सज्जनं तूपरक्षणम् ।
हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥३३॥

---

[1]प्रक्रिया ( प्रकर्षाय करणम् इति श रिङ् च ) अधिकारः ( अधि आधिक्यस्य करणम् इति घञ् ) ये २ नाम छत्रधारणादि व्यापार के हैं जिनमें १म स्त्री० २य पुं० है ।

[2]चामरम् ( चमति चम्यते वा अनेन इत्यरः ) [3]प्रकीर्णकम् ( प्रकीर्यते रमेति क्तिः कन् च ) ये दो न० नाम चंवर के हैं ।

नृपासनम् ( नृपस्य आसनम् ) भद्रासनम् ( भद्रं च तदासनम् च ) ये दो न० नाम मणि आदि से निर्मित राजा के आसन के हैं ।

सिंहासनम् ( सिंहाकारमासनम् ) यह १ न० नाम स्वर्ण से बने हुए राजा के सिंहासन का है । तत् = नृपासनम् हैमम् = स्वर्णनिर्मितम् । इति सम्बन्धः ।

छत्रम् ( छादयति अनेन, ण्यन्तात् ष्ट्रन् ह्रस्वश्च ) आतपत्रम् ( आतपात्त्रायते इति कः ) ये २ न० नाम छाता के हैं ।

नृपलक्ष्म ( नृपस्य लक्ष्म, तत् छत्रमिति सम्बन्धः ) यह १ न० नाम राजा के छाते का है ।

भद्रकुम्भः ( भद्रस्य, भद्रो वा कुम्भः ) पूर्णकुम्भः ( पूर्णः कुम्भः ) ये २ पुं० नाम कल्याणार्थ जल से परिपूर्ण घड़े के हैं ।

भृङ्गारः ( बिभर्ति जलम् इति निपातनात् साधुः ) कनकालुका ( कनकस्यालुः इति कन् ) ये २ नाम क्रमशः १ पुं०, २ स्त्री० स्वर्णपात्र विशेष के हैं ॥ ३२ ॥

[4]निवेशः ( निविशन्तेऽत्र इति घञ् ) शिबिरम् ( शवन्त्यत्रेति बाहुलकात् किरच् आद्यचः इत्वं च ) ये २ नाम सेना के निवास की जगह के हैं जिनमें १म पुं०, २य नपुं० हैं । षण्ढे = क्लीबे ।

सज्जनम् ( संजन्ते, संजन्त्यनेन वा इति ल्युट् ) उपरक्षणम् ( उपरक्ष्यते अनेन इति ल्युट् ) ये २ न० नाम सेना की रक्षा के लिए नियत किये हुए पहरे का है ।

[5]हस्त्यश्वरथपादातमेतच्चतुष्टयम्—सेनाङ्गम् ( सेनाया अङ्गम्, पदातीनां समूहः इति अण्

---

१. प्रक्रिया तूत्पादने स्यात् अधिकारप्रकारयोः । इति हेमचन्द्रः ।
२. चमरं चामरे स्त्री तु मञ्जरी मृगभेदयोः । इति मेदिनी । चमरश्चामरे दैत्ये चमरी तु मृगान्तरे । इति हैमः । चामरा चामरं वालव्यजनं रोमगुच्छकम् । इति रभसः ।
३. प्रकीर्णकं चामरे स्याद्विस्तरे ना तुरङ्गमे । इति मेदिनी ।
४. निवेशः सैन्यविन्यासे न्यासे रङ्गविवाहयोः । इति हैमः ।
५. नौकादीनां रथेषु, नाविककिरातादीनां पदातौ, महिषादीनां गजाश्वेऽन्तर्भावः ।

दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥३४॥
इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः ।
मदोत्कटो मदकलः कलभः करिशावकः ॥३५॥
प्रभिन्नो गर्जितो मत्तः समावुद्वान्तनिर्मदौ ।
हास्तिकं गजता वृन्दे करिणी धेनुका वशा ॥३६॥

---

पादातम्, हस्तिनश्च अश्वाश्च रथाश्च पादातं च इति हस्त्यश्वरथपादातम् सेनाङ्गत्वादेकवद्भावः । चत्वारोऽवयवाः यस्येति तयप् ) हाथी, घोड़ा, रथ, पैदल ये ४ सेना के अङ्ग हैं ॥ ३३ ॥

दन्ती ( अतिशयितौ दन्तौ अस्येति इनिः ) दन्तावलः ( अतिशयितौ दन्तौ अस्येति वलच् दीर्घश्च ) हस्ती ( हस्तः शुण्डः अस्यास्ति इति इनिः ) द्विरदः ( द्वौ रदावस्येति कः ) अनेकपः ( अनेकेन करेण शुण्डादण्डेन मुखेन च पिबति कः ) द्विपः ( द्वाभ्यां पिबति इति कः ) मतङ्गजः ( मतङ्गजाद् ऋषेः जातः इति डः ) गजः ( गजति इति अच् ) नागः [१] ( न अगः, नगे भवो वेति अण् ) [२]कुञ्जरः ( अतिशयितः कुञ्जो हनुरस्येति रः ) [३]वारणः ( वारयति शत्रुबलम् इति ल्युः ) करी ( करोऽस्यास्ति इति इनिः ) इभः ( एति ईयते वेति भः ) [४]स्तम्बेरमः ( स्तम्बे रमते इति अच् ) पद्मी ( पद्मं बिन्दुजालमस्त्यस्येति इनिः ) ये १४ पुं० नाम गज के हैं ॥ ३४ ॥

यूथनाथः ( यूथस्य गजसमूहस्य नाथः ) यूथपः ( यूथं पाति इति कः ) ये २ पुं० नाम समूह के स्वामी का है ।

मदोत्कटः ( मदेन दानाम्बुनोत्कटः इति ) मदकलः ( मदेन कलते इति अच् ) ये २ पुं० नाम मतवाले हाथी के हैं ।

कलभः ( कलते इति अच्, कलं भाषते इति डः ) करिशावकः ( करिणः शावकः ) ये २ पुं० नाम हाथी के बच्चे के हैं ॥ ३५ ॥

प्रभिन्नः ( प्रकर्षेण भिद्यते स्मेति क्तः ) [५]गर्जितः ( गर्जयति इति क्तः ) मत्तः (माद्यति इति क्तः नत्वाभावश्च ) ये ३ पुं० नाम मतवाले हाथी के हैं ।

उद्वान्तः ( उद्गतं वान्तं मदवमनमस्मात् ) निर्मदः ( निर्गतः मदोऽस्मात् ) ये २ पुं० नाम मदरहित हाथी के हैं ।

हास्तिकम् ( हस्तिनां समूहः इति ठक् ) गजता ( गजानां समूहः इति तल् ) ये २ नाम गज-समूह के हैं । जिनमें प्रथम नपुं० द्वितीय स्त्री० हैं ।

---

१. नागो मतङ्गजे सर्पे पुंनागे नागकेसरे । क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च ॥ देहानिल-विशेषे च श्रेष्ठे, स्यादुत्तरस्थितः । नागं रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे ॥ इति हैमः ।

२. कुञ्जरोऽनेकपे केशे कुञ्जरा धातकीद्रुमे । पाटलायां च । इति हेमचन्द्रः । ३. वारणं प्रतिषेधे स्यात् वारणस्तु मतङ्गजे । इति विश्वः । ४. स्तम्बो गुल्मे तृणादीनामकाण्डद्रुमगुच्छयोः । इति विश्वः ।

५. गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे । इति विश्वमेदिन्यौ ।

**गण्डः कटो मदो दानं वमथुः करशीकरः ।**
**कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ॥३७॥**
**अवग्रहो ललाटं स्यादिषीका त्वक्षिकूटकम् ।**
**अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ॥३८॥**

---

करिणी ( करोऽस्त्यस्याः इति इनिः ङीप् च ) [१]धेनुका ( धेनुरिवेति कन् ) वशा[२] ( उश्यते इति अप् ) ये स्त्री० नाम हथिनी के हैं ॥ ३६ ॥

[३]गण्डः ( गण्डति इति अच् ) [४]कटः ( कटति इति अच् ) ये २ पुं० नाम हाथी के गाल के हैं।

[५]मदः (माद्यति अनेनेति अप् मदयतीति अच् वा) दानम्[६] (द्यति अनेनेति ल्युट् आदेरच आत्वम्) ये २ न० नाम गज के मद के हैं। जिनमें १म पुं० २य नपुं० हैं !

[७]वमथुः ( वम्यते इति अथुच् ) करशीकरः ( करस्य शीकरः इति ) ये २ पुं० नाम हाथी के सूंड़ से निकले हुए पानी के छीटों के हैं।

शिरसः पिण्डौ इति सम्बन्धः:—[८]कुम्भः ( कुं=भुवमुम्भति इति अण् शकन्ध्वादिः ) पिण्डः[९] ( पिण्डते इति अच् ) यह १ पुं० नाम गज के मस्तक के ऊपर वाले दोनों मांसपिण्डों का है।

तयोः = कुम्भयोः मध्ये—विदुः ( वेत्ति संज्ञामत्र घातेनेति बाहुलकात् कुः ) यह १ पुं० नाम गज के ऊपर वाले दोनों मांसपिण्डों के बीच वाले भाग का है ॥ ३७ ॥

अवग्रहः[१०] ( अवगृह्यतेऽङ्कुशेनेति अप् ) यह १ पुं० नाम गज के ललाट का है ।

ईषीकका ( इष्यते इति ईकन् धातोर्ह्रस्वश्च, ह्रस्वादिर्दीर्घमध्या, ईषा = लाङ्गलकीलिका सेव इति कनि ह्रस्वः ह्रस्वमध्या, दीर्घादिश्च । अक्षिकूटकम् = चक्षुर्गोलकम् ) यह स्त्री० नाम हाथ की आँख के गोलाकार भाग का है।

अपाङ्गस्य देशः—निर्याणम्[११] ( निर्यात्यनेनेति करणे ल्युट् ) यह १ नपुं० नाम हाथी की आँख के के किनारे भाग का है।

---

१. स्याद्धेनुका करिण्यां च धेनावपि पुंसि दानवविशेषे । इति मेदिनी ।

२. वशा नार्यां बन्ध्यगव्यां हस्तिन्यां दुहितर्यपि । इति हैमः ।

३. गण्डः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यंगे पिटकेऽपि च । चिह्नवीरकपोलेषु हयभूषणबुद्बुदे । इति मेदिनी । ४. कटः श्रोणौ द्वयोः पुंसि कलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि पिप्पली तु कटी मता ॥ इति मेदिनी ।

५. मदो रेतसि कस्तूर्याम् गर्वे हर्षेभदानयोः । इति मेदिनी । ६. दानं गजमदे त्यागे पालनच्छेदशुद्धिषु । इति विश्वमेदिन्यौ । ७. वमथुर्वमने ग्रासे मातङ्गकरशीकरे । इति हैमः । ८. कुम्भो राश्यन्तरे हस्तिमूर्धांशे राक्षसान्तरे । कार्मुके वारनार्यां च घटे क्लीबं तु गुग्गुलौ । इति मेदिनी । ९. पिण्डो बाले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिल्हकयोरपि । ओड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः । इति मेदिनी । १०. अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके । इति मेदिनी । रुद्रश्च—गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रहः ।

११. निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे । इति मेदिनी ।

अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् ।
आसनं स्कन्धदेशः स्यात् पद्मकं बिन्दुजालकम् ॥३९॥
पक्षभागः पार्श्वभागो दन्तभागस्तु योऽग्रतः ।
द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥४०॥

---

चूलिका[1] ( चूल्यतेऽनयेति ण्वुल् अस्य कर्णयोः मूलमिति सम्बन्धः ) यह १ स्त्री० नाम गज के कनपटी ( कान की जड़ वाले भाग ) का है ॥ ३८ ॥

कुम्भस्य अधः—[2]वाहित्थम् ( अवश्यं वहति इति णिनिः, स तिष्ठत्यत्र इति घञर्थे कः सस्य तः पृषोदरादिः ) यह १ न० नाम हाथी के ऊपर वाले दोनों मांसपिण्डों के नीचे वाले भाग का है।

अस्य = वाहित्थस्य यत् अधः—प्रतिमानम्[3] ( प्रतिमीयतेऽनेनेति ल्युट् आत्वं च ) यह १ न० नाम हाथी के दोनों दांतों के बीच वाले भाग का है।

[4]आसनम् ( आस्यतेऽत्रेति ल्युट् ) यह १ न० नाम गजस्कन्ध ( हस्तिपक—महावत—के बैठने की जगह ) का है।

[5]पद्मकम् ( पद्ममिवेति कन् ) बिन्दुजालकम् ( बिन्दूनां जालकमिव ) ये २ न० नाम हाथियों के मुँह में पद्माकार छोटे-छोटे लाल-लाल चिह्नविशेष के हैं ॥ ३९ ॥

पक्षभागः ( पक्षयत्यनेनेति घः, पक्षस्य पक्ष एव वा भागः ) पार्श्वभागः ( पार्श्वस्य पार्श्व एव वा भागः ) ये २ पुं० नाम हाथी के बगल के हैं।

योऽग्रतः भागः सः—दन्तभागः ( दन्तस्य भागः ) यह १ पुं० नाम हाथी के अग्रभाग का है।

[6]गात्रम् ( गातेऽनेनेति ष्ट्रन् ) [7]अवरम् ( अवराति इति कः ) ये २ न० नाम क्रमशः हाथी के पूर्वार्द्ध व परार्द्ध शरीर भाग के हैं। पूर्वा च पश्चाच्च, पूर्वपश्चाच्च ते जङ्घे च। पूर्वपश्चाज्जङ्घे आदी यस्य सः। पूर्वपश्चादिश्चासौ देशश्चेति। क्रम से पूर्वजङ्घावाले प्रदेश गात्र हैं और परजंघा वाले प्रदेश अवर हैं।

---

१. चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्। इति मेदिनी।

२. वाहित्थं वातकुम्भाधः । इति भागुरिः। स च ललाटाऽधो भागः। कुम्भयोरन्तरं विदुः। वातकुम्भस्तु तस्याधो वाहित्थं तु ततोऽप्यधः। हैमनाममाला। ३. प्रतिमानं प्रतिच्छाया गजदन्तान्तरालयोः। इति रुद्रः। ४. आसनं द्विरदस्कन्धे पीठे यात्रानिवर्तने। इति विश्वमेदिन्यौ।

५. पद्मकं स्यात्पद्मकाष्ठबिन्दुजालकयोरपि। इति मेदिनी।

६. गात्रं गजाग्रजंघादिभागेऽप्यङ्गे कलेवरे। इति मेदिनी। ७. अवरं गजान्त्यजंघादिदेशे चरमे त्रिषु इति मेदिनी। गजान्त्यजंघादिदेशेऽवरं स्याच्चरमे त्रिषु। इति रुद्रः। गात्रावरे पूर्वपश्चात् पादयोः परिभाषिते। इति भागुरिः। द्वौ पूर्वपश्चाज्जंघादिदेशौ गात्रावरे न ना। इति रभसः। अपरं तूत्तरार्धे स्यात्पश्चाद् भागे च दन्तिनाम्। इति विश्वः।

तोत्रं वैणुकमालानं बन्धस्तम्भेऽथ शृङ्खले ।
अन्दुको निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः स्त्रियाम् ॥४१॥
दूष्या कक्ष्या वरत्रा स्यात् कल्पना सज्जना समे ।
प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥४२॥
वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी ।

---

[1]तोत्रम् ( तुद्यतेऽनेनेति ष्ट्रन् ) वैणुकम् ( वेणुना निर्वृत्तम् इति ठक् ) ये २ न० नाम हाथी को ताडना देने वाले दण्डे अंकुश ( तोदनदण्ड ) के हैं।

आलानम् ( आलीयतेऽत्रेति ल्युट् आत्वञ्च ) बन्धस्तम्भः ( बन्धस्य = बन्धनस्य स्तम्भः ) यह १ न० नाम गज को बाँधने वाले खूँटे का है। जिनमें १म नपुं० द्वि० पुं० हैं।

शृङ्खलम्[2] ( शृङ्गं प्राधान्यं खलति इति अच् ) अन्दुकः ( अन्द्यतेऽनेनेति कुः स्वार्थे कन् च ) निगडः ( निर्गतो गडः = सेचनमस्मात् इति अच् ) ये ३ नाम हाथी को बाँधने वाली सिकड़ी के हैं। जिनमें १म त्रि०, २य पुं०, ३य पुं० न० हैं।

अङ्कुशः ( अङ्क्यतेऽनेनेति निपातनात् साधुः ) सृणिः ( सरति अन्तर्गच्छति अनया वेति निः किच्च ) ये २ नाम अङ्कुश के हैं। जिनमें १म पुं० नपुं० हैं और द्वितीय स्त्री० हैं।

दूष्या[3] ( दूष्यतेऽनयेति ण्यन्तः ऊत्, यत् च ) कक्ष्या[4] ( कक्षे भवेति यत् ) वरत्रा ( व्रियतेऽनयेति बाहुलकादत्रः ) ये ३ स्त्री० नाम हाथी को कसने वाले रस्से का है।

[5]कल्पना ( कल्पनम् इति युच् ) [6]सज्जना ( सज्जनमिति युच् ) ये २ स्त्री नाम गेरू आदि से हाथी की सजावट करने के हैं।

[7] प्रवेणी ( प्रकर्षेण वीयतेऽस्यामिति निः ) आस्तरणम् ( आस्तीर्यते अनेन इति ल्युट् ) [8]वर्णः ( व्रियतेऽनेनेति नः, वर्णाः सन्त्यस्यति अर्शआद्यच् वा ) परिस्तोमः ( परिस्तूयते इति मन् ) [9]कुथः ( कुन्थति अशोभाम् इति कः आगमशास्त्रस्यानित्यत्वान्न नुम् ) ये ५ नाम हाथी के झूल के हैं। जिनमें १म स्त्री०, द्वि० नपुं०, ३–४ पुं० और ५ वाँ पुं० स्त्री० है।

[10]वीतम् ( वेति स्म युद्धादिकर्मणः इति क्तः ) यह १ न० नाम यद्ध में असमर्थ हाथी घोड़े का है। असारं = निर्बलं हस्त्यश्वमिति सम्बन्धः।

---

१. तोत्रं तु प्राजने वैणुकेऽपि च। इति मेदिनी।

२. शृखला पुंस्कटी काञ्च्यां लोहरज्जौ च बन्धने। इति हैमः। शृंखला पुंस्कटीवस्त्रबन्धेऽपि निगडे त्रिपु। इति मेदिनी। ३. दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे। इति मेदिनी। ४. कक्ष्या वृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने। हर्म्यादीनां प्रकोष्ठे च कार्ये हेतौ प्रयोजने। इति मेदिनी। ५. अथ कल्पना। करिणः सज्जनायां स्त्री क्लीबं क्लृप्तौ च कल्पने। इति मेदिनी। ६. सज्जनं तु भवेत्क्लीबमुपरक्षणघट्टयोः। वाच्यलिङ्गं कुलीने स्यात्कल्पनायां च योषिति॥ इति मेदिनी। ७. प्रवेणिः स्त्री कुथावेण्योः। इति मेदिनी। ८. वर्णः स्वर्णव्रते स्तुतौ। रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे। भेदे गीतक्रमे चित्रे यशस्तालविशेषयोः॥ अंगरागे च वर्णं तु कुंकुमे। इति हैमः।

९. कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि। इति मेदिनी। १०. वीतमसारगजे स्यादंकुशकर्मण्यसारतुरगे च। इति मेदिनी।

घोटके पीतितुरगतुरंगाश्वतुरंगमाः ॥४३॥
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ॥४४॥
वनायुजाः पारसीकाः काम्बोजा बाह्लिका हयाः ।

---

[1]वारी ( वार्यतेऽनयेति ईञ् ) गजबन्धनी ( बध्यतेऽस्यामिति अधिकरणे ल्युट् गजस्य बन्धनी ) ये २ स्त्रीलिङ्ग नाम हाथी बांधने की जगह के हैं।

[2]घोटकः ( घोटते इति ण्वुल् ) [3]पीतिः ( पिबति इति क्तिन् ईत्वञ्च ) [4]तुरगः ( तोरणम् इति घञर्थे कः, बाहुलकात् घञ् वा वृद्धिनिषेधश्च, तुरेण=त्वरया गच्छति इति डः ) तुरङ्गः ( तोरणम् इति कः, तुरेण गच्छतीति खच्, डित् वा मुम् च ) अश्वः ( अश्नुते इति क्वन् ) तुरङ्गमः ( तुरेण गच्छति इति खच् मुम् च, खचः डित्वाभावे ) [5] वाजी ( अवश्यं वजति इति णिनिः ) [6]वाहः ( उह्यतेऽनेनेति कर्मणि करणे वा घञ् ) [7]अर्वा ( ऋच्छति इति वनिप् गुणश्च )
[8]गन्धर्वः ( गन्धमर्वति इति कर्मण्यण्, शकन्ध्वादिः ) हयः ( हयति इति अच् ) [9]सैन्धवः ( सिन्धुषु भवः इत्यण् ) सप्तिः ( सपति सेनायां समवैति इति क्तिच्, बाहुलकात्तिर्वा ) ये १३ पुं० नाम घोड़े के हैं।

[10]आजानेयः ( अजनम् इति घञ्, अजेन क्षेपेणानेयः=प्रापणीयः आयत्तो वा ) कुलीनः ( कुलस्यापत्यम् इति खः ) ये २ पुं० नाम कुलीन घोड़े के हैं।

[11]विनीतः ( विनीयते स्मेति क्तः, ) साधुवाही ( साधु बहनशीलः इति णिनिः ) ये २ पुं० नाम चाल की शिक्षा दिये हुए घोड़ों के हैं ॥ ४४ ॥

वनायुजः ( वनायुषु देशेषु जातः इति जनेर्डः ) पारसीकः ( पारसीके देशे भवः इति अण् ) काम्बोजः

---

१. वारी स्याद् गजबन्धन्यां कलस्यामपि योषिति । वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेऽम्बुनि बालुके ॥ इति मेदिनी । २. घोटसैन्धवगन्धर्वा हयवाजितुरंगमाः । इति रभसः ।
३. पीतिर्नाश्वे स्त्रियां पाने । इति मेदिनी । पीतिरश्वेऽशने गतौ । प्रजने धावने दीप्तौ । इति हैमः
४. तुरगी चाश्वगन्धायां तुरगश्चित्तवाजिनोः । इति मेदिनी ।
५. वाजी वाणाश्वपक्षिषु । इति मेदिनी ।
६. वाहो भुजे पुमान् मानभेदाश्ववृषवायुषु । इति मेदिनी ।
७. अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः । इति मेदिनी ।
८. गन्धर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे । अन्तराभवदेहे च । इति हैमः । ९. सैन्धवस्तु सिन्धुदेशोद्भवे हये । मणिमन्थेऽपि । इति हैमः । १०. अश्वं कुलीनमाजानेयं, शावं किशोरं ब्रुवते । इति नाममाला । शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदे पदे । आजानन्ति यतः संज्ञामाजनेयास्ततः स्मृताः ॥ इत्यश्वशास्त्रम् । ११. विनीतः सुवहाश्वे स्यात् वणिज्यपि पुमांस्त्रिषु । जितेन्द्रियेऽपनीते च निभृते विनयान्विते ॥ इति मेदिनी ।

**ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः । ४५॥**
**पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः ।**
**बालः किशोरो वाम्यश्वा वडवा वाडवं गणे ॥४६॥**
**त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।**

---

( कम्बोजे भवः इति अण् ) [1]वाह्लिकः ( वह्लिके भवः इत्यण् ) ये ४ पुं० नाम नामानुसार क्रम से उस २ देश में उत्पन्न हुये घोड़ों के हैं ।

[2]ययुः ( याति इति कुः धातोर्द्वित्वं च ) अश्वमेधीयः ( अश्वमेधाय हित इति छः ) ये २ पुं० नाम अश्वमेध यज्ञ में छोड़े जाने वाले घोड़े के हैं ।

जवनः ( जवनशीलः इति युच् 'जु' इति सौत्रो धातुः गतौ वेगे च ) जवाधिकः ( जवेन वेगेनाधिकः ) ये २ पुं० नाम अधिक तेज चलनेवाले घोड़े हैं ॥ ४५ ॥

पृष्ठ्यः ( प्रशस्तमतिशयितं वा पृष्ठमस्येति यप् ) स्थौरी ( स्थूलस्येदम् इति अण्, रलयोरेकत्वम् स्थौरं बलमस्यास्ति इति इनिः ) ये २ पुं० नाम भार ढोनेवाले घोड़े के हैं ।

[3]कर्कः ( करोति क्रियते वेति कः बाहुलकात्कस्य नेत्संज्ञा ) यह १ पुं० नाम सफेद घोड़े का है ।

[4]रथ्यः ( रथं वहति इति यत् ) यह १ पुं० नाम रथ में चलनेवाले घोड़े का है ।

[5]किशोरः ( किञ्चित् शृणाति इति शॄहिंसायां धातोः ओरन् प्रत्ययः किंपूर्वस्य शृणातेष्टिलोपः, किमोऽन्त्यलोपश्चेति किशोरादयश्चेति निपातनात् ) यह १ पुं० नाम घोड़े के बच्चे का है ।

[6]वामी ( वामयति । टुवम् उद्गिरणे, स्वार्थण्यन्तः, अच् । 'मितां ह्रस्वः' इत्यत्र वा इत्यनुवृत्तेः न ह्रस्वः । गौरादिः । यद्वा वं वरुणमयति । तेनाम्यते वा । अम गत्यादिषु, कर्मण्यण् घञ् वा ) अश्वा ( अश्वजातिः, अजादिपाठाट्टाप् ) [7]वडवा ( वलं सामर्थ्यमतिशयितमस्याः इति वः । वलं वाति वेति डः । वलेन वजति वेति डः । डलयोरेकत्वम् ) ये ३ स्त्री० नाम घोड़ी के हैं ।

[8]वाडवम् ( वडवानां समूहः इत्यञ् ) यह १ न० नाम घोड़ियों के समूह का है ॥ ४६ ॥

आश्वीनम् ( अश्वेन एकाहेनातिक्रम्यते इति खञ् ) यह १ त्रि० नाम एक दिन में घोड़े से जाने योग्य मार्ग का है ।

---

१. वाह्लीकं वाह्लिकं धीरहिङ्गु नोर्ना श्वदेशयोः । इति त्रिकाण्डशेषतः दीर्घमध्योऽपि ।
२. ययुः पुमानश्वमेधतुरगे च तुरंगमे । इति मेदिनी ।
३. कर्कः कर्केतने वह्नौ शुक्लाश्वे दर्पणे घटे । इति मेदिनी ।
४. रथ्या रथौघविशिखास्वावर्तनीषु च योषिति । रथवोढरि पुंलिङ्गः । इति मेदिनी ।
५. अथ किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः । इति मेदिनी ।
६. वामी शृगालीवडवारासभीकरभीषु च । इति मेदिनी ।
७. वडवा द्विजयोषिति । अश्वायां कुम्भदास्यां च नारीजात्यन्तरेऽपि च । इति मेदिनी ।
८. वाडवं करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले ॥ इति मेदिनी ।

कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ॥४७॥
निगालस्तु गलोद्देशे वृन्दे त्वश्वीयमाश्ववत् ।
आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥४८॥
गतयोऽमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम् ।

---

[1]कश्यम् ( अश्वादेस्ताडनी ताडनं वा=कशा तामर्हति इति यः ) यह १ न० नाम घोड़े के मध्य भाग का है ।

हेषा ( हेषणम् इति अः ) ह्रेषा ( ह्रेषणम् इति अः ) ये २ स्त्री० नाम घोड़े की आवाज ( हिन-हिनाहट ) के हैं ॥ ४७ ॥

निगालः ( निगरति वा निगलत्यनेनेति घञ् ) [2]गलोद्देशः ( गलस्योद्देशः=समीपभागः ) ये २ पुं० नाम घोड़े की गर्दन के पृष्ठ भाग के हैं ।

वृन्दे=समूहे तु—अश्वीयम् ( अश्वानां समूहः इति छः ) आश्वम् (छस्य अभावे अण् ) ये २ न० नाम घोड़ों के झुण्ड के हैं ।

[3]आस्कन्दितम् ( आस्कन्दनम् इति स्वार्थण्यन्तः, भावे क्तः ) [4]धौरितकम् ( धौरणम् इति भावे क्तः, ततः स्वार्थे कन् च ) [5]रेचितम् ( रेचनम् इति ण्यन्तः, क्तः ।
[6]वल्गितम् ( वल्गनम् इति क्तः ) [7]प्लुतम् ( प्लवनम् इति क्तः) ये ५ न० नाम क्रम से घोड़ों के सरपट दौड़ने, दुलका चलने, पोइया चलने, उछालमारकर चलने, व चौकड़ी मारकर चलने के हैं ॥४८॥

[8]धारा ( धार्यन्तेऽश्वा अत्र अनया वा । धृञ् धारणे इति ण्यन्तः, भिदाद्यङ् ) यह १ स्त्री० नाम घोड़ों की उक्त ५ चालों का है ।

घोणा ( घोणते इति अच् टाप् च ) [9]प्रोथम् ( प्रोथति इति अच्) ये २ नाम घोड़ों के चक्कर लगाने के हैं । किसी आचार्य के मत से 'प्रोथम्' यह घोड़े की नाक का भी नाम है । जिनमें प्र० स्त्री०, द्वि० नपुं०, पु० हैं ।

---

१. कश्यं त्रिषु कशार्हे स्यात्क्लीबं मद्याश्वमध्ययोः । इति मेदिनी । २. घण्टबन्धसमीपस्थो निगालः कीर्तितो बुधैः । तस्मिन्नेव मणिर्नाम रोमजः शुभकृन्मतः ॥ इत्यश्वशास्त्रम् । ३. उत्तेजितमुपकण्ठमास्कन्दितकमित्यपि । सत्प्लुत्योत्प्लुत्य गमनं कोपादेवाखिलैः पदैः ॥ इति हैममाला । ४. अथ धौरितकं धौर्यं धारणं धौरितं च तत् । इति वाचस्पतिः । तत्र धौरितकं धौर्यं धोरणं धोरितं च तत् । वभ्रु कंकशिखिक्रोडगतिवत् । इति हैमनाममाला । ५. उत्तेजितं रेचितं स्यान्मध्यवेगेन या गतिः । इति हैमनाममाला ।

६. वल्गितं पुनः अग्रकायसमुल्लासात्कुञ्चितास्यं नतत्रिकम् । इति नाममाला ।

७. प्लुतं तु लङ्घनं पक्षिमृगगत्यनुहारकम् । इति हैमः । प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके । इति हैमः । ८. धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके । इति मेदिनी ।

९. प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु । इति मेदिनी ,

**कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान् ॥४९॥**
**पुच्छोऽस्त्री लूमलांगूले वालहस्तश्च वालधिः ।**
**त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥५०॥**
**याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ।**
**असौ पुष्यरथश्चक्रयानं न समराय यत् ॥५१॥**
**कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।**

---

कविका ( कवते इति इः स्वार्थे कन् च । यद्वा वुन् टाप्, इत्वञ्च ) खलीनः ( खेमुखविले लीनः ) ये २ नाम लगाम के हैं जिनमें प्रथम स्त्री०, द्वि० पुं० हैं !

[1]शफम् ( शं फणति इति डः, पृषोदरादिः ) [2]खुरः ( खुरति इति कः ) ये नाम अश्वखुर के हैं। जिनमें प्रथम नपुं० द्वि० पुं० हैं ॥ ४९ ॥

[3]पुच्छः ( पुच्छ प्रमादे धातोः—पुच्छति इति अच् , पृषोदरादिः । ) लूमम् ( लूयते इति बाहुलकान्मक् ) [4]लांगूलम् ( लङ्गति इति गत्यर्थाल्लगिधातोः ऊलचि नुमि वृद्धिश्च निपातनात् ) ये ३ नाम अश्व की पूँछ के हैं। जिनमें प्र० पुं० नपुं०, २-३ नपुं० हैं।

[5]वालहस्तः ( वालो हस्त इव दंशादिनिवारकत्वात् ) वालधिः ( वाला धीयन्तेऽत्रेति किः ) ये २ पुं० नाम घोड़े की पूँछ के अग्रभाग के हैं ।

उपावृत्तः ( उपावर्तते स्म इति अकर्मकत्वात् क्तः ) लुठितः ( लुठति स्मेति क्तः ) ये २ त्रि० नाम श्रम दूर करने के लिए पृथ्वी पर लोटे हुए घोड़े के हैं ॥ ५० ॥

युद्धार्थे = युद्धाय इदम्, तस्मिन्, चक्रिणि चक्रमस्यास्ति इति इनिः तस्मिन्, याने यात्यनेनेति ल्युट् तस्मिन् इति सम्बन्धः ) शताङ्गः ( शतमङ्गानि अवयवाः यस्य ) स्यन्दनः ( स्यन्दते इति युच् ) रथः रमन्तेऽत्र अनेन वा इति क्थन् मलोपश्च ) ये ३ पुं० नाम युद्ध के रथ के हैं।

पुष्यरथः ( पुष्य इव रथः, पुष्ये = यात्रोत्सवादौ रथो वा, पकारमध्यपाठे सुकुमारत्वात् पुष्पमिव रथः पुष्परथः ) यह १ पुं० नाम यात्रा उत्सव आदि में चढ़ने योग्य रथ का है ॥ ५१ ॥

कर्णीरथः ( कर्णसाध्या श्रवणक्रियोपचारात् कर्णः । कर्णोऽस्यास्ति इति इनिः । कर्णी चासौ रथश्चेति शब्दमात्रेण रथः न तु वस्तुतो रथम् ) प्रवहणम् ( प्रोह्यते अनेन इति ल्युट् ) डयनम् ( डीयते अनेनेति ल्युट् ) ये ३ नाम पर्दा से आच्छन्न स्त्रियों के चढ़ने योग्य डोला के हैं। जिनमें १म पुं०, २-३य नपुं० हैं।

---

१. शफं मूले तरूणां स्यात् गवादीनां खुरेऽपि च । इति मेदिनी ।
२. खुराः कोलदले शफे । इति मेदिनी ।
३. पुच्छः पश्चात्प्रदेशः स्याल्लाङ्गूले पुच्छमिष्यते । इति मेदिनी ।
४. लागूलं पुच्छशेफयोः । इति मेदिनी ।
५. वालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ । इति पवर्गीयादौ मेदिनी ।

**क्लीबेऽनः शकटोऽस्त्री स्याद् गन्त्री कम्बलिवाह्यकम् ॥ ५२ ॥**
**शिविका याप्ययानं स्याद्दोला प्रेङ्खादिका स्त्रियाम् ।**
**उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥**
**पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।**
**रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ५४ ॥**
**त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे ।**
**धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः ॥ ५५ ॥**

---

अनः ( अनिति = चीत्करोति इति असुन् ) शकटः ( शक्नोति भारं वोढुं, जीवयितुं वेति अटन् । ये २ नाम गाड़ी के हैं जिनमें प्रथम नपुं०, द्वितीय पुं० न० हैं ।

गन्त्री ( गम्यतेऽनया इति ष्ट्रन्, ङीष् च ) कम्बलिवाह्यकम् (कम्बलः = सास्नाऽस्यास्ति इति इनिः । कम्बलिभिर्वृषैरुह्यते इति ण्यत् स्वार्थे कन् च ) ये २ नाम छोटी गाड़ी के हैं, जिनमें १म स्त्री०, द्वि० न० हैं ।

शिविका ( शिवैव इति संज्ञायां कन्, शिवं करोतीति ण्यन्ताद् ण्वुल् ) याप्ययानम् ( याप्यैः अधमैर्वाह्यं यानम् ) ये २ नाम पालकी के हैं । जिनमें प्रथम स्त्री०, द्वि० न० है ।

दोला ( दोलयति दोल्यते वेति अच् घञ् वा ) [1] प्रेङ्खा ( प्रेङ्ख्यते इति प्रपूर्वकात् इखि गतौ धातोः घञ् ) ये २ स्त्री० नाम हिंडोला के हैं ।

द्वीपिचर्मावृते रथे—द्वैपः ( द्वीपिनः विकारः इति अञ् ) वैयाघ्रः ( व्याघ्रस्य विकारः इति अञ द्वैपेन वैयाघ्रेण च चर्मणा परिवृतो रथः ) ये २ त्रि० नाम बाघ के चमड़े से मढ़े हुए रथ के हैं ॥ ५३॥

[2]पाण्डुकम्बली ( पाण्डुकम्बलेन परिवृतः रथः इति इनिः ) यह १ त्रि० नाम धूसर कम्बल से मढ़े हुए रथ का है। पाण्डुकम्बलेन संवीतः = आच्छादितः स्यन्दनः = रथः इति सम्बन्धः ।

काम्बलः ( कम्बलेन प्रावृतः रथः इति अण् ) ये २ त्रि० नाम क्रम से कम्बल व वस्त्र से ढके हुए रथ के हैं । द्वैप शब्द से लेकर वास्त्रान्त शब्द त्रि० हैं ॥ ५४ ॥

रथव्रजे—[3] रथ्या ( रथानां समूह इति यः टाप् च ) रथकट्या ( रथानां समूह इति कट्यच् ) रथव्रजः ( रथानां व्रजः ) ये तीन नाम रथसमूह के हैं । जिनमें १–२ स्त्री०, ३य पुं०, न० हैं ।

[4]धूः ( धूर्वति इति क्विप् वलोपे, 'र्वोः' इति दीर्घश्च ) यानमुखम् ( यानस्य मुखं पुरो भागः ) ये २ नाम रथ में बैल जोतने के स्थान के हैं । जिनमें प्रथम स्त्री०, द्वितीय न पुं० हैं ।

रथाङ्गम् ( रथस्याङ्गम् ) अपस्कर ( अपकीर्यते स्वस्थाने क्षिप्यते इति अप्, निपा० ) ये २ नाम रथ के अवयव के हैं, जिनमें प्रथम न० पुं० द्वितीय पुं० हैं ।

---

१. दोला प्रेङ्खः पुमान् प्रेङ्खा, निश्रेणिरधिरोहिणी । इति रत्नकोषः ।
२. स्यात्पाण्डुकम्बलः श्वेतप्रावाराग्रावभेदयोः । इति मेदिनी ।
३. रथ्यो रथांशे रथवोढरि । रथ्या तु रथसंघाते प्रतोल्यां पथि चत्वरे । इति हैमः ।
४. धूर्यानमुखभारयोः । इति हैमः ।

**चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान् ।**
**पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोरणिः ॥ ५६ ॥**
**रथगुप्तिर्वरूथो ना कूवरस्तु युगंधरः ।**
**अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगान्तरम् ॥ ५७ ॥**

---

[1] चक्रम् ( क्रियते गतिरनेनेति घञर्थे कः द्वित्वमभ्यासादिकार्याणि च ) [2]रथाङ्गम् ( रथस्याङ्गम् ) ये २ न० नाम रथादि के पहिए के हैं।

तस्य = चक्रस्य अन्तः भूस्पर्शिभागः—[3] नेमिः ( नयति रथमिति मिः ) प्रधिः ( प्रधीयतेऽनेनेति किः ) ये २ नाम चक्र के ऊपर वाले परिधि ( पुट्ठी ) के हैं। जिनमें प्रथम स्त्री०, द्वि० पुं० हैं।

पिण्डिका ( पिण्डयन्तेऽरा यस्याम् इति घञ्, स्वार्थे कन् टाप् च ) [4]नाभिः (नह्यन्तेऽरा अत्र इति इञ् हस्य भः, वृद्धौ च ) ये २ स्त्री० नाम पहिए के बीचवाले भाग के हैं।

अक्षस्य = नाभिक्षेप्यस्य अग्रे = अन्ते कीलके—[5] अणिः ( अणति इति इन् ) यह १ पुं० स्त्री० नाम धुरा में लगाने वाली किल्ली के हैं ॥ ५६ ॥

रथगुप्तिः ( रथस्य गुप्तिः आवरणम् ) [6] वरूथः ( व्रियते रथोऽनेनेति ऊथन् ) ये २ नाम शत्रु के प्रहार से बचने के लिए रथ में लोहे आदि के लगे पर्दे के हैं। जिनमें प्रथम स्त्री० तथा द्वितीय पुं० हैं।

[7]कूवरः ( कूवते इति बाहुलकाद् वरच्, कुटादिः ) युगंधरः ( वोढृ-बन्धनकाष्ठं धारयति इति खच् मुम् च ) ये २ पुं० नाम जुवा बांधने वाले स्थान के हैं।

अधःस्थं दारु रथस्येति शेषः— [8]अनुकर्षः ( अनुकृष्यते इति घञ् ) यह १ पुं० नाम रथ के नीचे वाले भाग का है।

[9]प्रासङ्गः ( प्रसज्यते इति घञ्, उपसर्गस्य दीर्घश्च ) यह १ पुं० नाम जुवाठ का है, अन्य आचार्य

---

१. चक्रः कोके पुमान्, क्लीबं व्रजे सैन्ये रथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्तेऽपि च। इति मेदिनी।

२. रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहङ्गमे। इति मेदिनी।

३. नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्। इति मेदिनी।

४. नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे। इति मेदिनी।

५. अणिराणिवदक्षाग्रकीले स्यादश्रिसीमयोः। इति विश्वः। अणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयोः। इति मेदिनी।

६. वरूथो रथगुप्तौ स्यात् वरूथं चर्मवेश्मनोः। इति मेदिनी।

७. कूवरस्त्रिषु चारौ ना कुब्जकेऽस्त्री युगन्धरे। इति मेदिनी।

८. अनुकर्षो रथाधःस्थदारुण्यप्यनुकर्षणे। इति मेदिनी।

९. प्रासङ्गस्तु युगान्तरम् = द्वितीयं युगं युगान्तरम्, यत्काष्ठं वत्सानां दमनकाले स्कन्धे आसज्यते। इति स्वोपज्ञमालायां हेमचन्द्रः। कात्योऽपि—युगं द्वितीयं प्रासङ्गः।

सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ।
परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ ५८ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ॥ ५९ ॥
सव्येष्ठृदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।
रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ॥ ६० ॥

---

के मत से नये निकाले जानेवाले बछड़े के कन्धे पर रक्खे जानेवाले काष्ठ का है। रथाद्यङ्गयुगादन्यत् युगं वृषभाणां दमनकाले यदासज्यते तस्यैकं नामेति दीक्षितः ॥ ५७ ॥

हस्त्यादि दोलान्तं सर्व—वाहनम् ( वाहयति इति वहेः स्वार्थण्यन्तात्कर्तरि ल्युट् ) [1]यानम् ( यान्त्यनेनेति करणे ल्युट् ) युग्यम् ( युज्यते अनेनेति क्यबन्तो निपातः ) [2]पत्त्रम् ( पतन्त्यनेनेति ष्ट्रन् ) धोरणम् ( धोरति, धोरयति वा अनेनेति ल्युः ल्युट् वा ) ये ५ न० नाम वाहनमात्र के हैं।

परम्परया यद् वाह्यं वहितं तत्—वैनीतकम् ( विनीतकानामिदं, विनीयते स्मेति क्तः, तदेव विनीतकम् कन्, विनीतकमेवेति अण् च ) यह १ पुं० न० नाम कहार आदि से ढोई जाने वाली पालकी तथा परम्परावाली सवारी जैसे गाड़ी आदि का है।

आधोरणः ( आधोरयति इति ल्युः ) हस्तिपकः ( हस्तिनं पाति इति कः स्वार्थे कन् च ) हस्त्यारोहः ( हस्तिनमारोहयति इति कर्मण्यण् ) निषादी ( निषीदत्यवश्यम् इति णिनिः ) ये ४ पुं० नाम महावत के हैं।

नियन्ता ( नियच्छति इति तृच् , अन्तर्भावितण्यर्थो वा ) प्राजिता ( प्राजति इति तृच् , अन्तर्भावितण्यर्थो वा ) यन्ता ( यच्छति = प्रेरयत्यश्वान् इति तृच् )

[3]सूतः ( सुवति = गमयति स्माश्वान् इति क्तः ) क्षत्ता ( क्षदति क्षद संवरणे सौत्रः, तृच् इणिनिषेधश्च ) सारथिः ( सरत्यश्वान् इति अन्तर्भावितण्यर्थात् घथिन् ) [4]सव्येष्ठा ( सव्ये वामे तिष्ठति इत्यृन् डिच्च, षत्वमलुक् च ) दक्षिणस्थः ( दक्षिणे तिष्ठति इति कः ) ये ८ पुं० नाम रथादि हाँकने वालों के हैं। उक्त ८ नाम रथ कुटुम्बी कहलाते हैं ॥ ५९ ॥

रथी ( रथोऽस्यास्ति इति इनिः ) स्यन्दनारोहः ( स्यन्दनमारोहति इति अण् ) ये २ पुं० नाम रथ पर चढ़कर लड़ने वाले के हैं।

अश्वारोहः ( अश्वमारोहति इति अण् ) सादी ( सीदत्यवश्यम् इति णिनिः ) ये २ पुं० नाम घुड़सवार के हैं ॥ ६० ॥

---

१. यानं स्याद्वाहने गतौ। इति मेदिनी।

२. पत्त्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः। इति मेदिनी।

३. सूतस्तु सारथौ तक्ष्णि क्षत्रियाद् ब्राह्मणीसुते। वन्दिपारदयोः पुंसि प्रसूते, प्रेरिते त्रिषु। इति विश्वमेदिन्यौ ॥

४. प्राजिता दक्षिणस्थश्च सादी सारथिरुच्यते। सूतः क्षत्ता नियन्ता च यन्ता सव्येष्ठ एव च। इत्यमरमालावचनाददन्तोऽपि।

**भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः ।**
**सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥**
**बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।**
**परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ६२ ॥**
**कञ्चुको वारबाणोऽस्त्री यत्त मध्ये सकञ्चुकाः ।**
**बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम् ॥ ६३ ॥**

---

[1]भटः ( भटति इति अच् ) योधः ( युध्यते इति अच् ) योद्धा ( युध्यते इति तृच् ) ये ३ पुं० नाम लड़ाई करनेवालों के हैं।

सेनारक्षः ( सेनां रक्षति इति कर्मण्यण् ) [2]सैनिकः ( सेनां रक्षति इति ठक् ) ये २ पुं० नाम सेना के पहरेदार के हैं।

ये सेनायां समवेताः ते [3]सैन्याः ( सेनायां समवैति इति ण्यः ) सैनिकः ( सेनायां समवैति इति ण्याभावे पक्षे ठक् ) ये २ पुं० नाम सैनिक के हैं ॥ ६१ ॥

ये सहस्रेण = सहस्रसंख्याकेन गजादिना बलिनः ते—साहस्राः ( सहस्रं बलानि सन्ति यस्य इति अण् ) सहस्री ( इनिः ) ये २ पुं० नाम एक हजार हस्त्यश्वादि योद्धाओंवाले सूबेदार के हैं।

परिधिस्थः ( परिधौ सेनान्ते तिष्ठति इति कः ) परिचरः ( परितः चरति इति अच् ) ये २ त्रि० नाम दण्डनीय वीरों को दण्ड देने के लिये राजा से नियुक्त अधिकारी पुरुष के हैं।

[4]सेनानीः ( सेनां नयति इति क्विप् ) वाहिनीपतिः ( वाहिन्याः पतिः ) ये २ पुं० नाम सेनापति के हैं ॥ ६२ ॥

[5]कञ्चुकः ( कञ्च्यते इति बाहुलकादुकः ) वारबाणः ( बाणं वारयति वृणोति वा इति वृञ् वरणे, ण्यन्तो वा, कर्मण्यण् । मयूरव्यंसकादित्वात् राजदन्तादित्वात् वा परनिपातः ) ये २ नाम शत्रु के वार से बचने के लिए लोह आदि से रचित सन्नाह के हैं। जिनमें १म पुं०, द्वि० पुं० न० हैं।

यत् मध्ये = मध्यकाये सकञ्चुकाः बध्नन्ति तत्—[6]सारसनम् ( सारं सनोति इति कर्मणः शेषत्वविवक्षायामच् । यद्वा सारं बलमस्यते दीप्यते अनेन इति ल्युट् ) अधिकाङ्गः ( अधिकमङ्गात् ) ये २ नाम कवच को स्थिर रखने के लिए कमर में कसने की पट्टी के हैं। जिनमें १म न०, द्वि० पुं० हैं।

---

१. भटः स्यात् पुंसि वीरे च विशेषे परमरस्य च । इति मेदिनी ।

२. सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके । इति मेदिनी ।

३. सैन्यं सैनिकसेनयोः । इति हैमः । ४. सेनानीः स्यात् पुमान् कार्तिकेये सेनापतौ पुमान् । इति मेदिनी । ५. कञ्चुको वारबाणे स्यान्निर्मोके कवचेऽपि च । वधांपकगृहीताङ्गस्थितवस्त्रे च चोलके । कञ्चुक्यौषधिभेदे । इति मेदिनी ।

६. सारसनमप्युरस्त्रे तनुत्रिणां मेखलायां च । इति मेदिनी । सारसनं मेखलायामुरस्त्रे च तनुत्रिणाम् । इति विश्वः ।

शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ।
उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥
आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।
संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥
त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे ।
पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥

---

शीर्षकम् ( शीर्षस्य प्रतिकृतिः इति कन्, शीर्षे कं सुखमस्माद्वा ) [1]शीर्षण्यम् ( शिरसे हितम् इति यत् शिरःशब्दस्य शीर्षन्नादेशश्च टिलोपाभावश्च ) शिरस्त्रम् ( शिरस्त्रायते इति कः ) ये ३ न० नाम लड़ाई के समय पहने जाने वाले टोप के हैं।

तनुत्रम् ( तनुं त्रायते इति कः ) वर्म ( वृणोति देहम् इति मनिन् ) [2]दंशनम् ( दंश्यतेऽनेनेति ल्युट् ) उरश्छदः ( उरश्छाद्यतेऽनेनेति घः धातोः ह्रस्वश्च ) कङ्कटकः ( कङ्कते इति अटन् स्वार्थे कन् च ) [3]जगरः ( जगता गृह्यते इति प्रातिपदिकात् णिच् टिलोपश्च, बाहुलादरः, जागर्ति इति अच्, पृषोदरादिर्वा ) [4]कवचः ( कं वातं वञ्चति इति मूलविभुजादित्वात्कः ) ये ७ नाम क्रम से ३ न०, ३ पुं०, १ पु० न० कवच के हैं ॥ ६४ ॥

आमुक्तः ( आमुच्यते स्मेति क्तः ) प्रतिमुक्तः ( प्रतिमुच्यते स्मेति क्तः ) पिनद्धः ( अपिनह्यते स्मेति क्तः अकारलोपश्च ) अपिनद्धः ( प्राग्वत्, अकारलोपाभावः ) ये ४ त्रि० नाम पहने हुए कवच व वस्त्र के हैं।

[5]सन्नद्धः ( संनह्यति संनह्यते स्मेति अकर्मकत्वात्कर्तरि कर्मणि वा क्तः ) वर्मितः ( वर्म संजातमस्येति इतच् ) [6]सज्जः ( सज्जति इति अच् ) दंशितः ( दंशः संजातोऽस्येति इतच् ) व्यूढकङ्कटः ( व्यूढो धृतः कङ्कटः येनेति ) ये ५ त्रि० नाम कवच आदि धारण करके युद्ध के लिए तैयार योद्धाओं के हैं ॥ ६५ ॥

कावचिकम् ( कवचिनां समूहः इति ठञ् ) यह १ न० नाम कवचधारी पुरुषों के झुण्ड का है।

पदातिः ( पादाभ्याम् अतति गच्छति इति इण् पदादेशश्च ) [7]पत्तिः ( पद्यते इति बाहुलकात्तिः क्तिच् वा ) पदगः ( पादाभ्यां गच्छति इति डः पदादेशोऽदन्तः ) पादातिकः ( पदातिरेवेति ठक्, पादाभ्यां अतति इति बाहुलकादिको वा ) पदाजिः ( पादाभ्यामजति इति इण् पदादेशोऽदन्तः ) पदगः ( पद्भ्यां गच्छति इति डः, पादेन समानार्थः पद्शब्दोऽस्ति ) पदिकः ( पादाभ्यां चरति इति ष्ठन् पद्भावश्च [8] पादातशब्दोप्यत्र ) ये ७ पुं० नाम पैदल सेना के हैं ॥ ६६ ॥

---

१. शीर्षण्यं शीर्षरक्षणे । शीर्षण्यो विशदे कचे । इति हैमः ।

२. दंशनं वर्मदंशयोः । इतिः हैमः । ३. जगरा कङ्कटो योगः संनाहः स्यादुरश्छदः । इति बोपालितः । ४. कवचो गर्दभाण्डे च संनाहे पटहेऽपि च । इति विश्वमेदिन्यौ ।

५. सन्नद्धो वर्मिते व्यूढे । इति मेदिनी । ६. अथ सज्जः स्यात्संनद्धे संभृते त्रिषु । इति मेदिनी ।

७. पत्तिः सेनाभित्पद्गयोर्गतौ । इति हैमः ।

८. पदातिपत्तिपादातपादाविकपदाजयः । इत्यमरमाला ।

पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः ।
शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥ ६७ ॥
कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।
अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ॥ ६८ ॥
धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।
स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ॥ ६९ ॥
याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ ।

---

पादातम् ( पदातीनां समूहः इति अण् ) पत्तिसंहतिः ( पत्तीनां संहतिः ) ये २ स्त्री० नाम पैदल सेना के समूह के हैं ।

शस्त्राजीवः ( शस्त्रम् आजीवति उपजीवति वेति कर्मण्यण् ) काण्डपृष्ठः ( काण्डानि = शस्त्राणि पृष्ठे यस्य ) आयुधीयः ( आयुधेन जीवति इति छः ) आयुधिकः ( आयुधेन जीवति इति ठन् ) ये ४ त्रि० नाम शस्त्रादि कार्य से जीविका चलाने वालों के हैं ॥ ६७ ॥

कृतहस्तः ( कृतोऽभ्यस्तो हस्तः यस्य ) सुप्रयोगविशिखः ( शोभनः प्रयोगोऽस्य, सुप्रयोगः विशिखोऽस्य ) कृतपुङ्खः ( कृतः अभ्यस्तः पुङ्खः पुङ्खयुक्तः शरो येन ) ये ३ त्रि० नाम अच्छी तरह अभ्यस्त बाण चलाने वाले के हैं ।

अपराद्धपृषत्कः ( अपराद्धः पृषत्को बाणोऽस्य, लक्ष्याद् ध्यात् च्युतो भ्रष्टः सायको यस्येति सम्बन्धः ) यह १ त्रि० नाम निशाना चूके हुए का है ॥ ६८ ॥

[1]धन्वी ( धन्वा अस्यास्ति इति इनिः ) धनुष्मान् ( धनुरस्यास्ति इति मतुप् मत्वञ्च ) धानुष्कः ( धनुः प्रहरणमस्येति ठक् इसुसुक्तान्तात् कः इति कादेशश्च ) निषङ्गी ( निषङ्गोऽस्यास्ति इति इनिः ) [2]अस्त्री ( अस्त्रमस्यास्ति इति इनिः ) धनुर्धरः ( धरति इति अच्, धनुषः धरः इति ) ये ६ त्रि० नाम धनुष धारण करने वालों के हैं ।

[3]काण्डवान् ( काण्डो बाणोऽस्यास्ति इति मतुप् ) काण्डीरः ( काण्डो बाणोऽस्यास्ति इति ईरच् ) ये २ त्रि० नाम बाण धारण करने वाले के हैं ।

शाक्तीकः ( शक्तिः प्रहरणमस्यास्ति इति ईकक् ) शक्तिहेतिकः ( शक्तिर्हेतिर्यस्येति कप् ) ये २ नाम शक्ति नामक शस्त्र धारण करने वाले के हैं ॥ ६९ ॥

यष्टिश्च पर्श्वधश्च हेती ययोस्तौ—याष्टीकः ( यष्टिः प्रहरणमस्येति ईकक्, वृद्धिश्च ) पारश्वधिकः ( परश्वधः = परशुः प्रहरणमस्येति ठञ् ) ये २ त्रि० नाम क्रमशः लाठी और फरसा धारण करने वाले के हैं ।

---

१. धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च । इति मेदिनी ।
२. अस्त्रं प्रहरणे चापे । इति विश्वः ।
३. काण्डः स्तम्बे तरुस्कन्धे बाणोऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडीबन्धे रहसि न स्त्रियाम् ॥ इति मेदिनी ।

नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ ॥ ७० ॥
चर्मी फलकपाणिः स्यात् पताकी वैजयन्तिकः ।
अनुप्लवः सहायश्चानुचरोऽभिसरः समाः ॥ ७१ ॥
पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ।
पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ॥ ७२ ॥
जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ ।

---

नैस्त्रिंशिकः ( निस्त्रिंशः प्रहरणमस्य इति ठक् ) असिहेतिः ( असिर्हेतिर्यस्य ) ये २ त्रि० नाम तलवार धारण करने वाले के हैं।

प्रासिकः ( प्रासः प्रहरणमस्येति ठक् ) कौन्तिकः (कुन्तः प्रहरणमस्येति ठक्) ये २ त्रि० नाम क्रमशः प्रास या भाला धारण करने वाले के हैं ॥ ७० ॥

चर्मी ( चर्मास्यास्ति इति इनिः ) फलकपाणिः ( फलकं पाणौ अस्य ) ये २ त्रि० नाम ढाल धारण करने वालों के हैं।

पताकी ( पताका अस्यास्ति इति इनिः ) वैजयन्तिकः ( वैजयन्त्या चरति इति ठक् ) ये २ त्रि० नाम पताका धारण करने वाले हैं।

अनुप्लवः ( अनुपश्चात् प्लवते इति अच् ) सहायः ( सह अयते इति अच् ) अनुचरः ( अनु चरति इति टः ) अभिसरः ( अभितः सरति इति अच् ) ये ४ त्रि० नाम अनुचर के हैं ॥ ७१ ॥

पुरोगः ( पुरो गच्छति इति डः ) अग्रेसरः ( अग्रे सरति इति टः ) [1]प्रष्ठः ( प्रतिष्ठते = गच्छति इति कः षत्वं च ) अग्रतःसरः ( अग्रतः सरति इति टः ) पुरःसरः ( पुरः सरति इति टः ) पुरोगमः ( पुरो गच्छति इति अच् खच् वा ) पुरोगामी ( पुरः गच्छति इति णिनिः ) ये ७ त्रि० नाम आगे चलने वाले के हैं।

मन्दगामी (मन्दं गच्छति गच्छीलः इति णिनिः ) [2]मन्थरः (मन्थति पादौ इति बाहुलकादरन्, यद्वा मन्थं गति इति कः ) ये २ त्रि० नाम धीरे २ चलने वाले के हैं ॥ ७२ ॥

[3]जङ्घालः ( अतिशयिता जङ्घाऽस्येति लच् ) अतिजवः ( अतिशयितो जवो वेगो यस्य इति ) ये २ त्रि० नाम अधिक तेज चलने वाले के हैं।

जङ्घाकरिकः (जङ्घासाध्यत्वादुपचाराद् गतिर्जङ्घा । सैव करो राजदेयो भागः आकरः श्रेष्ठो वेति । जङ्घाकरोऽस्यास्ति इति ठन् जङ्घैव करी हस्ती यस्य वा ) जाङ्घिकः ( जङ्घाभ्यां जीवति इति ठक् ) ये २ त्रि० नाम डॉक ढोने वाले के हैं।

---

१. प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालकौषधौ । इति मेदिनी ।

२. मन्थरः कोशफलयोर्बाधमन्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्दे पृथौ नक्रेऽभिधेयवत् । इति मेदिनी । ३. प्रशालप्रशिलौ तुल्यौ जङ्घालजङ्घिलादयः । इति वाचस्पतिः ।

तरस्वी त्वरितो वेगी प्रजवो जवनो जवः ॥ ७३ ॥
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ।
जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ॥ ७४ ॥
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ।
ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ॥ ७५ ॥
स्यादुरस्वानुरसिलो रथिनो रथिको रथी ।

---

[1]तरस्वी ( तरो वेगोऽस्यास्ति इति विनिः ) त्वरितः[2] ( त्वरते इति क्तः, त्वरा संजाताऽस्येति इतच् वा ) वेगी ( अतिशयितः वेगोऽस्येति इनिः ) प्रजवी ( प्रजवति जुः इति सौत्रो धातुः तस्मात् इनिः ) जवनः[3] ( जवति इति युच् ) जवः[4] ( जवति इति अच् ) ये ६ त्रि० नाम शीघ्रता करने वाले के हैं ॥ ७३ ॥

यः जेतुं शक्यते स—जय्यः ( जेतुं शक्यः, 'जि जये अभिभवे वा'। 'अचो यत्' 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात् ) यह त्रि० नाम जीते जा सकने वाले का है ।

जेयः ( शक्यार्थादन्यत्र योग्यतायाम् यत् ) यह १ त्रि० नाम जीतने योग्य मात्र का है ।

जैत्रः ( जयनशीलः इति तृन् अण् च ) जेता ( जयनशीलः इति तृन् ) ये २ त्रि० का नाम विजयशील के हैं ॥ ७४ ॥

यः द्विषतः = शत्रूणां अलं गच्छति सः—अभ्यमित्र्यः (अमित्रस्याभिमुखम् इत्यव्ययीभावो यत् प्रत्ययश्च ) अभ्यमित्रीयः ( अमित्रस्याभिमुखम् इति छः ) अभ्यमित्रीणः ( अमित्रस्याभिमुखम् इति खः ) ये ३ त्रि० नाम अपने पराक्रम से वैरी का सामना करने वाले के हैं ।

[5]ऊर्ज्जस्वलः ( अतिशयितः ऊर्जोऽस्यास्ति इति वलच् ऊर्जशब्दोऽदन्तः सान्तश्च । आद्ये सगपि निपात्यः ) ऊर्जस्वी ( ऊर्जसोऽतिशयोऽस्येति विनिः ) ऊर्जातिशयान्वितः ( ऊर्जातिशयेन अन्वितः ) ये ३ त्रि० नाम अधिक बलवान् के हैं ॥ ७५ ॥

उरस्वान् ( प्रशस्तमतिशयितं वा उरो यस्येति मतुप् वकारादेशश्च ) उरसिलः ( प्रशस्तमतिशयितं वा उरो यस्येति इलच् ) ये २ त्रि० नाम चौड़ी छाती वाले के हैं ।

रथिनः ( रथस्य इनः, शकन्ध्वादिः ) रथिकः ( रथोऽस्यास्ति इति ठन् ) रथी ( इन् ) ये ३ त्रि० नाम रथ के स्वामी के हैं ।

---

१. तरस्वी शूरवेगिनोः । इति मेदिनी ।
२. त्वरितं वेगतद्वतोः । इति हैमः ।
३. जवनं तु स्यदे वेगिहये ना वेगिनि त्रिषु । इति मेदिनी ।
४. पुंलिङ्गस्तु भवेद्वेगे चौण्ड्रपुष्पे जवा मता । इति मेदिनी ।
५. ऊर्जस्तु कार्तिकोत्साहबलेषु प्राणनेऽपि च । इति मेदिनी ।

कामंगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ॥ ७६ ॥
शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः ।
सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७८ ॥
व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि ।

---

कामङ्गामी ( कामं यथेच्छं गमनशीलः इति णिनिः कामम् इत्यव्ययम् ) अनुकामीनः ( कामस्य सदृशम् यथार्थेऽव्ययीभावः, अनुकामं गामी इति खः ) ये २ त्रि० नाम इच्छानुसार चलनेवाले के हैं ।

भृशमत्यर्थं गमनशीलः—अत्यन्तीनः ( अन्तरयात्ययः, अत्यन्तं गामी इति खः अत्ययेऽव्ययीभावः ) यह १ त्रि० नाम अधिक चलने वाले का है ॥ ७६ ॥

[1]शूरः ( शूरयति इत्यच् ) [2]वीरः ( वीरयति इत्यच् ) विक्रान्तः ( विक्रामति स्मेति क्तः ) ये ३ त्रि० नाम पहलवान के हैं ।

जेता ( जयनशीलः इति तृन् ) [3]जिष्णु ( जयनशीलः इति ग्स्नुः ) जित्वरः ( जयनशीलः इति क्वरप् ) ये ३ त्रि० नाम सदा विजय करने वाले के हैं ।

सांयुगीनः ( संयुगे रणे साधुः इति खञ् ) यह १ त्रि० नाम लड़ाई में कुशल व्यक्ति का है ॥७७॥

ध्वजिनी ( ध्वजा सत्यस्याम् इति इनिः ) वाहिनी ( वाहाः सन्त्यस्याम् इति इनिः ) सेना ( सिनोति इति नः टाप् च ) [4]पृतना ( प्रियते इति वाहुलकात्तनन् गुणाभावश्च ) [5]अनीकिनी ( अनीकं = रणोऽस्ति प्रयोजनत्वेन यस्याः इति इनिः )

[6] चमूः ( चमति शत्रून् इति ऊः ) वरूथिनी ( वरूथाः रथावरणानि सन्त्यस्याम् इति इनिः ) बलम् ( बलति इति अच् ) सैन्यम् ( सेना एवेति ष्यञ् ) चक्रम् ( क्रियतेऽनेनेति घञर्थे कः द्वित्वञ्च ) [7] अनीकम् ( अनित्यनेनेति ईकन् ) ये ११ नाम सेना के हैं, जिनमें १-७ स्त्री०, ८-१० नपुं० और १ न० पुं० हैं ॥ ७८ ॥

[8]व्यूहः ( व्यूह्यते इति घञ् ) बलविन्यासः ( बलस्य सेनायाः विन्यासो विभज्य स्थापनम् ) ये २ पुं० नाम मोर्चाबन्दी के हैं ।

---

१. सूरः स्यादाद्वे भटे । इति मेदिनी ।

२. वीरो रसविशेषे स्यादुत्तरे सुभटे त्रिषु । स्त्री सुराक्षीरकाकोलीतामलक्येलवालुके । पतिपुत्रवतीरम्भाविदारीदुग्धिकासु च । मलयूक्षीरविदार्योः क्लीबं शृंग्यां न तेऽपि च । इति पवर्गतृतीयादौ मेदिनी । ३. जिष्णुर्ना वासवेऽर्जुने । जित्वरे वाच्यवत् । इति मेदिनी ।

४. पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः । इति मेदिनी ।

५. अनीकिनी स्त्रियां सेनामात्रसेनाविशेषयोः । इति मेदिनी ।

६. चमूः सेनाविशेषे च सेनामात्रे च योषिति । इति मेदिनी ।

७. अनीकोऽस्त्री रणे सैन्ये । इति मेदिनी ।

८. व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः । इति मेदिनी ।

प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥
एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ८० ॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।

---

युधि-दण्डो मण्डलभोगौ चाप्युत्सन्नस्त्वाचलो दृढः । व्यूहास्तेषां विशेषाः स्युश्चक्रव्यूहादयोऽपि च । स्वामी दण्डादयः = दण्डः = आदौ येषां ते, आदिपदेन-शकट-मकर-पताका-दुर्जयादयो भेदाः = विशेषाः उक्ताः । व्यूह के सलक्षण कुछ भेदों को कामन्दकि ने कहा है-तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च । मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः ॥ इति । दण्डवदवस्थानं दण्डः । अन्योऽन्यानुगता वृत्तिर्भोगः । सर्पशरीरवदवस्था मण्डलः । गजादीनां विजातीयैरमिश्रितानां स्थानमसंहतः । लड़ाई में सेना को रखने की व्यवस्था ( मोर्चाबन्दी ) के क्रमशः १-१ नाम हैं ।

प्रत्यासारः ( प्रतीपमासारयति इति ण्यन्तात् सृगतौ धातोरच् ) [1]व्यूहपार्ष्णिः ( व्यूहस्य पार्ष्णिः ) ये २ पुं० नाम व्यूह के पीछे सेनाभाग के हैं ।

सैन्यपृष्ठे सैन्यस्य पृष्ठे धनुःशतद्वयान्तरे स्थितं सैन्यम्—[2]प्रतिग्रहः ( प्रतिगृह्यतेऽनेन इत्यप् ) यह एक पुं० नाम सेना के पीछे ( सेना की रक्षा के लिये ) स्थित सैन्य टुकड़ी का है ॥ ७९ ॥

एकेभा = एकः इभः यस्यां सा, एकरथा = एकः रथः यस्यां सा, त्र्यश्वा = त्रयः अश्वाः यस्यां सा इति सम्बन्धः—[3]पत्तिः ( पद्यते इति क्तिन् ) यह एक स्त्री० नाम उस सेना का है जिसमें एक हाथी, एक रथ, तीन घोड़े और पाँच पैदल हों ।

पत्त्यङ्गैः सर्वैः त्रिगुणैः यथोत्तरम् क्रमात् = क्रमशः आख्या लभते इति सम्बन्धः । अर्थात् पत्ति के सभी अङ्गों से त्रिगुणित होने पर सेनामुखादि संज्ञा होती है । अर्थात् ३ पत्ति सेनाविशेष को —सेनामुखम् ( सेनायाः मुखम् = उपक्रमः ) कहते हैं जो न० है । इसमें ३ हाथी, ९ घोड़े और १५ पैदल होते हैं ॥ ८० ॥

३ सेनामुख को [4]गुल्मः ( गुडति इति बाहुलकान् मः डलयोरैकत्वम् ) कहते हैं जो पुं० है । इसमें ६ हाथी, ६ रथ, २७ घोड़े, और ४५ पैदल होते हैं । ये संख्यायें सेनामुख की संख्याओं से ३ गुनी हैं ।

३ गुल्मको [5]गणः ( गणयतीति अच् ) कहते हैं जो पु० है । इसमें २७ हाथी, २७ रथ, ८१ घोड़े और १३५ पैदल होते हैं । ये संख्यायें गुल्म की संख्याओं से त्रिगुणित हैं ।

---

१. पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च । इति विश्वमेदिन्यौ ।

२. प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । योग्येभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे ॥ इति मेदिनी ।

३. पत्तिर्ना पदगे स्त्रियाम् । गतावेकरथैकेभत्र्यश्वपञ्चपदातिके । इति मेदिनी । एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ इति भरतः ।

४. गुल्मः सेनाघट्टभिदोः सेनारक्षणरुग्भिदोः । स्तम्बेऽस्त्रियामामलक्यैलावल्लीवस्त्रवेश्मसु । इति मेदिनी । ५. गणः प्रमथसंख्यौघे चण्डीसैन्यप्रभेदयोः । इति मेदिनी ।

**अनीकिनी दशानीकिन्यक्षौहिण्यथ संपदि ॥ ८१ ॥**
**संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ ।**
**आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥ ८२ ॥**
**धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।**

---

३ गण को वाहिनी ( वाहाः सत्यस्यामिति इनिः ) कहते हैं। यह स्त्री० नाम है। इसमें, ८१ हाथी, ८१ रथ, २४३ घोड़े और ४०५ पैदल होते हैं। ये संख्यायें गण की संख्याओं से ३ गुनी हैं।

३ वाहिनी को पृतना ( प्रियते इति बाहुलकात्तनन् गुणाभावश्च ) कहते हैं, जो स्त्री० नाम है। इसमे २४३ हाथी, २४३ रथ, ७२६ घोड़े और १२१५ पैदल होता हैं। ये संख्यायें वाहिनी की संख्याओं से ३ गुनी हैं।

३ पृतना को चमूः ( चमित शत्रून् इति ऊः ) कहते हैं। यह स्त्री० नाम हैं। इसमें ७२९ हाथी, ७२९ रथ. २१८७ घोड़े और ३६४५ पैदल होते हैं। ये संख्यायें पृतना की संख्याओं से ३ गुनी हैं।

३ चमू को अनीकिनी ( अनीकं = रणः अस्ति प्रयोजनत्वेन यस्याः इति इनिः ) कहते हैं जो स्त्री० नाम है। इसमें २१८७ हाथी, २१८७ रथ, ६५६१ घोड़े और १०९३५ पैदल होते हैं। ये संख्याएं अनीकिनी की संख्याओं से ३ गुनी हैं। इस प्रकार पत्तिः, सेनामुखम् , गुल्मः, गणः, वाहिनी, पृतना, चमूः, अनीकिनी ये ८ नाम सेनाविशेष के हैं।

[1]अक्षौहिणी ( ऊहः समूहोऽस्त्यस्याः इति इनिः, अक्षाणामूहिनी इति 'पूर्वपदात्' णत्वम् वृद्धिश्च ) यह १ स्त्री० नाम अनीकिनी ( २१८७० हाथी, २१८७० रथ, ६५९१० घोड़े और १०९३५० पैदल संख्यावाले ) सेना विशेष का है।

संपत् ( संपदनम् इति क्विप् ) सम्पत्तिः ( संपदनम् इति क्तिन् ) श्रीः [2] ( श्रीयते सर्वैः इति क्विप् ) [3]लक्ष्मीः ( लक्ष्यते इति मुट् ईप्रत्ययश्च ) ये ४ स्त्री० नाम सम्पत्ति ( धनोत्कर्ष ) के हैं॥

विपत्तिः ( विपद्यते अनया इति क्तिन् ) विपत् ( विपदनम् इति क्विप् ) आपत् ( आपदनम् इति क्विप् ) ये ३ स्त्री० नाम विपत्ति के हैं।

आयुधम् ( आयुध्यन्तेऽनेनेति घञर्थे कविधानम् ) प्रहरणम् ( प्रह्रियतेऽनेनेति ल्युट् ) शस्त्रम् ( शस्यतेऽनेनेति ष्ट्रन् ) अस्त्रम् ( अस्यतेऽनेनेति ष्ट्रन् ) ये ४ न० नाम शस्त्र के हैं॥ ८२ ॥

धनुः[4] ( धनति इति उस् , उप्रत्यये उदन्तः पुंसि ) चापः ( चपस्य वंशभेदस्य विकारः इति अण् )

---

१. अक्षौहिण्यायामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः। संख्यायुक्ता सहस्राणि गजानामेकविंशतिः॥ एवमेव रथानां तु संख्यानं कीर्तितं बुधैः। पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु। संख्यातास्तुरगास्तज्ज्ञैः विना रथतुरङ्गमैः। नृणां शतसहस्राणि नवैव तु। शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः॥

२. श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्यां त्रिवर्गसंपत्तौ वेषोपकरणे मतौ॥ इति विश्वमेदिन्यौ।

३. लक्ष्मीः श्रीशोभासंपत्प्रियङ्गुषु। धनोत्कर्षस्य। इति हेमचन्द्रः।

४. धनुः पियाले ना न स्त्री राशिभेदे शरासने। धनुर्धरे त्रिषु। इति सान्तेषु मेदिनी। धनुः पुमान् पियालद्रौ राशिभेदे शरासने। इति मेदिनी। ऊप्रत्ययान्ते स्त्रीलिङ्गोऽपि यथा—स्थावरं तु धनुर्गुणी। शरावापो धनूः स्त्री स्यात् तृणता त्रिणतापि च॥ इति त्रिकाण्डशेषात्।

**इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥ ८३ ॥**
**कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ ।**
**कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥ ८४ ॥**
**लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ।**

---

धन्वन्[1] ( धन्वति इति कनिन् ) शरासनम् ( शराः अस्यन्तेऽनेनेति ल्युट् ) कोदण्डम्[2] (को टति इति बाहुलकदण्डन् पृषोदरादिः, कौतीति क्विच् कौर्दण्डो वंशोऽस्य वा) [3]कार्मुकम् ( कर्मणे प्रभवति इति उकञ् ) [4]इष्वासः (इषवो बाणाः अस्यन्तेऽनेनेति घञ् ) ये ७ नाम धनुष के हैं जिनमें क्रमशः १–२पुं० न०, ३–६न०, ७ वाँ पुं० है ।

अथ कर्णस्य शरासनमिति सम्बन्धः—[5]कालपृष्ठम् ( कालो यम इव पृष्ठमस्येति ) यह १ न० नाम कर्ण के धनुष का है ॥ ८३ ॥

कपिध्वजस्य—[6]गाण्डीवः ( गण्ड्यते इति इञ् गाण्डिरस्यास्तीति तदन्तात् ङीष्, तदस्यास्तीति वः, वप्रत्ययविधायकसूत्रे संहितया ह्रस्वदीर्घयोर्ग्रहः तेन गाण्डिवोऽपि ) ये २ पुं० न० नाम अर्जुन के धनुष के हैं । कपिः ध्वजे यस्य तस्यार्जुनस्येति शेषः । यह धनुर्मात्रका नाम है ऐसा भी मत है ।

[7]कोटिः ( कोट्यते इति इः ) अटनी ( अटति गुणोऽत्र बाहुलकादनिः ङीष् च ) ये २ स्त्री० नाम धनुष के दोनों किनारों के हैं ।

ज्यायाः गुणस्य आघातवारणे इति सम्बन्धः—[8]गोधा ( गुध्येते बाहुभ्यामिति घञ् ) [9]तलम् ( तलति इति अच् ) ये २ नाम क्रमशः १ स्त्री० १ न० धनुष की डोरी की चोट से बचने के लिए हाथ में पहने जाने वाले चमड़े से बने हुए दस्ताने के हैं ॥ ८४ ॥

लस्तकः ( लस्यते स्म इति क्तः स्वार्थे कन् इडभावश्च ) धनुर्मध्यम् ( धनुषो मध्यम् ) ये २ नाम धनुष के बीच वाले भाग के हैं । जिनमें १ पुं० २य न० हैं ।

मौर्वी ( मूर्वायाः विकारः इत्यण् ङीप् च ) ज्या (जिनाति इति 'ज्या वयोहानौ' धातोः 'अन्येभ्योऽपि' इति डः ) शिञ्जिनी ( शिङ्क्ते इति णिनिः ) [10]गुणः ( गुण्यते इति घञ् अज्वा ) ये ४ नाम धनुष की डोरी के हैं । जिनमें १–३ स्त्री० ४र्थ पुं० है ।

---

१. धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च । इति मेदिनी ।
२. कोदण्डं कार्मुके देशभेदभ्रूलतयोरपि । इति हेमचन्द्रः ।
३. अथ कार्मुकः । वंशे कार्मुकमिष्वासे कर्मठे । इति हैमः । ४. इष्वासो धन्वधन्विनोः । इति हैमः ।
५. कालपृष्ठं कर्णचापे पुंसि कङ्कविहङ्गमे । इति मेदिनी । कालपृष्ठं तु कोदण्डमात्रके कर्णधन्वनि । कालपृष्ठो मृगभेदे कङ्के । इति हैमः । ६. जिष्णोर्धनुषि कोदण्डे गाण्डीवं गाण्डिवं तथा । इति शाश्वतः ।
७. कोटि स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः । इति मेदिनी ।
८. गोधा तलनिहाकयोः । इति मेदिनी । ९. तलश्चपटे तालद्रौ तलं ज्याघातवारणे । [illegible] स्वभावाधरयोस्तन्त्री घाते च सव्यतः । तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीवं ज्याघातवारणे । इति मेदिनी ।
१०. गुणो ज्यासूत्रतन्तुषु । रज्जौ सत्त्वादौ संध्यादौ शौर्यादौ भीम इन्द्रिये । रूपादावप्रधाने च दोषादन्यस्मिन् विशेषणे । इति हैमः ।

स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८५ ॥
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ।
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८७ ॥

[1]प्रत्यालीढम् ( प्रत्यालेहनम् इति क्तः ) [2]आलीढम् ( आलेहनम् इति क्तः ) ऊर्ध्वस्थस्य वामपादप्रसारे दक्षिणपादसंकोचे आद्यम्। विपर्ययेऽन्त्यम्। आदिना [3]समपद-विशाख-मण्डलानां ग्रहः। ये ५ नाम धनुषधारियों के स्थानभेद या स्थितिभेद के हैं ॥ ८५ ॥

[4]लक्षम् ( लक्ष्यते इति घञ् ) लक्ष्यम् ( लक्ष्यते इति यत् ) शरव्यम् ( शरवे हिंसाय हितम् इति ) ये ३ न० नाम निशाने के हैं।

शराभ्यासः ( शरमोक्षस्याभ्यासः ) [5]उपासनम् ( उपास्यते इति उपपूर्वः असुक्षेपणे, आस उपवेशने वा धातोः भावे ल्युट् ) ये २ नाम क्रमशः १ पुं० १ न० बाण चलाने का अभ्यास करने के हैं।

पृषत्कः, ( पर्षति इति शतृप्रत्ययान्तो निपातः गुणाभावः स्वार्थे कन् च ), [6]बाणो बणनम् इति घञ् ( बाणः शब्दोऽस्येति अच् ) [7]विशिखः ( विशिष्टा शिखाऽग्रमस्य ) अजिह्मगः ( जिह्मस्याभावः, अजिह्ममृजु गच्छति इति डः ) [8]खगः ( खं गच्छति इति डः ) [9] आशुगः ( आशु शीघ्रं गच्छति इति डः ) [10] कलम्बः ( कल्यते इति अम्बच् ) [11]मार्गणः ( मार्गयति इति ल्युः ) [12]शरः ( शृणातीति अप् ) [13]पत्री ( पत्राणि पक्षाः सन्त्यस्येति इनिः ) [14]रोपः ( रोप्यते अनेन वेति रूप विमोहने ण्यन्तः, घञ् ) इषुः ( ईष्यतेऽनेनेति उः आदेरिच्च ) ये १२ नाम बाण के हैं जिनमें ११ पुं०, १ पुं० स्त्री० हैं।

प्रक्ष्वेडनः ( प्रकर्षेण क्ष्वेडते इति ल्युः पृषोदरादिः ) नाराचः ( नरानाचामति इति डः प्रज्ञाद्यण्, यद्वा नराणां समूहः नारम्, नारमाचामति इति डः ) ये २ पुं० नाम लौहनिर्मित बाण के हैं।

---

१. प्रत्यालीढं तु चरणन्यासभेदेऽशिते त्रिषु। इति मेदिनी।
२. आलीढं पादन्यासे शिते त्रिषु। इति विश्वमेदिन्यौ।
३. वैष्णवं समपादं च वैशाखं मण्डलं तथा। प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम् ॥ इति रभसः। ४. लक्षं स्याजशरव्ययोः। संख्यायामपि। इति हैमः। ५. उपासनमासने। शुश्रूषायां शराभ्यासेऽपि। इति हैमः। ६. बाणः स्याद् गोस्तने दैत्यभेदे केवलकाण्डयोः। बाणा तु बाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः। इति मेदिनी ७. विशिखा खनित्रिकायां रथ्यायां विशिखः शरे। इति हैमः।
८. खगोऽर्कग्रहपक्षिषु। शरे देवेऽपि। इति हैमः। ९. आशुगोऽर्के शरे वायौ। इति हेमचन्द्रः।
१०. कलम्बी शाकभेदेऽपि कदम्बशरयोः पुमान्। इति मेदिनी।
११. मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि। इति हैमः।
१२. शरस्तु तेजने बाणे दध्यग्रे ना शरं जले। इति विश्वमेदिन्यौ।
१३. पत्री काण्डे खगे द्रुमे। रथेऽद्रौ रथिके श्येने। इति हेमचन्द्रः।
१४. रोपो रोपणबाणयोः। इति विश्वः।

निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ।
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८८ ॥
तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।
कौक्षेयको मण्डलाग्रः करपालः कृपाणवत् ॥ ८९ ॥
त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् ।

---

पक्षः ( पक्षति पक्ष्यतेऽनेन वेति अच् घञ् वा ) [1]वाजः ( व्रजत्यनेनेति घञ् निष्ठायां सेट्त्वान्न कुत्वम् वाजयतीति पचाद्यच् वा ) ये १ पुं० नाम बाण में लगे हुए पंख के हैं ॥ ८७ ॥

उत्तरे लिप्तकान्ताः त्रिषु इति सम्बन्धः । निरस्तः ( निरस्यते स्मेति क्तः ) यह १ त्रि० नाम धनुष से छोड़े हुए बाण का है ।

विषाक्ते = विषसम्बद्धबाणे-दिग्धः ( दिह्यते स्मेति क्तः ) लिप्तकः ( लिप्यते स्मेति क्तः स्वार्थे कन् च ) ये २ त्रि० नाम विष में बुझाये हुए बाण के हैं ।

[2]तूणः ( तूणयति इति अच्, तूण्यते शरैः इति घञ् वा ) उपासङ्गः ( उपासज्यन्तेऽत्र शराः इति घञ् ) तूणीरः ( तूणीं तूणत्वमीर्ते इति ईरगतौ कर्मण्यण्, यद्वा तूणीं शरैः संकोचं राति इति कः ) निषङ्गः ( निसज्यन्ते शरा अत्रेति घञ् षत्वञ्च ) इषुधिः ( इषवो धीयन्तेऽत्र इति किः ) तूणी ( तूणयति इति अच् ङीषपि ) ये ६ नाम तरकस के हैं जिनमें १–४ पुं०, ५म पुं० स्त्री०, ६ठा स्त्री० है ।

[3]खड्गः ( खण्डति परम् इति गन्, आगमशास्त्रस्यानित्यत्वान्न नुम् ) [4]निस्त्रिंशः ( निर्गत-स्त्रिंशतोऽङ्गुलिभ्यः इति डच् ) [5]चन्द्रहासः ( चन्द्र इव हासः प्रभाऽस्येति, चन्द्रं हसति वेति अण् ) [6]असिः ( अस्यते असति वेति रन् ) [7]रिष्टिः ( रेषति रिशति वति क्तिन् ) कौक्षेयकः ( कुक्षौ भवः इति ढकञ् ) मण्डलाग्रः ( मण्डलमग्रमस्य ) करपालः ( करं पालयति इति कर्मण्यण्, करवालः इति पाठे करं वलति इति कर्मण्यण् वा ) कृपाणः ( कृपां नुदति इति डः णत्वञ्च ) ये ९ पुं० नाम खड्ग आदि के हैं ।

त्सरुः ( त्सरति त्सर छद्मगतौ इति उः ) यह १ पुं० नाम खड्ग आदि की मुठिया है ।

---

१. वाजी निस्वनपक्षयोः । वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु । इति मेदिनी ।
२. स्त्रियां तूणेषुधी उपासङ्गः । इति रत्नकोषः । ङीपपि—तूणी नील्यां निषङ्गे वा ना । इति मेदिनी । तूणी तु नील्यां तूणौ निषङ्गके । इति विश्वः ।
३. खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके । इति विश्वमेदिन्यौ ।
४. निस्त्रिंशो निर्घृणे खड्गे । इति हैमः ।
५. चन्द्रहासोऽसिमात्रके दशग्रीवकृपाणे च कनीयसि च गुग्गुलौ । इति हैमः ।
६. असिः खड्गे नदीभिदि । इति हैमः ।
७. रिष्टिः खड्गे ना शुभे स्त्री । इति मेदिनी । करवालमण्डलाग्रकालेयासिरिष्टयः । ऋष्टिः खड्गस्तरवारिकौक्षेयकौ च नन्दकः ॥ इति रभसः ।

**फलकोऽस्त्रीफलं चर्म संग्राहो मुष्टिरस्य यः ॥ ९० ॥**
**द्रुघणो मुद्गरघनौ स्यादीली करवालिका ।**
**भिन्दिपालः सृगस्तुल्यौ परिघः परिघातिनः ॥ ९१ ॥**
**द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।**

---

[1]मेखला ( मां लक्ष्मीमीखति मा ईखति वा इति बाहुलकात् कलच् ) यह १ स्त्री० नाम म्यान और कमर में कसी जाने वाली पेटी का है ।

फलकः ( फलति इति वुन् ) [2]फलम् ( फलति इति अच् ) [3]चर्म ( चरति चर्यते वा इति मनिन् ) ये ३ नाम ढाल के हैं । जिनमें १म नपुं०, पुं० २–३य न० हैं ।

अस्य = फलकस्य यः मुष्टिः इति सम्बन्धः—संग्रहः ( संगृह्यते इति कर्मणि घञ् ) यह १ पुं० नाम ढाल की मुठिया का है ॥ ९० ॥

[4]द्रुघणः ( द्रुर्वृक्षो हन्यतेऽनेनेति अप् घनादेशश्च, 'पूर्वपदात्' इति णत्वमपि ) मुद्गरः (गिरति इति अच्, मुदो गरः ) [5]घनः ( हन्यतेऽनेनेति अप् घनादेशश्च ) ये ३ पुं० नाम मुद्गर के हैं ।

ईली ( ईर्तें ईर्यते वा इति इन् ङीष् वा कपिलकादित्वाल्लत्वम् ) करपालिका ( करं पालयति इत्यण् ङीप् च । करवालिका इति पाठे करं वलते अण् करेण वल्यते वा णिजन्तात् इः कन् च ) ये २ स्त्री० नाम गुप्ती, तरवार के हैं ।

[6]भिन्दिपालः ( भिन्दति इन्, भिन्दिं पालयति इत्यण् ) सृगः ( सरति इति बाहुलकाद् कः ) ये २ पुं० नाम गुलेल या नलिका नामक हथियार के हैं ।

[7]परिघः ( परितो हन्यतेऽनेति परिपूर्वकात् हन्धातोरप् घशब्दस्चान्तादेशः ) परिघातनः ( परितो घातयत्यनेन इति ल्युट् ) ये २ पुं० नाम लोह से मढ़ी हुई लाठी के हैं ॥ ९१ ॥

कुठारः (कुठे गतिप्रतिघाते आरो गतिरस्य, जातित्वात् ङीषि स्त्रीत्वमपि कुठं वृक्षमृच्छति इति अण् वा) स्वधितिः ( स्वं धियति इति क्तिच् ) परशुः ( परं शृणाति इति कुः डिच्च ) [8]परश्वधः ( परस्य श्वयनम् श्वः, परश्वं धयति इति कः ) ये ४ नाम फरसा, कुल्हाड़ी के हैं । जिनमें १म पुं स्त्री०, २–४ पुं० हैं ।

---

१. मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः । इति मेदिनी ।

२. फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः ॥ इति मेदिनी ।

३. चर्म कृत्तौ च फलके । इति विश्वः । ४. द्रुघणो मुद्गरेऽपि स्याद् द्रुहिणे च परश्वधे । इति विश्वमेदिन्यौ ।

५. घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुरते घनं मध्यं नृत्यवाद्यप्रकारयोः ॥ इति हैमः ।

६. भिन्दिर्द्वादशनालं तु दशकुन्तोऽभिधीयते । इति भरतः । तदवच्छिन्नकालोऽपि भिन्दिः ।

७. परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेऽपि च । इति हैमः ।

८. यष्टिपर्श्वधहेतिकौ । इति स्वाम्युक्तत्वात् पर्श्वधोऽपि । कुठारः स्त्री च स्वधितिः परशुश्च परश्वधः । कुटाङ्कः पशुँ । अथ क्षुरिकाकोशशायिका । इति रभसः ।

**स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९२ ॥**
**वा पुंसि शल्यं शङ्कुर्ना शर्वला तोमरोऽस्त्रियाम् ।**
**प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥**
**सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः ।**
**लोहाभिहारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ९४ ॥**

---

[1]शस्त्री ( शस्यतेऽनया ष्ट्रन् ङीष् च ) असिपुत्री ( असेः पुत्री ) छुरिका ( छुरति इति क्वुन् टाप् च ) असिधेनुका ( असेर्धेनुरिव कुन् ) ये ४ स्त्री० नाम छुरी के हैं ॥ ९२ ॥

[2]शल्यम् ( शलति इति यत् ) [3]शंकुः ( शंकतेऽस्मात् 'खरु शंकु पीयु' इति कुप्रत्ययान्तो निपातः) ये नाम बाण के अग्रभाग या बर्छी के हैं। जिनमें १म पुं० न०, २य पुं० मात्र हैं।

शर्वला ( शर्वति इति कलच्। सर्वं लाति इति विग्रहे दन्त्यादिरपि ) तोमरः ( तौति इति विच् म्रियते इति अन्तर्भावितण्यर्थः, अच् तोश्चासौ मरश्च ) ये २ नाम तोमर या गड़ासे के हैं। जिनमे १म स्त्री०, २य पुं० न० हैं।

प्रासः ( प्रास्यते इति कर्मणि घञ् ) [4]कुन्तः ( कुं शरीरमुनत्ति इति बाहुलकात्तः शकन्ध्वादिः ) ये २ पुं० नाम भाला के हैं।

[5]कोणः ( कुणत्यनेन इति घञ् कर्तर्यच् वा ) [6]पालिः ( पालयति इति इः ) [7]अश्रिः ( अश्नाति इति बङ्क्र्यादित्वात् क्रिन् ) [8]कोटिः ( कोटयति कोट्यते वा इति इः ) ये ४ नाम अस्त्रों के नोक के हैं। जिनमें १म पुं० २-४ स्त्री० हैं ॥ ९३ ॥

सर्वाभिसारः ( सर्वेणाऽभिसरणम् इति भावे घञ् ) [9]सर्वौघः ( सर्वस्यौघः ) सर्वसंनहनम् ( सर्वेषां संनहनम् सर्वसंनहनमर्थो यस्येति कप् ) ये ३ नाम सभी ( चतुरङ्गिणी ) सेना को तैयार करने के हैं।

लोहाभिहारः ( लोहस्य[10] शस्त्रस्याभितो हरणम् इति भावे घञ् ) अस्त्रभृतां राज्ञां निःशेषेण नितरां वा राजनम् इति ण्यन्तः, भावे, युच् तस्याः विधिः ) यह १ पुं० नाम युद्ध के लिए उद्यत

---

१. शस्त्रमायुधे। लोहे शस्त्रीछुरिकायाम्। इति हैमः।

२. शल्यं तु न स्त्रियां शंकौ क्लीबे क्ष्वेडेषु तोमरे। मदनद्रुश्वाविधोर्ना। इति मेदिनी।

३. शंकुः पत्रशिराजाले संख्याकीलकशम्भुषु। यादोऽस्त्रभेदयोर्मेढ्रे। इति हैमः। संख्याकीलकयोः शंकुः कीले गरे शस्त्रे संख्यापादपभेदयोः। यादोभेदे च पापे च स्थाणावपि च दृश्यते॥ विश्वः। ४. कुन्तः प्रासे चण्डभावे क्षुद्रजातौ गवेधुके। कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलद्रुमे। इति विश्वः।

५. कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने। एकदेशे गृहादोनामश्रौ च लगुडेऽपि च। इति मेदिनी। ६. पालिः कर्णलताग्रेऽश्रौ पङ्क्त्यावङ्कप्रभेदयोः। छत्रादिदेये स्त्री पाली यूका-सश्मश्रुयोषितोः। इति मेदिनी। ७. अश्रिः कौणैकदेशयोः। इति धरणिः। अस्त्रः कोणे शिरसिजे इति। विश्वात् अस्त्रोऽपि। ८. कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः। इति मेदिनी। ९. सर्वौघो गुरुवेगे च सर्वसंनहने पुमान्। इति मेदिनी।

१०. लोहोऽस्त्री शस्त्रके लौहे। इति मेदिनी। लोहाभिहार इत्युक्तो विधिर्नीराजनोत्तरः। इत्यमरमाला

यत्सेनयाभिगमनमरौ तदभिषेणनम् ।
यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥
स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् ।
अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥
वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः ।
स्युर्मागधास्तु मगधा वन्दिनः स्तुतिपाठकाः ॥ ९७ ॥

---

वीरों या भूपतियों की आरती का, या युद्ध यात्रा के पहले शस्त्रों की पूजा का है। दीक्षित के मत से महानवमी के दिन प्रस्थान से पूर्व शस्त्र और वाहनों की पूजा का नाम है ॥ ९४ ॥

अरौ = शत्रुं प्रति यत्सेनया अभिगमनन्तत्—अभिषेणनम् ( सेनयाभियानम् इति णिच्, ल्युट्, षत्वमपि ) यह १ न० नाम शत्रु के सम्मुख सेना सहित जाने का है।

[1]यात्रा ( यानम् इति स्त्रन् टाप् च ) व्रज्या ( व्रजनम् इति क्यप् ) अभिनिर्याणम् ( अभिनिर्पूर्वकात् याधातोर्भावे ल्युट् ) प्रस्थानम् ( अत्रापि ल्युट् ) गमनम् ( इत्यत्रापि ल्युट् ) [2]गमः ( गमनम् इति अप् ) ये ६ नाम प्रस्थान के हैं। जिनमें १–२ स्त्री० ३–५ नपुं०, ६ ठा पुं० हैं ॥ ९५ ॥

[3]आसारः ( आसरणम् इति घञ् ) प्रसरणम् ( प्रसरणमिति ल्युट् णत्वञ्च ) ये २ नाम सेना के सब तरफ फैल जाने के हैं। जिनमें १म पुं०, द्वितीय न० हैं।

प्रचक्रम् ( प्रस्थितं चक्रं = सैन्यम् ) चलितम् ये २ न० नाम यात्रा करती हुई सेना के हैं।

अभिक्रमः ( अभिक्रमणम् इति भावे घञ् वृद्ध्यभावश्च ) यह १ पुं० नाम निर्भय होकर शत्रु के समक्ष वीरों के जाने का है ॥ ९६ ॥

वैतालिकः ( विविधेन तालेन शब्देन चरन्ति इति ठक् ) बोधकरः ( बोधं करोति इति टः ) ये २ पुं० नाम प्रातःकाल राजा को जगाने, व स्तुतिपाठ करने वाले बन्दी विशेष के हैं।

चाक्रिकः ( चक्रेण समूहेन चरति इति ठक् ) घाण्टिकः ( घण्टया चरति इति ठक् ) ये २ पुं० नाम घण्टा बजाने वाले तथा घड़ियारी बाजा बजाने वाले बन्दी के हैं।

मागधः ( मगध्यति याचते मगधः इति याच्ञार्थः कण्ड्वादियगन्तः, अण् यलोपः ) मगधः ( मगध्यति याचते इति पक्षे अच् ) ये २ पुं० नाम राजा की वंशावली वर्णन करने वाले बन्दी के हैं।

बन्दी ( वन्दते इति णिनिः ) स्तुतिपाठकः ( स्तुतेः पाठकः ) ये २ पुं० नाम राजा की स्तुति करने वाले बन्दी के हैं ॥ ९७ ॥

---

१. यात्रा तु यापनेऽपि स्याद् गमनोत्सवयोः स्त्रियाम्। इति मेदिनी।
२. गमो नाक्षविवर्ते स्यादपर्यालोचितेऽध्वनि। इति मेदिनी।
३. आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले। इति विश्वः।

संशप्तकास्तु समयात् संगामादादिवर्तिनः।
रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयोरजः ॥ ९८ ॥
चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले।
पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम् ॥ ९९ ॥
सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा।
अहं पूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥
आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि।

---

संशप्तकः ( संशपनम् इति भावे क्तः, संशप्तं = शपथं कुर्वन्ति इति णिच्, ण्वुल्। सम्यक् शप्तं सत्यं येषां ते इति वा ) यह १ पुं० नाम प्रतिज्ञा करने के कारण रणक्षेत्र से न लौटने वाले वीरों का है।

[1]रेणुः ( रिणाति 'री गतिश्लेषणयोः' धातुः तस्मात् णुः ) धूलिः ( धुवति धूयते वेति बाहुलकाल्लिः ) पांशुः ( पंशति इति 'अर्जिदृशिकम्यमि' इति निपातनात् दीर्घः कुप्रत्ययश्च ) रजः ( रजति इति असुन् ) ये ४ नाम धूल के हैं जिनमें १म पुं० स्त्री, २य स्त्री०, ३य पुं०, ४र्थ नपुं० हैं।

[2]चूर्णम् ( चूर्ण्यते इति अच् ) [3]क्षोदः ( क्षुद्यते इति घञ् ) ये २ नाम क्रम से १ न० १ पुं० बारीक धूल के हैं।

समुत्पिञ्जः ( समुत्पिञ्जति इति ण्यन्तः, अच् ) पिञ्जलः ( पिञ्जयति इति बाहुलकादलच् पिञ्जं लाति को वा ) ये २ पुं० नाम अधिक घनी ( अति संकुल ) सेना के हैं।

[4]पताका ( पतति पत्यतेऽनया वा इत्याकः टाप् च ) [5]वैजयन्ती ( विजयते इति झच्, विजयन्तस्येदम् इत्यण् ) [6]केतनम् ( केत्यते ज्ञायतेऽनेनेति ल्युट् ) [7]ध्वजम् ( ध्वजति इति पचाद्यच् अन्तर्भावितण्यर्थो वा ) ये ४ नाम पताका झण्डे के हैं, जिनमें १-२ स्त्री० ३य नपुं० ४र्थ पुं० हैं ॥ ९९ ॥

अतिभयप्रदा या युद्धभूमिः सा इति सम्बन्धः—वीराशंसनम् ( वीराः आशंसयन्तेऽत्रेति ल्युट् ) यह १ न० नाम भय देने वाली युद्ध भूमि का है।

अहंपूर्विका ( अहम् पूर्वम् इति सुप्सुपा समासः, स्वार्थे कन्, अहं पूर्वम् इत्यस्यां ठन् वा ) यह १ स्त्रीलिंग नाम मैं पहले पहुँचा २ इस प्रकार स्पर्धा से योद्धाओं के दौड़ने का है ॥१००॥

दर्पात् आत्मनि या सम्भावना स्यात् सा आहोपुरुषिका ( अहो अहं पुरुषः इति 'सुप्सुपा' समासः, अहोपुरुषस्य भावः इति वुञ् ) यह १ स्त्री० नाम स्वाभिमानपूर्वक अपना सामर्थ्य दिखलाने का है।

---

१. रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः। इति विश्वमेदिन्यौ।
२. चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्करा। इति शाश्वतः।
३. क्षोदः पेषणचूर्णयोः। इति हैमः।
४. पताका वैजयन्त्यां स्यात्सौभाग्यनाटकाङ्कयो इति विश्वमेदिन्यौ।
५. वैजयन्तो गुहे शक्रप्रासादध्वजयोः पुमान्। वैजयन्ती पताकायां जयन्ती पादपे स्त्रियाम्॥ इति मेदिनी। ६. केतनं तु निमन्त्रणे। गृहे केतौ च कृत्ये च। इति मेदिनी।
७. ध्वजः पूर्वदिशो गृहे। शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च। इति हैमः।

अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकारः ॥१०१॥
द्रविणं तरःसहोबलशौर्याणि स्थाम शुष्मं च।
शक्तिः पराक्रमप्राणौ विक्रमस्त्वतिशक्तिता ॥ १०२ ॥
वीरपाणं तु तत्पानं वृत्ते भाविनि वा रणे।
युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ १०३ ॥

---

परस्परं योऽहंकारो भवति सा तु अहमहमिका ( अहम् अहम् शब्दोऽस्त्यत्रेति वीप्सायां द्वित्वम्, ठन्, अनित्यत्वात् न टिलोपः ) यह १ स्त्री नाम पारस्परिक अहंकार का है ॥१०१॥

[1]द्रविणम् ( द्रवत्यनेनेति इनन् णत्वञ्च ) [2]तरः ( तरत्यनेनेति असुन् ) [3]सहः ( सह्यतेऽनेन इति असुन् ) [4]बलम् ( बलते बलत्यनेनेति घः ) [5]शौर्यम् ( शूरस्य भावः कर्म वेति ष्यञ् ) स्थाम ( तिष्ठत्यनेन इति मनिन् ) [6]शुष्मम् ( शुष्यत्यनेनारिः इति मन् ) [7]शक्तिः ( शक्यतेऽनयेति क्तिन् ) [8]पराक्रमः ( पराक्रम्यतेऽनेनेति घञ् ) [9]प्राणः ( प्राणित्यनेनेति घञ् ) ये १० नाम पराक्रम के हैं। जिनमें १—७ नपुं० ८म स्त्री० ९-१० पुं० हैं।

[10]विक्रमः (विक्रमणम् इति घञ्) अतिशक्तिता (अतिशयिता शक्तिः यस्य तस्य भावः इति तल्) ये २ नाम अधिक बल के हैं जिनमें १ म पुं०, २य स्त्री० हैं।

वृत्ते = समाप्ते भाविनि वा रणे, यत् मदिरादिपानं तत्—वीरपाणम् ( पीयतेऽनेनेति करणे ल्युट्, वीराणां पानम् इति 'वा भावकरणयोः' इति णत्वम्, पक्षे वीरपानम् ) यह १ न० नाम युद्धारम्भ या अन्त में उत्साहवृद्धि के लिए मदिरादि पान करने का है।

युद्धम् ( युद्ध्यते इति भावे क्तः ) आयोधनम् ( आयुद्ध्यते इति भावे ल्युट् ) [11]जन्यम् (जायते इति यगन्तो निपातः ) [12]प्रधनम् (प्रधानम् प्रदधति वा इति क्युः) [13]प्रविदारणम् (दारयते इति दृविदारणे

---

१. द्रविणं काञ्चने धने। पराक्रमे बलेऽपि स्यात्। इति हेमचन्द्रः। २. तरो जवे बले। इति हैमः।
३. सहो बले ज्योतिषि च सहा हेमन्तमार्गयोः। इति सान्तेषु हैमः। रण्डोत्पला मुद्गपर्णी कुमारी-नखभेषजे। सहा स्त्रियां, बले न स्त्री। इति रभसाद् अदन्तमपि।
४. बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च। बलयुक्तेऽन्यलिङ्गः स्याद् बाट्यालके तु योषिति। इति मेदिनी। ५. शौर्यमारभटीशक्त्योः। इति विश्वः।
६. शुष्मं तेजसि, सूर्ये ना। इति मेदिनी।
७. शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम्। इति हैमः।
८. पराक्रमो विक्रमे स्यात्सामर्थ्योद्योगयोरपि। इति विश्वः।
९. प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु। इति मेदिनी। १०. विक्रमस्तु पुमान् क्रान्तिमात्रे स्याच्छक्तिसंपदि। इति मेदिनी।
११. जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्। जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्। त्रिषूत्पाद्यजनित्रोश्च नवोढा ज्ञातिभृत्ययोः। वरस्निग्धे॥ इति विश्वमेदिन्यौ।
१२. प्रधनं युधि दारणे। इति हैमः। १ . प्रविदारणमाख्यातं संपरायेऽवदारणे। इति मेदिनी।

मुधमास्कन्दनं संख्यं समीकं सांपरायिकम् ।
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥ १०४ ॥
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ।
अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः ॥ १०५ ॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ।
नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले ॥ १०६ ॥

धातोः ण्यन्तात् भावे ल्युट् ) मृधम बाहुलकात् भावे घञर्थे वा कः [1]आस्कन्दनम् ( आस्कन्दितम् इति स्कन्दिर् गतिशोषणयोः इति भावे ल्युट् ) [2]संख्यम् ( संख्यानम् इति चक्षिङः ख्यातेर्वा कः ) समीकम् ( समनम् इति कीकन्, वा सम्यगयनम्, ई-गत्यादौ इति को वा ) सांपरायिकम् ( संपरायनम् इति अय् गतौ वा घञ्, स्वार्थे कन् च, ठकि सांपरायिकोऽपि ) ये १० नाम नपुं० हैं ।

समरः ( समरणम् इति ऋ धातोः घः अप् वा ) [3] अनीकः ( अननम् इति अनीकादयश्चेति निपातनात् साधुः अनिहृषिभ्यां किच्चेति वा ) [4]रणः ( रणनम् इति अप् ) ये ३ नाम पुं० नपुं० हैं ।

[5]कलहः ( कलस्य मधुरध्वनेः हननम् इति डः ) [6]विग्रहः ( विग्रहणम् इति अप् ) [7]संप्रहारः ( संप्रहरणम् इति घञ् ) अभिसंपातः ( अभिसंपतनम् इति घञ् ) [8]कलिः ( कलनम् इति इन् ) संस्फोटः ( संस्फोटनम् इति घञ् ) संयुगः ( संयोजनम् इति घञ् गुणाभावश्च ) [9]अभ्यामर्दः ( अभ्यामर्दनम् इति घञ् ) [10] समाघातः ( समाहननम् इति घञ् कुत्वम् तकारादेशश्च ) संग्रामः संग्रामणम् इति ण्यन्तः, अच् ) [11]अभ्यागमः ( अभ्यागमनम् इनि अप् ) [12]आहवः ( आह्वानम् इत्यप् संप्रसारणञ्च ) समुदायः ( समुदयनम् इति घञ् ) संयत् ( संयमनम् इति संपदादिः, मलोपः तुक् च ) ये १३ नाम पुं० हैं ।

[13]समितिः ( समयनम् इति इ गतौ क्तिच् ) [14]आजिः ( अजनम् इति इञ् वृद्धौ व्यभावश्च ) समित् ( समयनम् इति क्विप् सम्पदादिः तुक् इ गतौ धातुः ) युत् ( योधनम् इति क्विप् सम्पदादिः तुक् च ) ये ५ स्त्री० हैं । इस प्रकार ये ३१ नाम युद्ध अर्थात् प्रहार किया के हैं ॥ १०५ १/२ ॥

नियुद्धम् ( निगृह्य नितरां वा युद्धम् बाहुयुद्धम् ( बाह्वोः युद्धम् ) ये २ न० नाम दङ्गल के हैं ।

---

१. आस्कन्दनं तिरस्कारे रणे संशोषणेऽपि च । इति विश्वः ।
२. संख्यमाहवे । संख्यैकादौ विचारे च । इति हैमः । ३. अनीकोऽस्त्री रणे सैन्ये । इति मेदिनी ।
४. रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम् । इति मेदिनी । ५. कलं तु मधुरध्वनौ । इति धरणिः ।
६. विग्रहो युधि विस्तारे प्रविभागशरीरयोः । इति हैमः । ७. संप्रहारो गतौ रणे । इति हैमः ।
८. कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि । इति हैमः ।
९. अभिमर्दस्तु पुंसि स्यादवमर्दे संपराये च । इति मेदिनी ।
१०. समाघातो वधे युद्धे । इति मेदिनी ।
११. अभ्यागमः समरेऽन्तिके । घाते रोधेऽभ्युपगमे । इति हैमः ।
१२. आहवः संगरे पक्षे । इति हैमः । १३. समितिर्युधि संगमे । साम्ये सभायाम् । इति हेमचन्द्रः ।
१४. आजिः स्त्री समभूमौ संग्रामे । इति मेदिनी ।

क्ष्वेडा तु सिंहनादः स्यात् करिणां घटना घटा ।
क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् ॥ १०७ ॥
विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ ।
प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् ॥ १०८ ॥

---

[1]तुमुलम् ( तवनम् तौति वेति बाहुलकान्मुलुक् त्विति सौत्रो धातुः ) रणसंकुलम् ( रणरण संकुलम् ) ये २ न० नाम अच्छी तरह के युद्ध ( समासान युद्द ) के हैं ॥ १०६ ॥

[2]क्ष्वेडा ( क्ष्वेडनम् इति ञिष्विदा धातोः घञ् च पृषोदरादिः रूपभेदात् स्त्रीत्वम् विशेषणैरबाधितत्वान्न पुंस्त्वम् ) सिंहनादः ( सिंहवन्नदनम् इति घञ् ) ये नाम युद्ध में सिंह की तरह गर्जने के हैं जिनमें १म स्त्री०, द्वि० पुं० हैं।

करिणां हस्तिनां समुदाये—घटना ( घटयतीति युच् ) [3] घटा (घटनम् इति घटादयः षितः षित्वादङ्) ये २ स्त्री० नाम गजसमूह के हैं। दीक्षित ने दो नाम माना है। किन्तु 'घटा' का पर्याय 'घटना' को मानना उपयुक्त नहीं जचता।

क्रन्दनम्[4] ( क्रन्दितम् क्रदि आह्वाने इति धातोः भावे ल्युट् ) योधसंरावः ( योधानां संरवणम् इति रुशब्दे धातोः घञ् वृद्धौ, आव.देशश्च ) ये २ नाम एक दूसरे की स्पर्धा से युद्ध में ललकारने के हैं। जिनमें १म नपुं०, २य पुं० हैं।

बृंहितम् ( बृंहणम् इति क्तः ) करिगर्जितम् ( करिणां गर्जनम् इति क्तः ) ये २ न० नाम गजों के गर्जने के हैं ॥ १०७ ॥

धनुषः स्वानः = नादः—विस्फारः ( विस्फरणम् इति घञ् ) यह १ पुं० नाम धनुष के टङ्कार का है।

[5]पटहः ( पटं हन्ति इति डः ) [6] आडम्बरः ( आडम्बयति इति बाहुलकादरच् ) ये २ पुं० नाम नगाड़ा के हैं। समौ = समानार्थौ समानलिङ्गौ।

[7] प्रसभम् ( प्रगता सभा विचारोऽस्मात् ) बलात्कारः ( बलात्करणम् इति घञ् ) [8]हठः ( हठनम् इति घः ) ये ३ नाम जबर्दस्ती करने के हैं। जिनमें १म न० २–३ पुं० हैं।

---

१. तुमुलं रणसंकुले । तुमुलौ विभीतकद्रौ । इति हैमः । तुमुलं व्याकुले रणे । इति त्रिकाण्डशेषः ।
२. क्ष्वेडो ध्वनौ कणामये विषे । क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति । लोहितार्कपर्णफले घोषपुष्पे नपुंसकम् । दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः ॥ इति मेदिनी ।
३. घटः समाधिभेदेभशिरःकूट-कुटेषु च । घटा घटनगोष्ठीभघटनासु च योषिति ॥ इति मेदिनी ।
४. क्रन्दनं रोदनेऽपि स्यादाह्वनेऽपि । इति मेदिनी ।
५. पटहो ना समारम्भे आनके पुंनपुंसकम् । इति मेदिनी ।
६. आडम्बरः समारम्भे गजगर्जिततूर्ययोः । इति विश्वः ।
७. क्लीबे तु प्रसभं हठः । इति वोपालितः ।
८. हठः स्यात्प्रसभे पृश्न्याम् हेठो वाधाविहेठयोः । इति मेदिनी ।

अजन्यं क्लीब उत्पात उपसर्ग समः त्रयम् ।
मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ॥ १०९ ॥
अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ।
वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ॥ ११० ॥
प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ।
अपक्रमोऽपयानं च रणे भङ्गः पराजयः ॥ १११ ॥

---

[१]स्खलितम् ( स्खलनम् इति क्तः ) [२]छलम् ( छालम् इति कलच् आकारलोपश्च ) ये २ न० नाम युद्ध में कपट करने के हैं ॥ १०८ ॥

समम् = समानार्थकम्—अजन्यम् ( न जने साधुः इति यत्, न जन्यते इति यक् वा ) उत्पातः ( उत्पतनम् इति घञ् ) [३]उपसर्गः ( उपसर्जनम् उपसृज्यते वा घञ् ) ये ३ नाम उत्पात के हैं, जिनमें १म नपुं०, २–३य पुं० हैं ।

मूर्च्छा ( मूर्च्छनम् इत्यः दीर्घश्च ) कश्मलम् ( कशनम् इति कलः, मुट् च ) [४]मोहः ( मोहनम् इति घञ् ) ये ३ नाम क्रम से १ स्त्री०, २य न०, ३य पुं० बेहोशी के हैं ।

अवमर्दः ( अवमर्दनम् इति घञ् ) पीडनम् ( पीड्यते इति ल्युट् ) ये २ नाम क्रम से १ पुं०, २य न० देश को शत्रु द्वारा पीड़ित करने के हैं ॥ १० ॥

अभ्यवस्कन्दनम् ( अभ्यवस्कन्दितम् अभि-अवपूर्वात् स्कन्दिर् धातोः ल्युट् ) ये २ न० नाम मार कर शक्तिहीन करने तथा रात में छापा मारने के हैं ।

[५]विजयः ( विजयनम् इति अच् ) [६]जयः ( जयनम् इति अच् ) ये २ पुं० नाम विजय के हैं ।

वैरशुद्धिः ( वैरस्य शुद्धिः ) प्रतीकारः ( प्रतिकरणम् इति घञ् उपसर्गस्य दीर्घश्च ) वैरनिर्यातनम् ( निर्वतितम् निर्यातनम् इति ल्युट् वैरस्य निर्यातनम् ) ये ३ नाम क्रम से १ स्त्री०, २य पुं०, ३य न० दुश्मनी' को दूर करने ( प्रतिशोध ) के हैं ॥ ११० ॥

प्रद्रावः ( प्रद्रवणम् इति घञ् ) उद्द्रावः ( उद्द्रवणम् इति घञ् ) संद्रावः ( संद्रवणम् इति घञ् ) संदावः ( संदवनम् इति घञ् ) विद्रवः ( विद्रवणम् इति अप् ) [७]द्रवः ( द्रवणम् इति अप् ) अपक्रमः ( अपक्रमणम् इति घञ् ) अपयातम् ( अपयानम् इति ल्युट् ) ये ८ नाम क्रम से १–७ पुं०, ८म न० भागने के हैं ।

---

१. स्खलितं छलिते भ्रेषे । इति हैमः ।
२. छलं छद्मस्खलितयोः । इति हैमः ।
३. उपसर्गः पुमान् रोगभेदोपप्लवयोरपि । इति मेदिनी ।
४. अथ मोहो नृलिङ्गः स्यादविद्यायां च मूर्च्छने । इति मेदिनी ।
५. विजयः स्याज्जये पार्थे स्त्रियां तिथ्यन्तरे स्मृता । उमासख्याम् । इति मेदिनी ।
६. जया जयन्तीतिथिभित् पथ्योमातत्सखीषु च । अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे ॥ इति मेदिनी ।
७. द्रवः प्रद्रावनर्मणोः । विद्रवे रसगत्योश्च । इति हैमः ।

पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ।
प्रमापणं निबर्हणं निकारणं विशारणम् ॥ ११२ ॥
प्रवासनं परासनं निषूदनं निर्हिसनम् ।
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥ ११३ ॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥ ११४ ॥
उद्वासनप्रमथनक्रथनोज्जासनानि च ।
आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११५ ॥

---

रणे = युद्धे — [1]भङ्गः ( भञ्जनम् इति घञ् ) पराजयः ( पराजयनमिति अञ् ) ये २ पुं० नाम पराजय के हैं ॥ १११ ॥

पराजितः ( पराजीयते स्म परैराजीयते स्मेति वा क्तः ) पराभूतः ( पराभूयते स्मेति क्तः ) ये २ त्रि० नाम युद्ध में पराजितों ( हारे हुए ) के हैं ।

नष्टः ( नश्यति स्मेति क्तः ) तिरोहितः ( तिरोधीयते स्मेति कर्मणि, हिनोति स्म वेति कर्तरि क्तः ) ये २ त्रि० नाम युद्ध से भागकर छिपे हुए के हैं ।

प्रमापणम् ( प्रमापितं मीञ् हिंसायाम् स्वार्थण्यन्तः भावे ल्युट् ) निबर्हणम् ( निबर्हितं निपूर्वक वर्ह-हिंसायाम् इति ल्युट् ) निकारणम् ( निकारितं कृञ् हिंसायाम् इति ण्यन्तात् ल्युट् ) विशारणम् ( विशारितं शॄ हिंसायाम् इति ल्युट् ) प्रवासनम् ( प्रवासितं वस् छेदे इति ल्युट् ) परासनम् ( परास्तं असु क्षेपणे इति भावे ल्युट् ) निषूदनम् (निषूदितं षूद-क्षरणे भावे ल्युट् ) निर्हिसनम् ( निर्हिंसितं हिंस हिंसायाम् भावे ल्युट् ) निर्वासनम् ( निर्वासितमिति भावे ल्युट् ) संज्ञपनम् ( संज्ञपितमिति भावे ल्युट् निर्ग्रन्थनम् ( निग्रथितम् ग्रथिकौटिल्ये इति ल्युट् ) अपासनम् ( अपास्तमिति भावे ल्युट् ) निस्तर्हणम् ( निस्तर्हितं निरपूर्वः तृह-हिंसायाम् इति ल्युट् ) निहननम् ( निहत-मिति हन् हिंसायाम् भावे ल्युट् ) क्षणनम् ( क्षतं क्षणु हिंसायाम् भावे ल्युट् ) परिवर्जनम् ( परिवर्जितं वृजी वर्जने भावे ल्युट् ) निर्वापणम् ( निर्वापितं डुवप् बीजताने इति भावे ल्युट् ) विशसनम् ( विशस्तं शसु-हिंसायाम् भावे ल्युट् ) मारणम् ( मारितं मृ-हिंसायाम् इति ण्यन्तः भावे ल्युट् ) प्रतिघातनम् ( प्रतिघातितं हन हिंसायाम् इति ण्यन्तः ल्युट् , कुत्वं, तकारादेशश्च ) उद्वासनम् ( उद्वासितं इत्यत्र भावे ल्युट् ) प्रमथनम्(प्रमथितं मथे हिंसायाम् इति ल्युट् ) क्रथनम् (क्रथितं क्रथ हिंसायाम् इति भावे) उज्जासनम् ( उज्जासितं जसु हिंसायाम् इति भावे ल्युट् ) आलम्भः ( आलम्भनम् इत्यत्र लभ-धातोः घञ् नुम् ) च पिञ्जः ( पिञ्जनम् इति अच् ) विशरः ( विशरणम् इति अप् ) घातः ( वधः घञ् , कुत्वं तकारादेशश्च ) उन्माथः ( उन्मथनम् इति घञ् ) वधः ( हननम् इति अप् वधादेशश्च ) ये ३० नाम क्रम से २४ न० ६ पुं० मारने के हैं ॥ ११५ ॥

---

१. भङ्गो जयविपर्यये । भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम् इति मेदिनी ।

**स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।**
**अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्**
**परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।**
**मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ॥ ११७ ॥**

**कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।**

---

[१]पञ्चता ( पञ्चानां भावः इति तल् ) कालधर्मः ( कालस्य धर्मः ) दिष्टान्तः ( दिष्टस्य दैवस्यान्तः ) प्रलयः ( प्रलयनम् इति लीङ्धातोरप् ) [२]अत्ययः ( अत्ययनम् इति इण् धातोरच् ) [३]अन्तः ( अन्तनम् इति घञ् ) [४]नाशः ( नश्यते इति णश् ) [५]मृत्युः ( मरणम् इति त्युक् ) मरणम् ( मृतम् इति ल्युट् ) [६]निधनः ( निधानम् इति वयुः आलोपे च ) ये १० नाम क्रम से १ स्त्री० २–७ पुं०, ८म पुं० स्त्री०, ९म न०, १०म पुं० न० मृत्यु के हैं ॥ ११६ ॥

परासुः ( परागता असवोऽस्मात् ) प्राप्तपञ्चत्वः ( प्राप्तं पञ्चत्वं येन ) [७]परेतः ( परं लोकमितः = गतः ) [८]प्रेतः ( प्रकर्षेण इतः = गतः इति ) संस्थितः ( संतिष्ठते स्मेति क्तः ) मृतः ( म्रियते स्मेति क्तः ) [९]प्रमीतः ( प्रमीयते स्मेति क्तः ) ये ७ त्रि० नाम मृत व्यक्ति के हैं।

[१०]चिता (चीयतेऽस्यामिति क्तः टाप् च) [११]चित्या (चयनमिति क्यप् तुक् च) [१२]चितिः (चीयतेऽस्यामिति क्तिन् ) ये ३ स्त्री० नाम चिता के हैं ॥ ११७ ॥

[१३]कबन्धः ( कं बध्यते छिद्यतेऽस्मात् घञ् ) यह १ पुं० न० नाम बिना शिर के शरीर का है। क्रियायुक्तम् = गमनादिक्रियासम्पन्नम्। अपगतो मूर्धा यस्मात्तच्च कलेवरमिति सम्बन्धः ।

---

१. पञ्चता पञ्चभावे स्यात् मरणेऽपि च योषिति । इति मेदिनी ।
२. अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः । इति मेदिनी ।
३. अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपि । इति हैमः ।
४. नाशः पलायने मृत्यौ परिध्वस्तावदर्शने । इति हेमचन्द्रः । ५. मृत्युर्ना मरणे यमे । इति मेदिनी ।
६. निधनं स्यात् कुले नाशे । इति मेदिनी ।
७. परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान् । इति मेदिनी ।
८. प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः । इति मेदिनी ।
९. प्रमीतं वाच्यलिङ्गं स्यात्प्रोषितेऽपि मृतेऽपि च । इति मेदिनी ।
१०. चितं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम् । इति मेदिनी ।
११. चित्यं मृतैकचैत्ये स्याच्चित्या मृतचितौ स्त्रियाम् । इति मेदिनी ।
१२. चितिश्चित्यावृन्दयोः स्त्री । इति मेदिनी ।
१३. कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः । इति हैमः । युद्धे योद्धृषु शूरेषु सहस्रं क्रूरमूढ ! तदावेशात् कबन्धः स्यात् एको मूर्द्धा क्रियान्वितः ॥ इति कबन्धलक्षणम् ।

श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ॥ ११८ ॥
प्रग्रहोपग्रहौ बन्द्यां कारा स्याद्वन्धनालये ।
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् ॥ ११९ ॥
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥ ११९½॥

---

श्मशानम् ( शवाः शेरेतेऽत्रेति पृषोदरादित्वात् सिद्धम् द्वितालव्यादिः ) [1]पितृवनम् ( पितॄणां वनम्, पितॄन् वनति वा अच् ) ये २ न० नाम श्मशान के हैं।

[2]कुणपः ( क्वणति इति कपन् संप्रसारणञ्च ) [3]शवम् ( शवति इति अच् ) ये २ नाम लाश (मृतशरीर ) के हैं जिनमें १म पुं०, द्वितीय पुं० न० है ॥ ११८ ॥

बन्द्यामिति सम्बन्धः—[4]प्रग्रहः ( प्रगृह्यते इति अप् ) [5]उपग्रहः ( उपगृह्यते इति अप् ) बन्दी ( बन्धते बन्दते वा इति इन् ङीष् च ) ये ३ नाम क्रम से १–२ पुं० ३य स्त्री० कैदी के हैं। दीक्षित ने कारागार अर्थ कहा है।

[6]कारा ( कीर्यतेऽत्रेति भिदादित्वात् कृविक्षेपे धातो अङ् गुणदीर्घौ टाप् च ) बन्धनालयः ( बन्धनस्यालयः ) ये २ नाम कारागार के हैं। जिनमें १म स्त्री० द्वितीय पुं० हैं।

असवः ( अस्यन्ते अरयन्ति वेति उः ) [7]प्राणाः ( प्राणन्त्येभिः इति घञ् ) ये २ पुं० नित्य ब० व० नाम प्राण के हैं।

[8]जीवः ( जीवनम् इति घञ् ) असुधारणम् ( धारित्तं धारणम्, असूनां धारणम्, ये २ नाम प्राण धारण करने के हैं, जिनमें १म पुं० २य न० हैं ॥ ११९ ॥

आयुः ( एति इति उसिः णिच्च ) जीवितकालः ( जीवितस्य कालः ) ये २ नाम आयु के हैं जिनमें १म पुं०, द्वि० पुं० हैं।

[9]जीवातुः ( जीवत्यनेनेति आतुः ) जीवनौषधम् ( जीवनस्यौषधम् ) ये २ नाम जिलाने वाली दवा के हैं, जिनमें १म पुं० न०, द्वि० नपुं० हैं ॥ ११९. १/२ ॥

॥ इति क्षत्रियवर्गविवरणम् ॥

---

१. वनं नपुंसकं नीरे निवासालयकानने। इति मेदिनी।
२. कुणपः पूतिगन्धे शवेऽपि च। इति विश्वमेदिन्यौ।
३. शवः स्यात्कुणपे पुमान्। नपुंसकं तु पानीये। इति मेदिनी।
४. प्रग्रहस्तु तुलासूत्रे बन्द्यां नियमने भुजे। हयादिरश्मौ रश्मौ च सुवर्णहरिपादपे ॥ इति मेदिनी। ५. उपग्रहः पुमान् वन्द्यामुपयोगेऽनुकूलने। इति मेदिनी
६. कारो वधे निश्चये च बलौ यत्ने यतावपि। कारस्तुषारशैले च कारा दूत्यां प्रसेवके। बन्धने बन्धनागारे हेमकारिकयोरपि ॥ इति विश्वः।
७. प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु ॥ इति मेदिनी।
८. जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ। जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु। न स्त्री तु जीविते। इति मेदिनी ॥ ९. जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे। इति मेदिनी।

# ६. वैश्यवर्गः

**ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो शिवः ।**
**आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥**
**स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।**
**सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम् ॥ २ ॥**

---

ऊरव्यः ( ब्रह्मणः ऊर्वोः भवः इति यत् ) ऊरुजः ( ऊर्वोः जातः इति डः ) अर्यं ( अर्यते इति यत् ) वैश्यः ( विशति इति क्विप् स्वार्थे ष्यञ् च ) [1]भूमिस्पृक् ( भूमिं स्पृशति इति क्विन् ) विट् ( विशति इति क्विप् ) ये ६ पुं० नाम वैश्य के हैं ।

आजीवः ( आजीव्यते अनेन इति घञ् ) जीविका[2] ( जीव्यतेऽनया इति अः, कन् च ) [3]वार्ता ( वृत्तिरस्ति अस्याम् इति णः टाप् च ) [4]वृत्तिः ( वर्ततेऽनया इति क्तिन् ) वर्तनम्[5] ( वर्तन्ते जीवन्त्यनेनेति ल्युट् ) जीवनम् ( जीवन्त्यनेनेति ल्युट् ) ये ६ नाम जीविका ( जीवनोपाय ) के हैं, जिनमें १म पुं०, २–४ स्त्री०, ५–६ नपुं० हैं ॥ १ ॥

कृषिः ( कर्षणम् इति इक् ) पाशुपाल्यम् ( पशून् पालयतीति अण्, तस्य कर्म भावो ष्यञ् ) वाणिज्यम् [6] ( वणिजां कर्म भावो वेति ष्यञ्, यप्रत्यये वणिज्या च ) ये तीन नाम पृथक् २ जीवनोपाय के हैं जिनमें १म स्त्री० २–३ नपुं० हैं ।

सेवा ( सेवनम् इति अः टाप् च ) श्ववृत्तिः ( शुनो वृत्तिरिव, शुन इव वृत्तिर्वेति ) ये २ स्त्री० नाम सेवा के हैं ।

[7]अनृतम् ( न ऋतम् ) कृषिः ( कर्षणम् इति कृष्यादित्वात् इक् ) ये दो नाम खेती के हैं, जिनमें १म न०, द्वि० स्त्री० हैं ।

---

१. भूमिस्पृक् पुंसि मानववैश्ययोः । इति मेदिनी ।

२. जीवकः प्राणके पीतसारकृपणयोरपि । कूर्चशीर्षे च पुंसि स्यादाजीवे जीविका मता । त्रिषु सेविनि वृद्ध्याशीर्जीविनोराहितुण्डिके । इति मेदिनी ।

३. वार्ता तु वर्तने वातिङ्गणे कृष्याद्युदन्तयोः । निःसारारोग्ययोः क्लीबे वृत्तिमन्नीरुजोस्त्रिषु ॥ इति मेदिनी ।

४. वृत्तिर्विवरणाजीवकैशिक्यादि प्रवर्तने । इति मेदिनी ।

५. वर्तनो वामने क्लीबं वृत्तौ स्त्री पेषणाध्वनोः । न पुंसि तूलनालायां तर्कुपिण्डे च जीवने । वर्तिष्णौ त्रिषु ॥ इति मेदिनी ।

६. सत्यानृतं तु वाणिज्यं वणिज्या । इति हैमनाममाला ।

७. शुनोवृत्तिः स्मृता सेवा गर्हितं तद् द्विजन्मनाम् । हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते ॥ इति । अनृतं कृषावसत्ये च । इति रुद्रः । प्रमृतम् इति तु सभ्यः पाठः इति स्वामी । प्रमृतं कर्षणं स्मृतम् । इति मनुः ।

द्वे याचिताऽयाचितयोर्यथासंख्यं मृतामृते ।
सत्यानृतं वणिग्भावः स्यादृणं पर्युदञ्चनम् ॥ ३ ॥
उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।
याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ४ ॥
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।

---

उञ्छः[१] ( उञ्छनम् इति घञ्, संज्ञापूर्वको विधिरनित्यः तेन वृद्धिगुणौ न ) शिलम् ( शिलन इति कः ) ऋतम्[२] ( ऋच्छते इति क्तः ) ये ३ नाम किसान के खेत व खलिहान से अन्न ले जाने के बाद १–१ दाना अन्न बीनने के हैं, जिनमें १म पुं० २–३ न० हैं ॥ २ ॥

मृतामृते द्वे याचिताचितयोः यथासंख्यं स्यातामिति सम्बन्धः—मृतम्[३] ( म्रियते इति क्तः ) अमृतम् ( न मृतम् ) ये दो नपुं० नाम क्रम से माँगे और बिना माँगे मिली वस्तु के हैं । याचितं च अयाचितं चेति ते, तयोः । मृतं च अमृतं चेति ते ।

सत्यानृतम् ( सत्यसहितमनृतम् इति शाकपार्थिवादिः ) वणिग्भावः ( वणिजो भावः ) ये दो नाम व्यापार के हैं, जिनमें प्रथम नपुं०, द्वितीय पुं० हैं ।

ऋणम्[४] ( अर्यते स्म इति क्तः नत्वणत्वे ) पर्युदञ्चनम् ( परितः उदञ्च्यते इति कर्मणि ल्युट् ) उद्धारः[५] ( उद्ध्रियते इति कर्मणि घञ् ) ये ३ नाम कर्ज के हैं, जिनमें १–२ नपुं० ३य पुं हैं ।

अर्थप्रयोगः ( अर्थस्य प्रयोगः ) कुसीदम्[६] ( कुस्यते इति ईदः ) वृद्धिजीविका ( वृद्ध्या जीविका ) ये ३ नाम सूद ( व्याज ) के हैं जिनमें प्रथम पुं०, द्वितीय नपुं०, तृतीय स्त्री० हैं ।

याचितकम् ( याच्ञया आप्तम्, याचितेन निर्वृत्तम् वा इति कन् ) यह १ नपुं० नाम माँगने से प्राप्त पदार्थ का है ।

निमयादिति सम्बन्धः—आपमित्यकम् ( निमयात्=परिवर्तनात् यद् आप्तं तत् अपमानम् । मङ्-धातोः क्त्वा प्रत्यये, अपेत्यनेन सह गतिसमासे क्त्वो ल्यप्, मयतेराकारस्य इत्वं तुक् च । अपमित्येति ल्यबन्तमव्ययम्, ततः आप्तमित्यर्थे निर्वृत्तमित्यर्थे वा कक्वृद्धौ ) यह १ नपुं० नाम बदले में मिली वस्तु का है ॥ ४ ॥

प्रयोक्ता च ग्राहकश्च प्रयोक्तृग्राहकौ द्वौ क्रमात् उत्तमर्णाधमर्णौ स्यातामिति सम्बन्धः—उत्तमर्णः ( उत्तम् ऋणमस्य इति ) यह एक त्रि० नाम कर्ज देने वाले का है । अधमर्णः ( अधमम् ऋणमस्य इति ) यह एक त्रि० नाम कर्ज लेने का है ।

---

१. उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् । इति यादवः ।
२. ऋतमुञ्छशिलं स्मृतम् । इति मनुः । पुमानुञ्छःशिलमृतम् । इति पालितः ।
३. ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते । इति मनुः ।
४. ऋणं देये जले दुर्गे । इति हैमः । ५. उद्धारस्त्वोद्धृतावृणे । इति मेदिनी ।
६. कुसीदं वृद्धजीवने । वृद्ध्याजीवे । इति हैमः ।

कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ॥ ५ ॥
क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः ।
क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् ।
तिल्यं तैलीनवन्माषोमाणुभङ्गा द्विरूपता ॥ ७ ॥
मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।
'शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम्' ॥प्र०॥
बीजाकृतं तूप्तकृष्टं सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥

---

कुसीदिकः ( कुसीदार्थं प्रयच्छति इति ष्ठन् ) वार्धुषिकः ( वृद्धिं = गर्ह्यं प्रयच्छति इति ठक् वृद्धेर्वृधुषिभावो वृद्धिश्च ) वृद्ध्याजीवः ( वृद्धिः आजीवो = जीविकाऽस्य इति ) वार्धुषिः ( वार्धुषिके पृषोदरादित्वात् कलोपे साधुः ) ये ४ पुं० नाम सूदखोर ( व्याज के लोभ से लगानी करने वाले ) के हैं ॥ ५ ॥

क्षेत्राजीवः ( क्षेत्रम् आजीवोऽस्य इति ) कर्षकः ( कर्षतीति ण्वुल् ) कृषकः ( कर्षतीति क्वुन् ) वृद्धिपक्षे कार्षकः ) कृषीवलः ( कर्षणं कृषिः साऽस्यास्तीति वलच् दीर्घश्च ) ये ४ पुं० नाम किसान के हैं ।

व्रीहिशाल्युद्भवेचितं क्षेत्रमिति सम्बन्धः—व्रैहेयम् ( व्रीहीणां भवनं क्षेत्रम् इति ढक ) यह एक न० नाम धान्यसामान्य पैदा होने योग्य खेत का है ।

शालेयम् ( शालीनां भवनं क्षेत्रमिति ढक् ) यह १ न० नाम कलमादि उत्पन्न होने योग्य खेत का है ॥ ६ ॥

यव्यम् ( यवानां भवनं क्षेत्रमिति यत् ) यवक्यम् ( शूकशून्या यवाः यवकाः यवकानां भवनं क्षेत्रमिति यत् ) षष्टिक्यम् ( षष्टिकानां भवनं क्षेत्रमिति यत् ) ये ३ त्रि० नाम क्रम से १-१ टूँडवाले जौ, बिना टूँड़वाले जौ और साठी आदि अन्न के पैदा होने योग्य क्षेत्र ( खेत ) के हैं ।

तिल्यम् ( तिलानां भवनं क्षेत्रमिति यत् ) तैलीनम् ( तिलानां भवनं क्षेत्रमिति खञ् ) ये २ त्रि० नाम तिल पैदा होने योग्य खेत के हैं ।

माष्यम् , माषीणम् ( माषाणां भवनं क्षेत्रमिति यत्खञौ ) उम्यम् , औमीनम् ( उमानाम् भवनं क्षेत्रमिति यत्खञौ ) अणव्यम् , आणवीनम् ( अणूनाम् भवनं क्षेत्रम् इति यत्खञौ ) भङ्ग्यम् , भाङ्गीनम् ( भङ्गानां भवनम् क्षेत्रमिति यत्खञौ ) ये ८ त्रि० नाम उड़द, अलसी, चीना, सनई, पैदा होने योग्य खेत के क्रमशः २-२ हैं । माषोमाणुभङ्गात् तिल्य-तैलीनवद् द्विरूपता स्यादिति सम्बन्धः ॥ ७ ॥

मौद्गीनम् ( मुद्गानां भवनं क्षेत्रम् इति खञ् ) कौद्रवीणम् ( कोद्रवाणां भवनं क्षेत्रम् इति खञ् ) ये २ त्रि० नाम मूँग, कोदो आदि पैदा होने वाले क्षेत्र के हैं ।

बीजाकृतम् ( बीजेन सह कृतं = कृष्टम् इति डाच् ) उप्तकृष्टम् ( पूर्वम् उप्तं पश्चात् कृष्टं च इति समासः ) ये २ त्रि० नाम बीज बोने के पश्चात् जोते हुए खेत के हैं ।

त्रिगुणाकृतं तृतीयाकृतं त्रिसीत्यमपि तस्मिन् ।
द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ।
खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥
पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु ।
कैदारकं स्यात् कैदार्यं क्षैत्रं कैदारिकं गणे ॥ ११ ॥

---

सीत्यम् ( सीतया संमितम् इति यत् ) कृष्टम् ( कृष्यते स्मेति क्तः ) हल्यवत् ( हलेन कृष्टम् इति यत् हल्येन तुल्यं इति वतिः ) ये ३ त्रि० नाम जोते हुए खेत के हैं ॥ ८ ॥

त्रिगुणाकृतम् ( त्रिगुणं कृतमिति डाच् ) तृतीयाकृतम् ( तृतीयं कृतम् इति डाच् ) त्रिहल्यम ( त्रिवारं हलेन कृष्टम् इति यत् ) त्रिसीत्यम् ( त्रिवारं सीतया संमितम् इति यत् ) ये ४ त्रि० नाम तीन बार जोते हुए खेत के हैं।

तस्मिन् द्विगुणकृते क्षेत्रे तु तत् = पूर्वोक्तम् सर्वं द्विपूर्वं = द्वौ पूर्वौ यस्य तत् स्यात् यथा—द्विगुणाकृतम्, द्वितीयाकृतम्, द्विहल्यम्, द्विसीत्यम् इति—द्विगुणाकृतम् ( इत्यत्र डाच् ) द्वितीयाकृतम ( इत्यत्रापि डाच् ) द्विहल्यम् ( द्विवारं हलेन कृष्टमिति यत् ) द्विसीत्यम् ( द्विवारं सीतया संमितम इति यत् इह द्वितीया कृते—शम्बाकृतम् ( शम्बशब्दो द्वितीयकर्षणे वर्तते शम्बं कृतम् इति डाच् ) ये ५ नाम दो बार जाते हुए खेत के हैं ॥ ९ ॥

द्रौणिकः ( द्रोणस्य वापः इति ठञ् ) आढकिकः ( आढकस्य वापः इति ठञ् ) ये २ त्रि० नाम क्रमशः १ द्रोण व १ आढक बोने योग्य खेत के हैं। आदि पद से 'प्रास्थिकः, कौडविकः' का संग्रह है।

खारीकः ( खार्याः वापः इति ईकन् ) यह १ त्रि० नाम १ खारी बोने याग्य खेत का है। उत्तमर्ण शब्द से लेकर खारीकान्त शब्द त्रिलिङ्ग हैं अर्थात् वाच्यलिंग होते हैं ॥ १० ॥

[1]वप्रः ( उप्यतेऽत्रेति 'डुवप् बीजसंताने' धातोः रन् ) [2]केदारः ( के जले शिरसि वा दारोऽस्य इति 'हलदन्तात्' इत्यलुक्। केन जलेन दीर्यत इति वा कर्मणि घञ् पत्वं च ) [3]क्षेत्रम् ( क्षीयते धान्यैरत्र इति क्षिधातोः ष्ट्रन् ) ये ३ नाम खेत, क्यारी के हैं। जिनमें १म पुं० न०, २य पुं०, ३य न० हैं।

अस्य = क्षेत्रस्य गणे कैदारकम् ( केदाराणां समूहः इति वुञ् ) कैदार्यम् ( केदाराणां समूहः इति अञ् ) क्षैत्रम् ( क्षेत्राणां समूहः इति अण् ) कैदारिकम् ( केदाराणां समूहः इति ठञ् ) ये ४ न० नाम खेतों के समूह के हैं ॥ ११ ॥

---

१. वप्रस्ताते पुमानस्त्री रेणौ क्षेत्रे चये तटे। इति विश्वमेदिन्यौ। वप्रः प्राकाररोधसोः। क्षेत्रे ताते चये रेणौ। इति हैमः।

२. केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः। इति विश्वः।

३. क्षेत्रं भारतादौ भगाङ्गयोः। केदारे सिद्धभूपत्न्योः। इति हैमः। क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः। इति विश्वः।

लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः ।
प्राजनं तोदनं तोत्रं खनित्रमवदारणम् ॥१२॥
दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम् ।
निरीशं कुटकं फालः कृषिको लाङ्गलं हलम् ॥१३॥
गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः ।

---

[1]लोष्टम् ( लोष्टति इति अच् ) लेष्टुः ( लिश्यते लिशति वा बाहुलकात्तुन् ) ये २ नाम ढेला के हैं। जिनमें १म न० पुं०, २य पुं० मात्र हैं।

कोटिशः ( कोटिना अग्रेण श्यति इति कः, कोटिरस्यास्ति इति वा शः ) लोष्टभेदनः (लोष्टानां भेदनः) ये २ पुं० नाम ढेलों को फोड़ने वाली मुगरी या हेंगा के हैं।

प्राजनम् ( प्रवीयतेऽनेनेति ल्युट् व्यादेशनिषेधश्च ) तोदनम् ( तुद्यतेऽनेनेति ल्युट् ) तोत्रम् ( तुद्यतेऽनेनेति ष्ट्रन् ) ये ३ न० नाम चाबुक, कौड़ा, पैना आदि के हैं।

खनित्रम् ( खन्यतेऽवदार्यतेऽनेनेति इत्रः ) अवदारणम् ( अवदार्यतेऽनेनेति विदारणार्थकण्यन्तो दृधातुः तस्मात् ल्युट् ) ये २ न० नाम कुदाल, फर्सा, रम्भा, गैंता आदि के हैं ॥ १२ ॥

दात्रम् ( दात्यनेनेति ष्ट्रन् ) लवित्रम् ( लूयतेऽनेनेति इत्रः ) ये २ न० नाम हँसुवा के हैं।

आबन्धः ( आबध्यतेऽनेनेति घञ् ) योत्रम् ( यूयतेऽनेनेति ष्ट्रन् ) योक्त्रम् ( युज्यतेऽनेनेति ष्ट्रन् ) ये ३ नाम क्रम से १ पुं०, २-३ न० जुवा में बाँधी जाने वाली रस्सी के हैं।

[2]फलम् ( फलति इति अच् ) निरीशम् ( ईशायाः निर्गतम् इति समासः ) कुटकम् ( कुटति, इति क्वुन् ) फालः ( फालयति ण्यन्तादच् ) [3]कृषिकः ( कृषति इति किकन्, क्वुनि कृषकः ) ये ५ नाम फार के हैं जिनमें १–३ नपुं० शेष ४–५ पुं० हैं।

लाङ्गलम्[4] ( लङ्गति इति बाहुलकात् कलच् दीर्घश्च ) हलम् ( हलति इति अच्, ज्वलादित्वात् णप्रत्यये [5]हालोऽपि ) गोदारणम् ( गां भूमिं दारयति इति ल्युट् ) [6]सीरः ( सिनोति सीयते वा इति क्रन् दीर्घत्वञ्च ) ये ४ नाम क्रम से १–३ न०, ४र्थ पुं० हल के हैं ॥

शम्या ( शम्यते वृषादिरनयाऽध्न्यादित्वात् यगन्तो निपातः ) युगकीलकः ( युगस्य कीलः इति स्वार्थे कन् ) ये २ नाम क्रम से १म स्त्री० २य पुं० जुवाठ की कील सैला के हैं।

---

१. लेष्टुः शण्ढेऽपि ( शठेऽपि ) लोष्टः स्यात्। इति वोपालितात् पुंलिंगोऽपि।
२. फलं हेतुफले जातीफले फलकसस्ययोः। त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः ॥ फली फलिन्याम्। इति हैमः।
३. कृषिकाकृषिकौ फालकृषकौ। इति रुद्रात् स्त्रियामपि। क्वुनि–कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवत्। इति विश्वः।
४. लाङ्गली तोयपिप्पल्यां क्लीबं तु कुसुमान्तरे। गोदारणे तृणराजगृहदारुविशेषयोः। इति मेदिनी।
५. हालः फालवहः सीता। इति विक्रमादित्यः। ६. हलतिग्मकरौ सीरौ। इति दन्त्यादौ रभसः ॥ सीरः स्यादंशुमालिनि। लाङ्गले। इति हैमः।

ईशा लाङ्गलदण्डः स्यात् सीता लाङ्गलपद्धतिः ॥१४॥
पुंसि मेधिः खले दारु न्यस्तं यत्पशुबन्धने ।
आशुर्व्रीहिः पाटलः स्यात् सितशूकयवौ समौ ॥१५॥
तोक्मस्तु तत्र हरिते कलायस्तु सतीनकः ।

[1]ईशा ( ईष्टे इति कः ) लाङ्गलदण्डः ( लाङ्गलस्य दण्डः ) ये २ नाम क्रम से १म स्त्री० २य पुं० हरिश के हैं । ईषा मूर्धन्यान्तोऽपि पाठः । तत्र ईषते गत्यर्थक-ईषधातोः को बोध्यः ।

[2]सीता ( सीयते इति क्तः, पृषोदरादिः, शेते स्म इति क्तप्रत्यये [3]शीता इति तालव्यादिः ) लाङ्गलपद्धतिः ( लाङ्गलस्य पद्धतिः ) ये २ स्त्री० नाम हल के चलाने से पड़ी लकीर अर्थात् हराई ( सिराउर ) के हैं ॥ १४ ॥

खले पशुबन्धने यत् दारु न्यस्तं तत् पुंसि—मेधिः ( मेध्यन्ते = संगम्यन्ते पशवोऽत्रेति इन्, मेथिः इति पाठो वा तत्र मेथृ संगमे धातुर्बोध्यः ) यह १ पुं० नाम दँवरी करते समय बैलों को बाँधने के लिये खलिहान में गाड़े जाने वाले बड़े खूँटे अर्थात् मेंह का है ।

[4]आशुः ( अश्नुते इति उण् ) व्रीहिः ( वर्द्धयुपचयं गच्छति इति इन् पृषोदरादिः ) [5]पाटलः ( पाटं लाति इति कः ) ये ३ नाम साठी धानों के हैं जिनमें १म न०, २–३ य पुं० हैं ।

सितशूकः ( सितं शूकं यस्येति मध्यतालव्यः, शितशूकः इति द्वितालव्योऽपि ) [6]यवः ( यौति यूयते वेति अच् अप् वा ) ये २ पुं० नाम जौ के हैं ॥ १५ ॥

तत्र हरिते यवे–[7]तोक्मः ( तकति तक्यते वेति बाहुलकान्मः ओत्वश्च ) यह १ पुं० नाम हरे ( अपक्व ) जौ का है ।

कलायः ( कलमयते इति अण् वृद्धिश्च ) सतीनकः ( सति जीवे इनः प्रभुः इति 'संज्ञायाम्' सप्तम्यन्ते उपपदे सुपा समासः 'हलदन्तात्' इति सप्तम्या अलुक् । सतीनां वायुः तत्करोति

---

१. प्रभुशंकरयोरीशः स्त्रियां लाङ्गलदण्डके । इति तालव्यान्ते रुद्ररभसौ । ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके । इति शान्ते विश्वः । ईषा पेषी च मञ्जूषा । इति मूर्धन्यान्ते चन्द्रगोमी ।
२. सीता लाङ्गलरेखा स्याद् व्योमगंगा च जानकी । इति दन्त्यादौ रभसः । सीता, जनकजागंगा-मेदयोर्हलपद्धतौ । इति हैमः ।
३. शीता नभः सरिति लांगलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्टः ॥ इति तालव्यादौ धरणिः ।
४. आशुस्तु व्रीहिशाघ्रयोः । इति हेमचन्द्रः । तृणबीजं तु श्यामाको व्रीहिराशु च पाटलः । इति क्लीबम् । आशु स्याद् व्रीहिशीघ्रयोः । इति रत्नमालायामपि क्लीबम् ।
५. आशुनामा व्रीहिः पाटल उच्यते । इति नामद्वयम् इति सुभूतिः । आशुव्रीहौ पाटलो ना श्वेतरक्तेऽन्यलिङ्गवान् । इति रुद्रः । ६. यवो धान्ये पृथक्कृतौ । इति हैमः ।
७. तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे । इति मेदिनी ।

**हरेणुखण्डिकौ चास्मिन्कोरदूषस्तु कोद्रवः ॥१६॥**
**मङ्गल्यको मसूरोऽथ मकुष्ठकमयुष्ठकौ ।**
**वनमुद्गे सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥१७॥**
**सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ।**

---

इति डः, सातीनकः इति पाठे प्रज्ञाद्यण्) अस्मिन् सतीनके—[1] हरेणुः (हरति इति एणुः) खण्डिकः (खण्डोऽस्यास्ति इति ठन्) ये ४ पुं० नाम मटर के हैं।

कोरदूषः (कोरं रुधिरं दूषयति इति ण्यन्तः, कर्मण्यण्) कोद्रवः (कौति कवते वेति विच्, द्रवति इति अच्, कौश्चासौ द्रवश्च इति केन वायुना द्रवति वा पृषोदरादिः) ये २ पुं० नाम कोदों के हैं ॥ १६ ॥

मङ्गल्यकः (मङ्गले साधुः इति यत् स्वार्थे कन् च) [2] मसूरः (मस्यति मस्यते वा ऊरन्) ये २ नाम मसूर के हैं।

[3] मकुष्ठकः (मङ्कि मङ्क्यते वेति बाहुलकादुः नुमभावश्च। तिष्ठति इति क्वुन्। मकुश्चासौ स्थकश्चेति षत्वम्) मयुष्ठकः (मिनोति इति उः, तिष्ठति इति क्वुन्, मयुश्चासौ स्थकश्चेति षत्वम्) वनमुद्गः (वनस्य मुद्गः) ये ३ पुं० नाम वनमूँग या मोठ नामक अन्नविशेष के हैं।

सर्षपः [4] (सरति स्नेहोऽस्मात् इति अपः, षुगागमश्च) तन्तुभः (तन्तुना भाति इति कः) कदम्बकः (कन्दयति कन्दति वेति अम्बच् अनित्यत्वान्न नुम् स्वार्थे कन् च) ये ३ पुं० नाम सरसों के हैं ॥ १७ ॥

सिद्धार्थः [5] (सिद्धः अर्थोऽस्मात्) यह १ पुं० नाम सफेद सरसों का है।

गोधूमः [6] (गुध्यति गुध्यते वेति गुधेरूमः) सुमनः [7] (सुष्ठु मन्यते इति अच्) ये २ पुं० नाम गेहूँ के हैं।

---

१. हरेणु स्त्री रेणुकायां स तु पुंसि सतीनके। इति रभसात्पुंसि। कलायस्त्रिकटः प्रोक्तः सतीनो वर्तुलो मतः। हरेणुरङ्कटो ज्ञेयः। इति व्याडिः।
२. वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियाम्। मसूरमसुरौ पुंसि द्वावेतावपि चैतयोः ॥ इति रभसः।
३. मकुष्ठो व्रीहिभेदे स्यात् मकुष्ठो मन्थरेऽन्यवत्। इति विश्वमेदिनीभ्यां मकुश्चासौ स्थश्चेति मकुष्ठः, पृषोदरादित्वात् मुकुष्ठोऽपि।
४. सर्षपः स्यात् सरिषपः कुटस्नेहश्च तन्तुभः। इति त्रिकाण्डशेषः।
५. सरिषपः सिते तस्मिन् रक्षोघ्नो भूतनाशनः। इति रभसः। सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे। इति विश्वः।
६. गोधूमो नागरङ्गे स्याद्दोषधिव्रीहिभेदयोः। इति मेदिनी।
७. गोधूमसुमनौ समौ। इति रभसः।

स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः ॥१८॥
द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले।
क्षवः क्षुधाभिजननो राजिका कृष्णिकासुरी ॥१९॥
स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा।
मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान् ॥२०॥

---

यावकः ( यौति इति वुन् ततः प्रज्ञाद्यण् ) कुल्माषः[1] ( कुलमस्यति इति कर्मण्यण्, पृषोदरादिः कुत्सितो माषः वा ) ये २ पुं० नाम अधसूखे जौ आदि के हैं।

चणकः ( चण्यते इति क्वुन् ) हरिमन्थकः ( हरिभिः मथ्यते इति कर्मणि घञ् स्वार्थे कन् च ) ये २ पुं० नाम चना के हैं ॥ १८ ॥

निष्फले = तैलहीने तिले = वन्ध्ये तिले द्वौ—तिलपेजः ( निष्फलस्तिलः इति पेजप्रत्ययः ) तिलपिञ्जः ( निष्फलस्तिलः इति पिञ्जप्रत्ययः ) ये २ पुं० नाम तेलरहित तिल के हैं।

[2]क्षवः ( क्षौति इति अन्तर्भावितो ण्यर्थः अच् ) क्षुधाभिजननः ( क्षुधामभिजनति इति नन्द्यादिः, क्षुताभिजननः इति पाठे, क्षुतमभिजनयति इति ल्युट् ) राजिका ( राजति राजयति वेति क्वुन् ) कृष्णिका ( कृष्णत्वेति कन् )। आसुरी ( असुरस्येयम् अण् ङीप् च ) ये ५ नाम क्रम से १–२ पुं०, ३–५ स्त्री० राई के हैं ॥ १९ ॥

कङ्गुः ( कमङ्गति इति कुः शकन्ध्वादि.। कं सुखं गच्छति इति डुः ) प्रियङ्गुः ( प्रियं गच्छति इति डुः ) ये २ स्त्री० नाम ककुनी ( काउन ) के हैं।

अतसी ( अतति इति असजन्तो निपातः गौरादिः ) [3]उमा ( उं शिवं माति मिमीते वेति कः ) [4]क्षुमा ( क्षौति क्षूयते वेति बाहुलकात् मक् गुणाभावश्च ) ये ३ स्त्री० नाम अलसी के हैं।

मातुलानी ( मायास्तुला मातुला तां मातुलामानयति इति अण् ङीप् च मातुलस्य धत्तूरस्य स्त्रीव वा ङीषानुकौ ) [5]भङ्गा ( भज्यते अनया वेति घञ् टाप् ) ये २ स्त्री० नाम भाँग के हैं।

व्रीहिभेदस्तु अणुः[6] ( अणति इत्युः ) यह १ पुं० नाम मडुवा का है ॥२० ॥

---

१. कुल्माषो यावकः पुंसि। इति मूर्धन्यान्तेषु रभसः। कुल्माषोऽर्धस्विन्नो यवादिः। इति। स्वामी के मत में अधसूखे जौ आदि को कुल्माष कहते हैं। दीक्षित ने भी इसी मत को माना है। किन्तु—शूकशून्यो यवादिः। इति रक्षितादयः। बिना टूण ( शूंग ) वाले जौ आदि को 'कुल्माष' कहते हैं। यह रक्षित का मत है।

२. क्षवः क्षुते राजिकायाम्। इति मेदिनी।

३. उमाऽतसी हैमवती हरिद्राकीर्तिकान्तिषु। इति मेदिनी।

४. क्षुमाऽतसी नीलिकयोः। इति विश्वः।

५. तरङ्गभेदयोर्भङ्गो भङ्गा शस्यशणाह्वये। इति रुद्रः।

६. अणुर्व्रीह्यल्पयोः। इति हैमः।

किशारुः शस्यशूकं स्यात् कणिशं शस्यमञ्जरी ।
धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः ॥२१॥
नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः ।
कडङ्गरो बुसं क्लीबे धान्यत्वचि तुषः पुमान् ॥२२॥

---

[1]किंशारुः ( किञ्चित् कुत्सितं वा शृणाति इति उण् ) शस्यशूकम् ( शस्यस्य शूकम् ) ये २ नाम टूँड़ के हैं । जिनमें १म पुं० द्वितीय नपुं० हैं ।

[2]कणिशम् ( कणयः = कणाः सन्त्यस्येति शः कणिनं = स्वावयवं श्यतीति को वा ) शस्यमञ्जरी ( शस्यस्य मञ्जरी ) ये २ नाम धान आदि के बाल ( मञ्जरी ) के हैं । जिनमें १म पुं० न०, २ य स्त्री० हैं ।

[3]धान्यम् ( धाने पोषणे साधुः इति यत् ) [4]व्रीहिः ( व्रीणाति इति हिक् ) स्तम्बकरिः ( स्तम्बं करोति इति इन्, व्रीहिसाहचर्यात् पुंस्त्वम् ) ये ३ नाम धान्यमात्र के हैं । जिनमें १ म न०, २–३य पुं० हैं ।

स्तम्बः ( तिष्ठति अत्र वेति अम्बच् ) गुच्छः ( गवनम् इति संपदादि क्विप् तुक् च, गुतं छ्यति इति कः ) ये २ पुं० नाम तृण व्रीहियवादि के गुच्छे के हैं ॥ २१ ॥

अस्य = गुच्छस्य काण्डः—नाडी [5] ( नलत्यनेनेति घञ् वृद्धौ ङीप् च डलयोरेकत्वम् ) [6]नालम् ( नलति इति घञ् ) काण्डः[7] ( कणति इति ञमन्ताड्डः बाहुलकाद्दीर्घश्च ) ये २ नाम धान, जौ इत्यादि के डण्ठल के हैं । जिनमें १म स्त्री० २य नपुं० हैं ।

स = काण्डः निष्फलश्चेत्तदा–पलालः ( पलति पल्यते इति कालन्, यह १ पुं० न० नाम पुआल का है ।

कडङ्गरः ( गृणाति गिरति वेति अच्, कडस्य गरः इति मुक् ) बुसम् [8] ( बुसति इति कः ) ये २ नाम पुआल के भूसे के हैं जिनमें १म पुं०, द्वि० नपुं० हैं ।

---

१. अथ किंशारुर्धान्यशूके शरेऽपि च । इति हैमः ।
२. कणिशो धान्यशीर्षके । इति तालव्यान्ते रत्नकोषः ।
३. धान्यं तु व्रीहौ धान्याके इति हैमः । धान्यपदेन १७श धान्यानि उच्यन्ते । तद् यथा—व्रीहि, यव, मसूर, गोधूम, मुद्ग, माष, तिल, चणक, अणु, प्रियंगु, कोद्रव, मकुष्ठ, कलाय, कुलत्थ, शण, सर्षप, अतसी इति ।
४. व्रीहिः सामान्यधान्ये स्यादाशुधान्ये च पुंस्ययम् । इति मेदिनी ।
५. नाडीकुहनचर्यायां घटिकागण्डदूर्वयोः । नाले गुणान्तरे स्नायौ । इति हैमः ।
६. नालं काण्डे मृणाले च नाली शाककलम्बके । इति हैमः ।
७. काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे । सह श्लाघाम्बुपु स्तम्बे । इति हैमः ।
८. धातुप्रदीपकारेण—'बुसं' दन्त्यमित्यवोचि । किन्तु बुषवेषतुषारतोषाः । इति मेदिनीतो मूर्धन्यान्तोऽपि बुषमिति ।

शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी सिम्बा त्रिषूत्तरे ।
ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥२३॥
माषादयः शमीधान्ये शूकधान्ये यवादयः ।
शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥२४॥
तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका ।

---

धान्यत्वक् ( धान्यस्य त्वक् ) [1]तुषः ( तुष्यति इति कः ) ये २ नाम अन्न की भूसी के हैं । जिनमें १म स्त्री०, द्वि० पुं० हैं ॥ २२ ॥

[2]शूकः ( श्यति इति निपातनात् उकप्रत्यान्तः साधुः ) यह १ पुं० न० नाम धान्य था तृण के चिकने व नुकीले टूँड़ का है ।

[3]शमी ( शम्यति इति अच् ङीष् च ) [4]सिम्बा ( समति इति बन्नन्तो निपातनात् साधुः ) ये २ स्त्री० नाम छीमी के हैं । शिनोतीति शिम्बा ।

उत्तरे = बहुलीकृतान्ताः शब्दाः त्रिषु = त्रिलिङ्गेषु बोध्याः इति सम्बन्धः । [5]ऋद्धम् ( ऋध्यते स्मेति क्तः ) आवसितम् ( आवसीयते स्मेति क्तः, अवसानं प्राप्तं = सम्पन्नं वा अवसितमिति वा पाठः ) ये २ त्रि० नाम दौनो के बाद हवा में ओसाकर इकट्ठा करने योग्य धान आदि अन्न के हैं ।

[6]पूतम् ( पूयते स्मेति क्तः ) बहुलीकृतम् ( बहुमानं लाति इति कः, अबहुलं बहुलमकारि इति च्विः ) ये २ त्रि० नाम इकट्ठे किए हुए धान्य के हैं ॥ २३ ॥

माषः आदिर्येषामिति ते-[7]शमीधान्यम् ( शमीप्रभवं धान्यम्-तस्मिन्भवन्तीति ) यह १ न० नाम उरद आदि अन्न का है ।

यवः आदिर्येषामिति यवादयः शूकधान्यम् ( शूकयुक्तं धान्यम् तस्मिन्भवन्तीति ) यह १ न० नाम टूड़ वाले जौ आदि अन्न का है ।

[8]शालिः ( शाल्यते इति इन् ) यह १ पुं० नाम अगहनी और साठी धान का है । अमी = माषाद्याः पुंसि इति सम्बन्धः । कलमः आदयो येषामिति । षष्टिकाद्याश्चेति शालयः इति सम्बन्धः ॥ २४ ॥

तृणधान्यानि ( तृणानीव धान्यानि ) [9]नीवाराः ( निव्रियन्ते इति घञ् उपसर्गस्य दीर्घश्च ) ये २

---

१. तुषस्तु धान्यत्वचि विभीतके । इति हेमचन्द्रः ।

२. शूकोऽनुक्रोशशूक्योः । इति विश्वः । ३. शमी सक्तुफलायां च शिम्बिकायां च बल्गुली । इति मेदिनी । ४. शिम्बा शिमिः शिम्बिः । इति स्वामी ।

५. ऋद्धं संपन्ने धान्ये च सुसमृद्धे तु वाच्यवत् । इति विश्वः । 'रिद्ध संसिद्ध' इति राधेः क्तः पृषोदरादिः इति । ६. पूतं त्रिषु पवित्रे च शठिते बहुलीकृते । इति विश्वः, मेदिनी च ।

७. माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः । काकाण्डश्चीवर इति शमीधान्यगणः स्मृतः ॥ इति रत्नकोषः ।

८. शालिस्तु गन्धोली कलमादिषु । इति हैमः । ९. स्यान्नीवारो वाणिजके वास्तव्येऽपि च दृश्यते । इति विश्वः ।

अयोग्रो मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥२५॥
प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् ।
स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ ॥२६॥

नाम तीनी ( पसाढ़ी ), सांवा, कोदो आदि के हैं। जिनमें १म नपुं०, २य पुं० है। बहुवचननिर्देश से सांवा, कोदो का संग्रह है।

गवेधुः ( गवा जलेन तत्र वा एधते इति कुः ) गवेधुका ( गवा जलेन तत्र वा एधते इति कुः मृगय्वादिः स्वार्थे कन् च ) ये २ स्त्री० नाम ऋषियों के अन्नविशेष के हैं।

अयोग्रः ( अयोऽग्रेऽस्य ) [1]मुसलः ( मुस्यति, मुस्यते वेति कलच् ) ये दो पुं० न० नाम मुसल ( मूसर ) के हैं।

[2]उदूखलम् ( ऊर्ध्वं च तत् खं च, ऊर्ध्वखं लाति इति कः पृषोदरादिः ) उलूखलम् (पृषोदरादिः ) ये २ न० नाम ओखली के हैं ॥ २५ ॥

प्रस्फोटनम् ( प्रस्फोट्यतेऽनेनेति करणे ल्युट् ) शूर्पम् ( शूर्पयति इति अच् पुंसि घो वा शृणाति इति पः उत्वं रपत्वं दीर्घं च ) ये २ नाम सूप के हैं। जिनमें १म नपुं०, २य पुं० न० दोनों हैं।

[3]चालनी ( चाल्यते अनया इति ण्यन्तः ल्युट् ) [4]तितउः ( तनोति तन्यते तनोतेर्डउः प्रत्ययः, तस्य सन्वद्भावादित्वमभ्यासस्य, डित्वाट्टिलोपश्च। पृथगुच्चारणसामर्थ्यात् न गुणः ) ये २ नाम चलनी के हैं। जिनमें १म स्त्री०, २य पुं० हैं।

पुंलिङ्गे-तितउः, तितऊ, तितवः इति भानुवद् रूपाणि। नपुंसके तितउ, तितउनी, तितऊनि इति बोध्यानि।

[5]स्यूतः ( सीव्यते स्मेति क्तः ऊठ् च ) [6]प्रसेवः ( प्रसीव्यते घञ् ) ये २ पुं० बोरा या कपड़े के थैले के हैं।

कण्डोलः ( कण्ड्ते इति ओलच् ) पिटः ( पिटति इति कः, पिण्ड्यते इति विग्रहे [7]पिण्डोपि स्यात् ) ये २ पुं० नाम दौरी, डाली आदि के हैं।

---

१. मूसलं स्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियाम्। तालमूल्यमाखुपर्णीगृहगोधिकयोरपि। इति विश्व-मेदिन्यौ।

२. उदूखलं गुग्गुलौ स्यादुलूखलेऽपि न द्वयोः। इति मेदिनी।

३. क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृतः। इति कात्यः।

४. चालनं तितउ प्रोक्तम्। इति क्लीवकाण्डे रत्नकोषः। न स्त्री तितउ चालनी इति त्रिकाण्डशेषः। तनोतेर्डउ इति निर्देशात् सन्ध्यभावो बोध्यः। 'सक्तुमिव तितउना, तितउः परिपवनं भवति' इति पस्पशायां भाष्यम्।

५. स्योनप्रसेवौ इति मुकुटः। अत्र औणादिको नः। स्योनस्यूतप्रसेवकाः। इति रभसः।

६. प्रसेवस्तु वीणाङ्गस्यूतयोर्द्वतौ। इति हेमचन्द्रः।

७. पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः। देहमात्रे निवापे च गोलसिह्लकयोरपि। ओण्ड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः। पिण्डा च पिण्डतगरेऽलाबूखर्जूरभेदयोः॥ इति मेदिनी।

समानौ रसवत्यां तु पाकस्थानमहानसे ।
पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः ॥२७॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।
आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥२८॥
अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।

---

[1]कटः ( कटति इति अच् ) किलिञ्जकः ( किल्यतेऽनेनेति इन् तस्य कित्वाद् गुणभावः किलेर्जातः इति डः पृषोदरादिः, उभौ समानौ ) ये २ पुं० नाम बाँस से निर्मित झाँपी आदि के हैं। समानौ का पूर्व कटकिलिञ्जक से ही सम्बन्ध है।

रसवती ( रसाः सन्त्यस्याम् इति मतुप् ) पाकस्थानम् ( पाकस्य स्थानम् ) महानसम् ( महच्च तदनश्च इति टच्, अनसा उपकरणं लक्ष्यते ) ये ३ नाम क्रम से १ स्त्री० २-३ न० रसोई घर के हैं।

तस्य = महानसस्य अध्यक्षः—पौरोगवः ( पुरः पूजिता गौर्भूमिः इति टच्, पुरोगवी तस्याः अयम् इति अण् ) यह १ त्रि० नाम रसोई घर के मालिक का है।

सूपकारः ( शोभना आपोऽस्मिन् इत्यः अपोऽतः ऊत् च । च । सवति रसान् इति पः, दीर्घश्च,सूपं करोति इति अण् वा [2]बल्लवः ( बल्लनम् इति भावे घञ्, बल्लोऽस्यास्ति इति वः ) ये २ त्रि० नाम भोजन बनाने वाले के हैं ॥ २७ ॥

आरालिकः ( अरालं कुटिलं चरन्ति इति ठक् ) आन्धसिकः ( अन्धो भक्तं शिल्पं येषाम् इति ठक् [3]सूदः ( सूदन्ति छागादीन् इति अच् को वा ) औदनिकः ( ओदनं शिल्पं येषामिति ) [4]गुणः ( गुणयते इति अच् ) ये ५ त्रि० नाम भी भोजन बनाने वाले के हैं।

आपूपिकः ( अपूपाः पण्यमस्येति ठक् ) कान्दविकः ( कन्दौ संस्कृतम् इत्यण्, कान्दवं पण्यमस्येति ठक् ) भक्ष्यकारः ( भक्ष्यं करोति इति कर्मण्यण् ) ये २ त्रि० नाम हलवाई के हैं।

इमे = पौरोगवाद्याः त्रिषु इति सम्बन्धः ॥ २८ ॥

[5]अश्मन्तम् ( अश्मनोऽप्यन्तोऽत्रेति शकन्ध्वादिः । अस्त्रन्त इति वा पाठः—तत्र असूनामन्तोऽत्र ) [6]उद्धानम् ( उद्धीयतेऽत्रेति ल्युट् ) अधिश्रयणी ( अधिश्रीयतेऽत्रेति अधिकरणे

---

१. कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि पिप्पल्यां तु कटी मता ॥ इति मेदिनी ॥
२. बल्लवः सूपकारे स्याद् भीमसेने च गोदुहि । इति विश्वः ।
३. सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे । इति विश्वमेदिन्यौ ।
४. गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसन्ध्यादिसत्वाद्यावृत्तिरज्जुषु । शुक्लादावपि वृद्ध्यां च । इति मेदिनी ।
५. अश्मन्तमशुभे चुल्यां मरणेऽनवधावपि । क्षेत्रेऽपि । इति विश्वः मेदिनी च ।
६. उद्धानमुद्गते वाच्यलिङ्गं चुल्ल्यां नपुंकमिति विश्वः ।

अङ्गारधानिकाङ्गारशकट्यपि　　हसन्त्यपि ॥२९॥
हसन्यप्यथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम् ।
क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥३०॥
अलिञ्जरः स्यान्मणिकः कर्कर्यालुर्गलन्तिका ।
पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयोः ॥३१॥

---

ल्युट् ङीप् च ) चुल्लिः ( चुल्यतेऽत्रेति इन् ) [1]अन्तिका ( अन्त्यते ऽत्रेति ण्वुल् ) ये ५ नाम चूल्हे के हैं, जिनमें १--२पुं० ३--५ स्त्री० हैं।

अङ्गारधानिका ( अङ्गाराः धीयन्तेऽस्याम् इति ल्युट् ङीप् कन् च ) अङ्गारशकटी ( अङ्गाराणां शकटी ) हसन्ती ( हसति शतृ नुम् ङीप् च ) हसनी[2] ( हसति इति ल्युट् ङीप् च ) ये ४ स्त्री० नाम बोरसी के हैं ॥ २९ ॥

[3]अङ्गारः ( अङ्गति इति आरन्, अङ्गमियर्ति इति कर्मण्यण् वा ) यह १ पुं० न० नाम अङ्गार का है।

अलातम् ( लानम् इति क्तः, न लातमस्य ) उल्मुकम् ( ओषति निपातनात् षस्य लः, मुक् प्रत्ययः ) ये २ नाम आधे जले हुये काष्ठ के हैं। उल्मुकं = ज्वलदङ्गारम् ।

[4]अम्बरीषम् ( अम्ब्यतेऽत्रेति अविधातोः ईषन् प्रत्ययः तस्य अरुडागमश्चेति साधुः ) भ्राष्ट्रः ( भृज्यतेऽत्रेति ष्ट्रन् वृद्धिः ) ये २ नाम चना आदि भूँजने के बर्तन या भाड़ ( भरसाइ ) के हैं। जिनमें १म नपुं० २य पुं० हैं।

कन्दुः ( स्कन्दति इति सलोपः कुश्च ) स्वेदिनी ( स्विद्यतेऽस्मात् इति ल्युट् ) ये २ नाम मदिरा बनाने की कराही या भट्ठी के हैं। जिनमें १म पुं० स्त्री०, २य स्त्री० हैं ॥ ३० ॥

अलिञ्जरः ( अलनम् इति इन् अलिं सामर्थ्यं जयति जृणाति वा अग् अच् वेति ) मणिकः ( मणति इति इन् स्वार्थे कन् च ) ये २ पुं० नाम कूँडा, भाँड ( महाकुम्भ ) के हैं।

[5]कर्करी ( कर्कणम् घञ्, कर्कं राति इति कः गौरादित्वात् ङीष् च ) [6]आलुः ( आलुनाति इति क्विप् आलुः, ह्रस्वपाठे तु आलातीति उः ) गलन्तिका ( गलति इति शतृ ङीप् नुम् स्वार्थे कन् च ) ये ३ स्त्री नाम गुडुवा, हथहर, झंझरा के हैं।

पिठरः ( पेठति इति कः, पिठं राति इति कः ) [7]स्थाली ( तिष्ठत्यत्रौदनादि इति आलच् ङीष् च )

---

१. अन्तिक निकटे वाच्यलिङ्गं स्त्री शीतलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां च नाट्योक्तौ कीर्त्यतेऽन्तिका ॥ इति मेदिनी । २. हसन्त्यङ्गारधान्यां च मल्लिकाशाकिनीभिदोः । इति विश्वः ।
३. अङ्गारमुल्मुके न स्त्री पुंलिङ्गस्तु महीसुते । इति विश्वः ।
४. अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च ॥ आम्रातकेऽनुतापे च । इति मेदिनी ।
५. कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु । इति विश्वः मेदिनी च ।
६. आलुर्गलन्तिकायां स्त्री क्लीबं मूले च भेलके । इति विश्वः मेदिनी च ।
७. स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः । इति मेदिनी ।

घटः कुटनिपावस्त्री शरावो वर्धमानकः ।
ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥
कुतूः कृत्तेः स्नेहपात्रं सैवाऽल्पा कुतुपः पुमान् ।
सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥ ३३ ॥
दर्विः कम्बिः खजाका च स्यात्तर्दूर्दारुहस्तकः ।

---

उखा ( ओखति इति कः ) [1]कुण्डम् ( कुण्डयति इति अच् ) ये ४ नाम तसला, बटलोई, बट्टुवा के हैं जिनमें १म पुं० नपुं०, २–३ स्त्री०, ४र्थ नपुं० हैं।

[2]कलसः ( केन जलेन लसति इति अच् कलं शवति डो वा ) [3]घटः ( घटति इति अच् ) कुटः ( कुटति इति कः ) निपः ( नियतं पिबन्त्यनेनेति घञर्थे कः ) ये ४ नाम घड़े के हैं। जिनमें १म त्रि० २य पुं० स्त्री ३–४ नपुं० हैं ॥ ३१ ॥

शरावः ( शरणम् शृणाति वा अप् वा, शरं शराद् वाऽवति इति अग् अच् वा ) वर्धमानकः वर्धते इति शानच् शप् मुक् कन् च ) ये २ नाम क्रम से १म पुं० न०, २य पुं० ढकना, कसोरा के हैं।

ऋजीषम् ( अर्जति इति ईषन् ) पिष्टपचनम् ( पच्यतेऽत्रेति ल्युट्, पिष्टस्य पचनम् ) ये २ न० नाम तावा के हैं।

[4]कंसः ( कम्यते इति सः ) पानभाजनम् ( पीयते इति ल्युट्, क्षीरादिपानस्य भाजनम् ) ये २ नाम क्रम से १ पुं०, न०, २य न० गिलास के हैं ॥ ३२ ॥

कुतूः ( कुत्सितं तन्यते इति बाहुलकात् कूः टिलोपश्च ) कृत्तेश्चर्मण.—स्नेहपात्रम् ( स्नेहस्य तैलघृतादेः पात्रम् ) ये २ नाम क्रम से १ स्त्री०, २य न० नाम तैल रखने के लिए चमड़े के बने हुए बड़े बर्तन ( कुप्पा ) के हैं।

कुतुपः ( ह्रस्वा अल्पा कुतूः इति डुपच् ) यह १पुं० नाम चमड़े के बने हुए छोटे तैल पात्र का है।

आवपनम् ( आ उप्यतेऽत्रेति ल्युट् ) [5]भाण्डम् ( भणति इति डः अण् च ) पात्रम् ( पाति इति ष्ट्रन् ) अमत्रम् ( अमति इति अत्रन् ) भाजनम् ( भाजयति इति ल्युट् ) ये ५ न० नाम बर्तन के हैं ।३३।

[6]दर्विः ( दृणाति इति विन्, ङीषि कृते दर्वी इत्यपि ) कम्बिः ( कम्यते इति बाहुलकात् विन्, ङीषि दर्वी ) खजाका ( खजति इति आकः टाप् च साहचर्यात् पूर्वयोः स्त्रीत्वम् ) ये ३ स्त्री० नाम कलछुल के हैं।

---

१. कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ जारात्पत्यसुते पुमान्। पिठरे तु न ना। इति विश्वः मेदिनी। २. तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः। कलशः शम्बलं चैव जिह्वायां रशना तथा ॥ इति शभेदः। ३. घटः समाधिभेदे ना शिरःकूटकुटेषु च। घटा घटनगोष्ठीभघटनासु च योषिति ॥ इति मेदिनी।

४. कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना। इति मेदिनी।

५. भाण्डं मूलवणिग्वित्ते तुरंगाणां च मण्डने। नदीकूलद्वयोर्मध्ये भूषणे भाजनेऽपि च ॥ इति हैमः। ६. दर्वी पणातर्द्वीः। इति हैमः।

अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ॥ ३४ ॥
कडम्बश्च कलम्बश्च वेसवार उपस्करः ।
तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ ३५ ॥
मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् ।

---

तर्दूः ( तरति इति ऊः दुडागमस्च ) दारुहस्तकः ( हस्तप्रतिकृतिः इति कन् दारुणो हस्तकः इति साहचर्यात् 'पूर्व' पुं० ) ये २ नाम क्रम से १ स्त्री पुं० २य पुं० भात दाल परोसने में उपयोगी बर्तन के हैं।

[1]शाकम् ( श्यति इति कन् शक्नोति अनेन भोक्तुम् इति घञ् वा हरितकम् ( हरितो वर्णोऽस्यारित इत्यच् स्वार्थे कन् च ) [2]शिग्रुः ( शीक्यते शीकते वेति बाहुलकात् रुग् ह्रस्वो गस्च ) ये तीन नाम क्रम से १ न० पुं०, २य न०, ३ पुं० साग के हैं ॥ ३४ ॥

अस्य = शाकस्य नालिका—कडम्बः ( कडति इति अम्बच् ) कलम्बः ( केन लम्बते इति अच् डलयोरैक्यम् ) ये २ पुं० नाम साग के डंठल के हैं ॥ ३४ ॥

[3]वेसवारः ( वेसनम् इति घञ्, वेसं = प्रेरणं वारयति अण् ) उपस्करः ( उपस्करोति व्यञ्जनेन समवैति इति अच् सुट् च ) ये २ पुं० नाम पचफोरन या मसाला के हैं।

तिन्तिडीकम् ( तिम्यति इति निपातनात् साधुः ) [4]चुक्रम् ( चकति चकते वेति रक् उपधायाः उत् च ) वृक्षाम्लम् ( वृक्षस्याम्लम् ) ये ३ न० नाम अमचूर, चटनी के हैं ॥ ३५ ॥

वेल्लजम् ( वेल्लनम् इति घञ्, वेल्लं जनयति इति अन्तर्भावितण्यर्थात् डः ) मरीचम् ( म्रियते विषमनेनेति बाहुलकादीचः ) कोलकम् ( कोलति इति वुन् ) [5]कृष्णम् ( कर्षति इति नक् ) [6]ऊषणम् ( ऊषति इति ल्युट् ) धर्मपत्तनम् ( धर्मपत्तने जातम् इत्यण् वृद्धिनिषेधस्च ) ये ६ न० नाम काली मिर्च के हैं।

---

१. शाको द्वीपान्तरेऽपि च, शक्तौ द्रुमविशेषे च पुमान्, हरीतकेऽस्त्रियाम् । इति विश्वः मेदिनी च।

२. शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे । इति विश्वमेदिन्यौ ।

३. हिङ्गुजीरकहरिद्राधान्याकशुण्ठीसर्षपादेः । इति मुकुटः । चित्रकं पिप्पलीमूलं पिप्पली चव्यनागरम् । धान्याकं रजनी श्वेततण्डुलाश्च समांशकाः । वेसवार इति ख्यातः शाकादिषु नियोजयेत् । इत्यात्रेयसंहिता । विंशतिः पलानि हरिद्रायाः, दश पलानि शुद्धजीरकस्य, पलसार्धद्वयं मेथिकायाः, एतच्चतुष्टयं भर्जितमेव ग्राह्यम् । त्रीणि पलानि मरीचस्य अर्धपलं रामठस्य, एतत्सर्वमेकत्र संयोज्य संमर्दितं वेसवार इत्युच्यते इत्यन्ये ।

४. चुक्रं वृक्षाम्ले चाङ्गेर्यां स्त्री पुंस्यम्लेऽम्लवेतसे । इति विश्वः मेदिनी च ।

५. कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने । कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः ॥ इति विश्वः मेदिनी च ।

६. ऊषणं मरिचे क्लीबं कणायामूषणा स्मृता । इति मेदिनी ।

जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ॥ ३६ ॥
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका।
आर्द्रकं शृङ्गवेरं स्यादथ छत्रा वितुन्नकम् ॥ ३७ ॥
कुस्तुम्बुरु च धान्याकमथ शुण्ठी महौषधम्।
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥

---

जीरकः ( जवति इति जिनाति वेति रक् कन् च ) [1]जरणः ( जरयति इति ल्युः ) अजाजी ( अजमजति इति कर्मण्यण्, ङीप् व्यभावश्च ) कणा[2] ( कणति इति टाप् च ) ये ४ नाम क्रम से २ पुं० २ स्त्री० सफेद जीरा के हैं ॥ ३६ ॥

जीरके कृष्णे तु = सुषवी ( सुषवणम् इति अप् षत्वञ्च सुषवोऽस्त्यस्याः ) [3]कारवी ( कारं वाति इति कः गोरादित्वात् ङीष् च ) [4]पृथ्वी ( प्रथते इति कुः संप्रसारणञ्च [5]पृथुः, ङीषपि पक्षे ) काला ( कालो वर्णोऽस्त्यस्याः इति अच् टाप् च ) उपकुञ्चिका ( उपकुञ्चति इति ण्वुल् ) ये ६ स्त्री० नाम काला जीरा के हैं।

कम् ( आर्द्रायां जातम् इति वुन् ) शृङ्गवेरम् ( शृङ्गमिव वेरं शरीरमस्य ) ये २ न० नाम अदरख के हैं।

[6]छत्रा ( छत्रमस्त्यस्याः इति अच् टाप् च ) [7]वितुन्नकम् ( विगतं तुन्नं दुःखमस्मात् इति कप् ) कुस्तुम्बुरु ( कुत्सितं तुम्वति इति बाहुलकात् उरुः सुट् च ) [8]धान्याकम् ( धन्यते इति निपातनात् आकप्रत्ययान्तः साधुः ) ये ४ नाम क्रम से १ स्त्री० ३ न० धनियाँ हैं।

[9]शुण्ठी ( शुण्ठति कफम् ) इति अच् ङीप् च ( इनि शुण्ठिरपि ) [10]महौषधम् ( महच्च तदौषधं च ) [11]विश्वम् (विशति इति क्वुन्) [12]नागरम् (नगरे भवम् इत्यण्) विश्वभेषजम् ( विश्वस्य दोषस्य भेषजम् ) ये ५ नाम क्रम से १ स्त्री० २–३ न० स्त्री०. ४–५ न० सोंठ के हैं ॥ ३८ ॥

---

१. जरणं हिङ्गुनि स्मृतम्। जरणो जीरकेऽपि स्यात् कृष्णो सौवर्चलेऽपि च। इति विश्वः।

२. कणा जीरककुम्भीरमक्षिकापिप्पलीषु च। कणोऽतिसूक्ष्मे धान्यांशे। इति विश्वः, मेदिनी च।

३. कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके। इति मेदिनी। ४. पृथ्वी भूमौ महत्यां च त्वक्पन्यां कृष्णजीरके। इति विश्वः। ५. पृथुः स्यान्महति त्रिषु। त्वक्पर्ण्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे। इति मेदिनी।

६. छत्रं स्यादातपत्राणे छत्रा मधुरिकौषधौ। धान्याके च शिलीन्ध्रे च। इति हेमचन्द्रः।

७. वितुन्नकं तु धान्याके झाटामलमयूरके। इति विश्वः ( मेदिनी च )

८. धन्याकं धान्यकं धान्यं कुस्तुम्बुरु धनीयकम्। इति रभसः।

९. सधन्या शुण्ठिसैन्धवम्। इति वैद्यकम्।

१०. महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च। इति विश्वः मेदिनी च।

११. विश्वं कृत्स्ने च भुवने, विश्वेदेवेषु नागरे। विश्वाऽप्यतिविषायां स्यादिति विश्वः। विश्वा त्वतिविषायां स्त्री, जगति स्यान्नपुंसकम्। न ना शुण्ठ्यां पुंसि देवप्रभेदे त्वखिले त्रिषु॥ इति मेदिनी। १२. नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे। इति मेदिनी।

**आरनालकसौवीरकुल्माषाभिषुतानि च ।**
**अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥ ३९ ॥**
**सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् ।**
**तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥**
**निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।**

---

आरनलकम् ( आच्छेति इति अच्, आरः, नलति इति णः नालः, आरो नलोऽस्येति कप्) [1]सौवीरम् ( सुवीरेषु भवम् इत्यण् ) [2]कुल्माषम् ( कोलति इति क्विप्, कुल्=अर्धस्विन्नो माषोऽस्मिन् कुल्=बन्धुर्माषोऽस्य वा ) अभिषुतम् ( अभिषूयते स्मेति क्तः षत्वञ्च ) अवन्तिसोमम् ( सूयते स्मेति मन् अवन्तिषु अभिषुतं सोमम् इति शाकपार्थिवादिः ) धान्याम्लम् ( धान्याभिषुतमम्लम् इति शाकपार्थिवादिः ) कुञ्जलम् ( कुत्सितं जलम् इति पृषोदरादिः ) [3]काञ्जिकम् ( अञ्जू व्यक्त्यादौ, भावे ण्वुल्, के अञ्जिकास्य ) ये ७ नपुं० नाम काँजी के हैं । ३९ ॥

सहस्रवेधि ( सहस्रं वेधितुं शीलमस्येति णिनिः ) [4]जतुकम् ( जत्विव इति कन् ) [5]बह्लीकेषु ( बह्लीकेषु भवम् इति अण् ) हिङ्गु ( हिनोति इति हिमं गच्छति वेति मृगय्वादित्वात् सिद्धम् ) रामठम् ( रमन्तेनेनेति अठः वृद्धिश्च ) ये ५ नाम हींग के हैं ।

[6]तत्पत्री ( तस्य हिङ्गुतरोः पत्री ) कारवी ( कारं वाति इति कः गौरादिः ) [7]पृथ्वी ( प्रथ् प्रख्याने इति कुः सम्प्रसारणञ्च ) ये ६ स्त्री० नाम हींग के पेड़ के पत्ते के हैं ॥ ४० ॥

निशाह्वा ( निशा आह्वा यस्या ) [8]काञ्चनी ( काञ्चतेऽनया इति ल्युट् ङीप् च ) [9]पीता ( पीयते स्मेति कर्मणि क्तः ईत्वञ्च ) हरिद्रा ( हरिं वर्णं द्राति इति कः ) वरवर्णिनी ( वरश्चासौ वर्णश्च, सोऽस्त्यस्याः इति इनिः ) ये ५ स्त्री० नाम हरिद्रा के हैं ।

---

१. सौवीरं काञ्जिके स्रोतोऽञ्जने च बदरीफले । ना तु नीवृति । इति मेदनी ।
२. कुल्माषं स्यात्तु काञ्जिके । कुल्माषोऽर्धस्विन्नधान्ये चणकेऽपि च । इति हेमचन्द्रः ।
३. कञ्जिकं काञ्जिकं वीरं कुल्माषामिषुतं तथा । अवन्तिसोमं धान्याम्लमारनालं महारम् । सौवीरं च सुवीराम्लं तथा शुक्लं तुषोदकम् ॥ इति धन्वन्तरिः ।
४. जतुकाजिनपत्रायां जतुकं हिङ्गुलाक्षयोः । इति मेदिनी ।
५. देशभेदेऽश्वभेदे च वाह्लीकं हिङ्गुकुङ्कुमम् । ( वाह्लीकवत् ) इति हैमः ।
६. तत्पत्री त्वचमाख्यातं त्वक्पत्री कारवीति च । इति रुद्रः । त्वक्पत्रं तु वराङ्गके । त्वक्त्रीति च कारव्याम् । इति हैमः विश्वश्च ।
७. पृथ्वी भूमौ महत्यां च त्वक्पत्र्यां कृष्णजीरके । इति विश्वः, मेदिनी च । पृथु स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे । इति मेदिनी ।
८. काञ्चनः काञ्चनारे स्यात् चम्पके नागकेसरे । उदुम्बरे च धत्तूरे हरिद्रायां तु काञ्चनी । क्लीबेऽब्जकेशरे हेम्नि । इति विश्वः, मेदिनी च ।
९. पीतो वर्णनिपीतयोः । पीता हरिद्रा । इति हैमः ।

सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ॥ ४१ ॥
सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ।
रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम् ॥ ४२ ॥
सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके ।

---

सामुद्रं यत् लवणं तत्—[1]अक्षीवम् ( अक्षीं वाति इति कः ) [2]वशिरम् ( वसनम् इति इन्, वशिं याति इति कः ) ये २ न० नाम समुद्री नमक के हैं ।

[3]सामुद्रम् ( समुद्रे भवम् इत्यण् ) [4]लवणम् ( लुनाति इति ल्युः निपातनात् णत्वम् इति ) ॥

[5]सैन्धवः ( सिन्धुषु भवः इत्यण् ) [6]शीतशिवम् ( शीतञ्च तच्छिवं च ) माणिमन्थम् ( मणिमन्थपर्वते भवम् इति अण् ? माणिबन्धमिति पाठे ) सिन्धुजम् ( सिन्धुषु जातम् इति डः ) ये क्रम से १ पुं० न० ३ न० नाम सेंधानमक या सिन्धुदेशोत्पन्न लवण के हैं ।

रौमकम् ( रुमायां भवम् अण् कन् च ) [7]वसुकम् ( वसुं काययति इति कः ) ये २ न० नाम साँभर नमक के हैं ।

पाक्यम् ( पच्यते इति ण्यत् कुत्वञ्च ) विडम् ( विडति इतिः कः ) ये २ न० नाम खारा वा खरिया नमक के है ॥ ४२ ॥

[8]सौवर्चलम् ( सुष्ठु वर्च्यते दीप्यते इति कलच् अण् च ) [9]अक्षम् ( अक्षति इति अच् ) [10]रुचकम् (रोचते इति क्वुन् ) ये ३ न० नाम सोचर नमक के हैं ।

[11]तिलकम् ( तिलति इति क्वुन् ) यह १ न० नाम काला नमक का है ।

---

१. अक्षीवं वशिरे शिग्रौ नामत्ते पुनरन्यवत् । इति विश्वः मेदिनी च ।
२. वशिरः पुमान् । किणिहीहस्तिपिप्पल्योः क्लीबेऽब्धिलवणे स्मृतः । इति मेदिनी ।
३. सामुद्रं लवणान्तरे । लक्षणे च शरीरस्य । इति हैमः ।
४. लवणं सैन्धवादौ ना सिन्धुरक्षोभिदोरसे । तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदद्विषोः स्त्रियाम् ॥ इति मेदिनी ।
५. सैन्धवस्तु सिन्धुदेशोद्भवे हये । मणिमन्थेऽपि । इति हेमचन्द्रः ।
६. अथ शीतशीवं क्लीवं शैलेयमणिमन्थयोः । पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ ॥ इति मेदिनी ।
७. वसुकं रौमके पुंसि शिवमल्ल्यर्कपर्णयोः । इति विश्वः मेदिनी च । रौमके वसुकं वसु-इति नाममाला । ८. अथ सौवर्चलं सर्जक्षारे च लवणान्तरे । इति मेदिनी ।
९. अक्षो रथस्यावयवे व्यवहारे विभीतके । पाशके शकटे कर्षे ज्ञानेवात्मनि रावणौ । अक्षसौवर्चले तुत्थे हृषीके । इति हेमचन्द्रः ।
१०. रुचको बीजपूरे च निष्के दन्तकपोतयोः । न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः । सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च । इति विश्वमेदिन्यौ ।
११. तिलको द्रुमरोगाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके ॥ इति मेदिनी ।

**मत्स्यण्डी फाणितं खण्डविकारे शर्करा सिता ॥ ४३ ॥**
**कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता ।**
**स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासितावधेः ॥ ४४ ॥**
**शूलाकृतं भटित्रं स्याच्छूल्यमुख्यं तु पैठरम् ।**

---

खण्डविकारे—मत्स्यण्डी ( मदं मुदं वा स्यन्दते इति अण् ङीप् च पृषोदरादिः ) फाणितम् ( फाण्यते इति ण्यन्तः, क्तः ) ये २ नाम राव के हैं जिनमें १म स्त्री० २य नपुं० हैं ।

[1]शर्करा ( शृणाति पित्तम् करन् ) [2]सिता ( सिनोति इति क्तः ) ये २ स्त्री० नाम मिश्री, चीनी, शक्कर के हैं । खण्डविकारः ( खण्डो विकारोऽस्य ) यह १ पुं० नाम भी चीनी आदिका है ॥ ४३ ॥

[3]कूर्चिका ( कूर्चति इति ण्वल् ) [4]क्षीरविकृतिः ( क्षीरस्य विकृतिः ) ये २ स्त्री० नाम खोवा के हैं ।

[5]रसाला ( रसानालाति इति 'मूलविभुजादित्वात्' कः ) मार्जिता ( मार्ज्यते स्मेति क्तः ) ये २ स्त्री० नाम दही, खाँड़, घी, मिर्च, सोंठ से बनाई हुई चटनी के हैं ।

[6]तेमनम् ( तिम्यतेऽनेनेति करणे ल्युट् ) निष्ठानम् ( निष्ठीयतेऽत्रेति ल्युट् ) ये २ न० नाम दही, बड़ा, कढ़ी के हैं । वासितावधेः त्रिलिङ्गाः इति । यहाँ से लेकर वासित-शब्द तक सब त्रिलिङ्ग हैं ॥ ४४ ॥

शूलाकृतम् ( शूलेन कृतम् डाच् ) भटित्रम् ( भटति इति इत्रः भट्यते स्मेति वा ) शूल्यम् ( शूले संस्कृतम् इति यत् ) ये ३ त्रि० नाम लोहे के छड़ से पकाये हुए मांस के हैं ।

उख्यम् ( उखायां संस्कृतम् इति यत् ) पैठरम् ( पिठरे संस्कृतम् इत्यण् ) ये २ त्रि० नाम बटलोई में पकाए हुए ओदन आदि के हैं ।

---

१. शर्करा खण्डविकृतौ कर्परांशे रुगन्तरे । उपलायां शर्करायुक्तदेशे च शकलेऽपि च । इति हैमः ।
२. सितमवसिते च बद्धे धवले त्रिषु । शर्करायां स्त्री । इति मेदिनी ।
३. कूर्चिका सूचिकायां च तूलिकायां च कुड्मले । कपाटाकुटिके क्षीरविकृतावपि योषिति । इति मेदिनी ।
४. उभे क्षीरस्य विकृती किलाटी कूर्चिका तथा । इति हैमनाममाला ।
५. अर्धाढकः सुचिरपर्युषितस्य दध्नः खण्डस्य षोडशपलानि शशिप्रभस्य ।
सर्पिः पलं मधु पलं मरिचं द्विकर्षं शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् ॥
सूक्ष्मे पटे ललनया मृदुपाणि घृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था ।
एषा वृकोदरकृता सरसा रसाला याऽऽस्वादिता भगवता मधुसूदनेन ॥ इति सूदशास्त्रम् ।
रसालायां तु मार्जितः शिखरिणी । इति हैमनाममाला ।
६. तेमनं व्यञ्जने क्लेदे तेमनी चुल्लिभिद्यपि । इति हेमचन्द्रः ।

प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ॥ ४५ ॥
स्यात्पिच्छिलं तु विजिलं संमृष्टं शोधितं समे ।
चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ॥ ४६ ॥
आपक्वं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः ।

---

[1]प्रणीतम् ( प्रणीयते स्मेति कर्मणि क्तः ) [2]उपसम्पन्नम् ( उपसम्पद्यते स्मेति क्तः ) ये २ त्रि० नाम तैयार व्यञ्जनादि के हैं ।

प्रयस्तम् ( प्रयस्यते स्मेति कः ) सुसंस्कृतम् ( सुष्ठु संस्क्रियते स्मेति क्तः सुट् च ) ये २ त्रि० नाम परिश्रम से निर्मित उत्तमोत्तम ( द्रव्यान्तर से संस्कृत ) भोज्य पदार्थ के हैं ॥ ४५ ॥

[3]पिच्छिलम् ( पिच्छोऽस्यास्ति इति इलच् ) विजिलम् ( विजनम् इति इन्, विजिहाति इति कः ) ये २ त्रि० नाम माँड़ युक्त भात व रसेदार तरकारी आदि के हैं ।

संमृष्टम् ( संमृज्यते स्मेति कर्मणि क्तः ) शोधितम् ( शोध्यते स्मेति ण्यन्तात् कर्मणि क्तः ) ये २ नाम केश, कीड़ा आदि बीन कर साफ किये हुए अन्नादि के हैं ।

चिक्कणम् ( चिक्कनम् इति क्विप्, चिक्कं कणति इति मूलविभुजादित्वात् कः ) [4]मसृणम् ( मस्यति इति बाहुलकाद् ऋणः ) स्निग्धम् ( स्निह्यति स्मेति क्तः तस्य धश्च ) ये ३ त्रि० नाम चिकने पदार्थ के हैं ।

[5]भावितम् ( भाव्यते स्मेति क्तः ) [6]वासितम् ( वास्यते स्मेति क्तः ) ये २ त्रि० नाम हींग आदि से छौंके हुए व्यञ्जन के हैं ॥ ४६ ॥

आपक्वम् ( ईषत् पक्वम् इति ईषदर्थे समासः ) पौलिः ( पोलति इति णः पोलेन निर्वृत्तः इति इञ् ) अभ्यूषः ( अभ्यूषति इति कः घञ् वा ) ये ३ नाम क्रम से १ न० २-३ पुं० शब्द होरहा आदि तपाये हुए पदार्थ के हैं ।

[7]लाजाः ( लज्यन्ते इति घञ् पुंसि बहुत्वे च ) [8]अक्षताः ( क्षणनम् इति क्तः, न क्षतं येषां ते । चकारो भिन्नक्रमः ) ये क्रम से १ स्त्री० १ पुं० नाम धान के भूँजे हुए लावा के हैं । मुकुट ने

---

१. प्रणीतमुपसंम्पन्ने कृते क्षिप्ते प्रवेशिते । संस्कृताग्नौ च । इति हैमः ।
२. उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते । इति विश्वः मेदिनी च ।
३. पिच्छातु शाल्मलीवेष्टे मण्डे चाश्वपदामये । पङ्क्तौ पूगच्छटाकोशमोचानिजयुतेषु च । पिच्छपुच्छे । इति विश्वः ।
४. मसृणोऽकर्कशे स्निग्धे त्रिषु मायां तु योषिति । इति विश्वः मेदिनी च ।
५. भावितं वासिते प्राप्ते । इति विश्वः मेदिनी च ।
६. वासिता करणीनार्योर्वासितं भाविते रुते । इति मेदिनी । अथ वासितम् । वस्त्रच्छन्ने ज्ञानमात्रे भाविते‌ऽप्यथ वासिता । स्त्रीकरिण्योः । इति हैमः ।
७. लाजः स्यादार्द्रतण्डुले । नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते । इति मेदिनी ।
८. अक्षतं न द्वयोः षण्डे लाजेषु, त्रिष्वहिंसिते । यवेऽपि क्वचित् । इति मेदिनी ।

**पृथुकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः ॥ ४७ ॥**
**पूपोऽपूपः पिष्टकः स्यात् करम्भो दधिसक्तवः ।**
**भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः ॥ ४८ ॥**
**भिस्सटा दग्धिका सर्वरसाग्रे मण्डमस्त्रियाम् ।**

---

'अक्षताः' को विशेषण माना है। किन्तु दीक्षित ने 'च' कार को भिन्नक्रम मान कर पृथक् नाम माना है। और नि० पुं० तथा बहुवचन माना है।

पृथुकः[1] ( प्रथते इति निपातनात् साधुः ) चिपिटकः (नासिकायाः नतम् इति पिटच् नेश्चिरादेशश्च, चिपिटमिवेति कन् ये २ पुं० नाम चिउड़ा के हैं।

भृष्टयवे इति सम्बन्धः । [2]धानाः ( दधति इति नः टाप् च ) यह १ स्त्री० नित्य बहुवचनान्त नाम भूजे हुये जौ अर्थात् बहुरी का है ॥ ४७ ॥

पूपः ( पवनम् इति क्विप्, पुवं पाति पिबति वेति कः ) अपूपः ( न पूप्यते इति बाहुलकात् पः वलि लोपः च ) [3]पिष्टकः ( पिष्टस्य विकारः इति कन् ) ये ३ पुं० मालपूआ के हैं।

करम्भः ( केन जलेन रम्भते मिश्रीक्रियते, घञ् नुम् च ) [4]दधिसक्तवः ( सचते इति तुन्, दध्युपसिक्ताः सक्तवः अन्नेन व्यञ्जनम् इति समासः ) ये २ पुं० नाम दधिमिश्रित सत्तू के हैं।

भिस्सा ( बभस्ति इति दीप्त्यर्थकभसधातोः बाहुलकात् सः इत्वञ्च ) [5]भक्तम् ( भज्यते स्मेति कर्मणि क्तः ) अन्धः ( अद्यते इति असुन् नुम् धश्च ) [6]अन्नम् ( अद्यते स्म इति क्तः ) [8]ओदनः ( उनत्ति इति युच्, नलोपगुणौ ) [7]दीदिविः ( दीव्यत्यनेन इति क्विन् द्वित्वमभ्यासदीर्घश्च ) ये ३ नाम क्रम से १ स्त्री०, २–४ न०, ५ पुं० न०, ६ पुं० स्त्री० भात के हैं ॥ ४८ ॥

भिस्सटा ( भिस्सां टीकते इति डः ह्रस्वश्च ) दग्धिका ( दह्यते स्मेति क्तः कुत्सिका दग्धा इति कन् ) ये २ स्त्री० नाम जले हुये भात के हैं।

सर्वरसाग्रम् ( रसश्चासावग्रश्च, रसस्याग्रः इति वेति अग्रो रसः इति राजदन्तादिः, सर्वस्य रसाग्रः ) [9]मण्डम् ( मण्डते इति अच् घञ् वा ) ये २ पुं० न० नाम माँड़ के हैं।

---

१. पृथुकश्चिपिटेऽर्भके । इति हेमचन्द्रः ।
२. धाना भृष्टयवेऽङ्कुरे, धान्याके चूर्णसक्तुषु । इति हैमः ।
३. पिष्टको घृतपूपादौ नेत्ररोगान्तरेऽपि च । इति मेदिनी ।
४. धानाचूर्णं तु सक्तवः । इति नाममाला ।
५. भक्तमन्ने तत्परे च । इति हेमचन्द्र ।
६. अन्नं भक्ते च भुक्ते स्यात् । इति मेदिनी ।
७. ओदनं न स्त्रियां भक्ते वलायां मेदिनी स्त्रियाम् । इति मेदिनी ।
८. दीदिविर्धिषणे पुंसि स्यादन्ने च तदस्त्रियाम् । इति विश्वः ।
९. मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि । आमलक्यां स्त्रियां मण्डोऽथास्त्रियां सार-पिच्छयोः ॥ इति विश्वः मेदिनी च ।

मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥
यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
'भक्षणाभ्यञ्जने तैलं कृसरस्तु तिलौदनः' ॥ प्र० ॥
गव्यं त्रिषु गवां सर्वं गोविड् गोमयमस्त्रियाम् ॥ ५० ॥
तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् ।
पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् ।

---

मासरः ( मास्यते इति ण्यन्तः बाहुलकादरन् ) आचामः ( आचम्यते इति घञ् वृद्धिः ) निस्रावः ( निस्राव्यते अच्, घञ् वा ) ये ३ पुं० नाम भात के मांड़ के हैं ॥ ४९ ॥

यवागूः ( यौति यूयते वेति आगूच् ) उष्णिका (उष्णैव इति कन् ) श्राणा (श्रायते स्मेति क्तः नवत्वञ्च) विलेपी ( विलिम्पति इति अच् 'गौरादिः' ) तरला ( तरणम् इति अप् , तरं लाति इति कः ) ये ५ स्त्री० नाम लपसी, हलुवा के हैं ।

गवां सर्वं = भावविकारावयवादि [1]गव्यम् ( गोरिदमिति यत् अवादेशश्च ) यह १ त्रि० नाम दूध, दही, गोबर, घी आदि का है ।

गोविट् ( गोर्विट् ) गोमयम् ( गोः पुरीषम् इति मयट् ) ये २ नाम क्रम से १म स्त्री० २य न० व पुं० गोबर के हैं ॥ ५० ॥

तत् = गोमयं शुष्कं चेत् करीषः ( कीर्यते इति ईषन् ) यह १ पुं० व न० नाम सूखे गौबर, अर्थात् उपरी, गोहरी, गोइठा आदि का है ।

दुग्धम्[2] ( दुह्यते स्मेति क्तः ) [3]क्षीरम् ( क्षयणम् इति सम्पदादिः, क्षियमीरयति इति ण्यन्तः ईरधातोः कर्मण्यण् वा ) [4]पयः ( पीयते वेति असुन् ) ये ३ न० नाम दूध के हैं ।

आज्यदध्यादि = आज्यं च दधि च आदिर्यस्य, आदिना तक्रं नवनीतस्य पयस्यम् ( पयसो विकारः इति यत् ) यह १ त्रि० नाम दूध से बने हुए दही, खोवा मक्खन आदि का है ।

घनात् = कठिनात् अन्यात् दधि [5]द्रप्सम् ( दृप्यन्ति अनेनेति अम् , बाहुलकात् सश्च ) यह १ न० नाम पतले दही का है ॥ ५१ ॥

[6]घृतम् (घ्रियते इति क्तः संप्रसारणञ्च ) आज्यम् ( आज्यतेऽनेनेति क्यप् ) [7]हविः ( हूयते इति इसिः गुणावादेशश्च ) सर्पिः ( सर्पति इति इसिः ) ये ४ न० नाम घी के हैं ।

---

१. गव्यं नपुंसकं ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् । गोसमूहे त्रिलिङ्गं तु गोदुग्धादौ तु गोहिते ॥ इति मेदिनी ।

२. दुग्धं क्षीरे पूरिते च । इति हेमचन्द्रः । ३. क्षीरं पानीयदुग्धयोः । इति हैमः ।

४. पयः क्षीरे च नीरे च । इति हैमः । ५. द्रप्सं द्राक् प्सानीयम् । इति सर्वानन्दः । द्रप्सं दध्यघनं तथा । इति नाममाला । 'सरं' पाठे सरतीति अच् । वामद्रप्सौ सरौ । इति वर्गः ।

६. घृतमाज्यास्वुदीप्तेषु । इति हेमचन्द्रः । ७. हविः सर्पिषि होतव्ये । इति हैमः ।

तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम् ॥ ५२ ॥
दण्डाहतं कालशेयमरिष्टमपि गोरसः ।
तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥
मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः ।
अशनाया बुभुक्षा क्षुद् ग्रासस्तु कवलः पुमान् ॥ ५४ ॥
सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ।

---

दध्नः नवोद्धृतम् ( नवं च तदुद्धृतञ्च इति ) नवनीतम् ( नवं च तन्नीतञ्च इति समासः ) यह १ न० नाम बिना गर्म किये हुए नवनीत के हैं।

यत् ह्यो गोदोहादुद्भवं घृतं तत् हैयङ्गवीनम् ( दुह्यते इति दोहः, अण्, गवां दोहः षष्ठीसमासः । तेन सह ह्यस् शब्दस्य सुप्सुपा समासः । अत्र ह्यस् शब्देन कालप्रत्यासत्ति विना क्षिता ह्यो गोदोहः ह्योगोदहस्य हियंगुरादेशः विकारार्थे खञ् च निपात्यते ) यह १ न० नाम बासी दूध से निकाले हुये नवनीत का हैं ॥ ५२ ॥

दण्डाहतम् ( दण्डेन = मथा आहतम् = बिलोडितम् इति समासः ) कालशेयम् ( कलश्यां = मन्थपात्रे भवम् इति ढञ् ) [1]अरिष्टम् ( अरिष्टम् = अक्षेमं यस्मात् इति) गोरसः ( दुग्धस्य विकारत्वादपचारात् ) ये ३ न० नाम मथनी से मथे हुए गोरस के हैं।

तक्रम् ( तञ्चति इति रक्, 'न्यङ्क्वादिः' ) उदश्वित् ( उदकेन श्वयति वर्धते इति क्विप तुक् च च उदादेशश्च ) मथितम् ( मथ्यते स्मेति क्तः ) ये ३ न० नाम क्रम से चौथाई जल, आधा जल, बिना-जल वाले दही के हैं ॥ ५३ ॥

दधिभवं मस्तु ( मस्यते इति तुन् ) यह १ न० नाम गाढ़ी दही के ( वस्त्र के द्वारा निकाला हुआ दही का पानी ) [2]पीयूषः ( पीयति पीय्यते अनेन वेति पीयू प्रीतौ सौत्रो धातुः तस्मात् ऊषन् ) यह १ पुं० न० नाम ६–९ दिन की व्याई हुई गाय के दूध का है। अशनाया ( अशनस्येच्छा इति क्यच् इत्वाभावः दीर्घत्वम् अस्य निपातनात् ) बुभुक्षा ( भोक्तुमिच्छा इति सन् टाप्च ) क्षुत् ( क्षोधनम् इति क्विप् टापि क्षुधा च ) ये ३ स्त्री० नाम भूख के हैं।

ग्रासः ( ग्रस्यते इति घञ् ) कवलः ( केन वलते इति अच् ) ये २ पुं० नाम ग्रास ( कौर ) के हैं ॥ ५४ ॥

सपीतिः ( पानम् इति क्तिन् ईत्वञ्च, समाना पीतिः इति सभावः ) तुल्यपानम् ( तुल्यं च यत् पानं च ) ये क्रम से १ स्त्री० १ न० नाम बहुतों के एक साथ बैठकर पीने का है।

सग्धिः ( अदनम् इति क्तिन् घसादेशश्च, उपधालोपः सलोपश्च, धत्वे, जश्त्वेन पकारस्य गकारः समाना ग्धिः इति सभावश्च ) सहभोजनम् ( सुप् सुपेति समासः सह भोजनम् इति समासः ) ये क्रम से १ स्त्री० १ न० नाम साथ में भोजन करने के हैं।

---

१. अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च । इति विश्वः ।
२. पीयूषं सप्तदिवसावधिक्षीरे तथा मृते । इति विश्वमेदिन्यौ । पेयूषमिति पाठे बाहुलात् गुणः ।

उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम् ॥ ५५ ॥
जेमनं लेह आहारो निघासो न्याद इत्यपि ।
सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥

---

उदन्या ( उदकस्येच्छा इति क्यच् उदन्भावः अश्च, निपातनात् ) पिपासा ( पातुमिच्छा इति सन् अश्च ) [1]तृट् ( तर्षणम् इति 'संपदादिः' ) [2]तर्षः ( तर्षणम् इति घञ् ) ये क्रम से १–३ स्त्री० ४ पुं० नाम प्यास के हैं।

जग्धिः ( अदनम् इति क्तिन् जग्धादेशे, धत्वम्, झरो झरीति घलोपे च ) भोजनम् ( भुज्यते इति ल्युट् ) लेहः [3] ( लेढि इति घञ्, लेपः इति कुत्रचित् पाठः तत्र लिप् उपदेहे इति ) आहारः ( आहरणम् इति घञ् ) निघासः ( न्यदनम् इति अप् णश्च, घस्लादेशोऽपि ) न्यादः ( न्यदनम् इति णः ) ये क्रम से १ स्त्री० २ न० ३-४ पु० नाम भोजन के हैं।

सौहित्यम् ( सुहितस्य भावः इति ष्यञ् ) तर्पणम् ( तृप् प्रीणने इति ल्युट् ) तृप्तिः ( तृप् प्रीणने इति क्तिन् ) ये क्रम से १-२ न० ३ स्त्री० नाम तृप्ति अघाने के हैं।

फेला ( फेल्यते इति अः टाप् च ) भुक्तं समुज्झितम् ( पूर्वं भुक्तं पश्चात् समुज्झितम् इति समासः ) ये क्रम से १ स्त्री० १ न० नाम खाकर छोड़े हुए जूठे के हैं ॥ ५६ ॥

कामम् [4] ( कमनम् इति घञ् ) प्रकामम् ( प्रकमनम् इति घञ् ) पर्याप्तम् ( आप्लृ व्याप्तौ इति भावे क्तः ) निकामम् ( निकमनम् इति घञ् ) इष्टम् [5] ( एषणम् इति क्तः ) यथेप्सितम् ( आप्तुमिष्टम् इति क्तः ईदादेशश्च ) ये ६ न० ( क्रियाविशेषण नाम ) नाम इच्छानुसार, मतलब भर के हैं।

गोपः [6] ( गां पाति इति कः ) गोपालः [7] ( गां पालयति इति अण् ) गोसंख्यः ( गां संचष्टे इति ख्याञ् कश्च ) गोधुक् [8] ( गां दोग्धि इति क्विप् गोदुहः अपि ) आभीरः ( आसमन्तात् भियं राति इति कः ) वल्लवः ( वल्लनम् इति घञ् ) ये ६ पुं० नाम ग्वाले ( अहीर ) के हैं ॥ ५७ ॥

---

१. तृट्तृष्णावत्तर्षवच्च भवेल्लिप्सापिपासयोः । इति हैमः ।
२. तृषानिप्सातृषोः स्त्रियाम् । इति विश्वः ।
३. लेपस्तु लेपने अशने च सुरायां च ॥ इति हेमचन्द्रः ।
४. कामं वाढेऽनुमतिरेतसोः । कामः स्वरेच्छाकाम्येषु ॥ इति हैमः ।
५. इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु । सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि । इति विश्वः मेदिनी च ।
६. गोपी गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसि सारिवाख्यौषधौ स्त्रियाम् ॥ इति विश्वः, मेदिनी ।
७. गोपालो नृपगोपेशे गोकिलो मुसले हले । मेदिनी ।
८. गोपगोदुहवल्लवाः ॥ इति त्रिकाण्डशेषः ।

गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे ।
गोमान् गोमी गोकुलं तु गोधनं स्याद् गवां व्रजे ॥ ५८ ॥
त्रिष्वाशितंगवीनं तद् गावो यत्राशिताः पुरा ।
उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥
अनड्वान् सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् ।
गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥
उक्षा महान् महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः ।

---

पादबन्धनम् ( पादे बन्धनमस्य, गौश्च महिषी च गोमहिष्यौ आदी यस्य ) यह १ नं० नाम गाय भैंस आदि बाँधे जाने वाले पशुओं का है। आदि पद से गदहा, बकरी, भेंडा का संग्रह है।

गवीश्वरः ( गवामीश्वरः ) गोमान् ( बहवो गावोऽस्येति मतुप् ) गोमी ( बहवो गावः अस्येति मतुप् निमिश्च ) ये ३ पुं० नाम साँड़ के हैं। गवीश्वरे द्वौ स्यातामिति सम्बन्धः।

गोकुलम् ( गवां कुलम् ) गोधनम्[1] ( गवां धनं समूहः ) ये २ नाम गोसमूह के हैं ॥ ५८ ॥

यत्र गावः पुरा आशिताः तत्—आशितङ्गवीनम् ( आशिता भोजिता गावो यत्रेति खः, निपातनात् नुम् च ) यह १ त्रि० नाम गौवों के चराने या खिलाने के प्राचीन स्थान का है।

उक्षा ( उक्षति इति कनि ) भद्रः[2] ( भन्दते भदि कल्याणे धातोः इति 'ऋज्रेन्द्र' इति निपातनात् साधुः ) बलीवर्दः ( वरणम् इति 'सम्पदादि' ईश्च वर्च ईश्वरौ, तौ ददाति इति कः, अतिशायितं बलमस्येति इनिः, बली चासौ ईवर्दश्च )।

ऋषभः ( ऋषति इति अभच् ) वृषभः[3] ( वर्षति इति अभच् ) वृषः[4] ( वर्षति इति कः ) अनड्वान् ( अनः शकटं वहति इति 'अनसि वहेः क्विप् अनसो डश्च' ) सौरभेयः ( सुरभ्या अपत्यमिति ढक् ) गौः गच्छति इति गमेर्डोः ) ये ९ पुं० नाम बैल के हैं।

औक्षकम् ( उक्ष्णां समूहः इति वुञ् ) यह १ नं० नाम बैलों के समूह का है।

गव्या ( गवां संहतिः इति यत् टाप् च ) गोत्रा ( गवां संहतिः इति त्रः टाप् च ) ये २ स्त्री० नाम गायों के झुण्ड का है।

वात्सकम् ( वत्सानां समूहः इति वुञ् ) धैनुकम् ( धेनूनां समूहः इति ठक् ) ये २ न० नाम क्रम से बछड़ों तथा धेनुओं के झुण्ड के हैं ॥ ६० ॥

महानुक्षा—महोक्षः ( महाँश्चासौ उक्षा च इति निपातनात् साधुः ) यह १ पुं० नाम बड़े डीलवाले बैल का है।

---

१. गोकुले धनगोधने। इति व्याडि। २. भद्रः शिवे खञ्जरीटे वृषभे तु कदम्बके। करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः। काञ्चने च स्त्रियां रास्नाकृष्णव्योमनदीषु च। तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि। त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे। इति मेदिनी।
३. वृषभः श्रेष्ठवृषयोः। इति विश्वः।
४. वृषो धर्मे बलीवर्दे शृंग्यां पुंराशिभेदयोः। श्रेष्ठे स्यादुत्तरस्थश्च वासमूषकशुक्रले। वृषा मूषिकपर्ण्यां च। इति मेदिनी।

उत्पन्न उक्षा जातोक्षः सद्योजातस्तु तर्णकः ॥ ६१ ॥
शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ ।
आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः ॥ ६२ ॥
स्कन्धप्रदेशस्त्वस्य वहः सास्ना तु गलकम्बलः ।
स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड् युगपार्श्वगः ॥ ६३ ॥

---

वृद्धोक्षः ( वृद्धश्चासौ उक्षा च इति निपातनात् साधुः ) जरद्गवः ( जरंश्चासौ गौश्च इति समासः टच् च ) ये २ पुं० नाम वृद्ध बैल के हैं ।

उत्पन्नः उक्षा—जातोक्षः ( जातश्चासौ उक्षा च इति निपातनात् साधुः ) यह १ पुं० नाम जवान बैल का है। सद्यः जातः—तर्णकः ( तृणोति ण्वुल् ) यह १ पुं० नाम तुरन्त पैदा हुए बछड़े का है ॥ ६१ ॥

शकृत्करिः ( शकृत् करोति इति इन् ) [1]वत्सः ( वदति इति सः ) ये २ पुं० नाम छोटे बछड़े के हैं ।

दम्यः ( दमनार्हः इति व्यः ) वत्सतरः ( तनुर्वत्सः इति ष्टरच् ) ये २ पुं० नाम जोतने योग्य बछड़े के हैं ।

षण्डः[2] (सनोति सन्यते वेति षणुदाने धातोः डः, सत्वाभावः ) गोपतिः ( गवां पतिः ) इट्चरः ( एषणम् इति क्विप्, इट्, इषा चरति इति अच् ) ये ३ पुं० नाम इच्छानुसार भ्रमण करनेवाले साँड के हैं ॥ ६२ ॥

वहः[3] ( वहति युगमनेनेति 'गोचर संचर' इति साधुः ) यह १ पुं० नाम बैल के कन्धे का है ।

सास्ना ( सस्ति इति 'रास्ना सास्ना' इति निपातनात् साधुः ) गलकम्बलः[4] ( गलस्य कम्बलः ) ये २ नाम क्रम से १ स्त्री० १ पुं० बैलों की ललरी के हैं । ( गले में लटकते हुए चाम को ललरी कहते है । ) ।

नस्तितः ( नसनम् इति णस् धातोः क्तः, नस्तं कृतमस्येति णिच् कर्मणि क्तश्च ) नस्योतः ( नासिकायां भवा इति यत् नसादेशश्च, नस्यया नासारज्वा उतः ) ये २ पुं० नाम नाथे हुए बैलों के हैं ।

प्रष्ठवाड् ( प्रष्ठमग्रगामिनं वहति इति ण्विः ) युगपार्श्वगः ( युगस्य स्कन्धकाष्ठस्य पार्श्वं गच्छति इतिः डः ) ये २ पुं० नाम बछड़ों को सर्वप्रथम हल में जोतने के समय गले पर दिये जाने वाले काठ के हैं ॥ ६३ ॥

---

१. वत्सः पुत्रादिवर्षयोः । तर्णके नोरसि क्लीबम् । इति विश्वः ( मेदिनी ) ।

२. षण्डं पद्मादिषाते च स्त्री स्याद्गोपतौ पुमान् । इति मूर्धन्यादौ डान्ते । इति मेदिनी । शण्डः स्यात् पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि । इति मेदिनी ।

३. वहः स्याद् वृषभस्कन्धे वाहे गन्धवहेऽपि च । इति विश्वः मेदिनी ।

४. कम्बलो नागराजे स्यात् सास्नाप्रावरयोः कृमौ । कम्बलश्चोत्तरासंगे कम्बलं सलिले मतम् ॥ इति विश्वः ।

युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः।
खनति तेन तद्वोढाऽस्येदं हालिकसैरिकौ ॥ ६४ ॥
धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः।
उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥
स तु सर्वधुरीणः स्याद्यो वै सर्वधुरावहः।
माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६ ॥
अर्जुन्यध्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी।

---

युगादीनां वोढारः=युग्यः ( युगं वहति इति यत् ) प्रासङ्ग्यः ( प्रासङ्गम् वहति इति यत् ) शाकटः ( शकटं वहति इति अण् ) ये ३ पुं० नाम क्रम से जुवाठ ढोनेवाले पहले-पहले हल में जोतने के समय जुवाट के काठ को ढोनेवाले और बैलगाड़ी ढोनेवाले बैलों के हैं।

हालिकः ( हलेन खनति हलं वहति, हलस्य इदं इति ठक् ) सैरिकः ( सीरेण खनति सीरं वहति, सीरस्य इदं इति ठक् ) ये २ पुं० नाम हल से खोदे जाने वाले, हल को ढोने वाले हलवाहा, हल में चलने वाले बैलों के हैं ॥ ६४ ॥

धूर्वहे सधुरन्धराः धुर्यधौरेयधुरीणाः इति सम्बन्धः—धूर्वहः ( वहतीति वहः अच्, धुरो वहः ) धुर्यः ( धुरो वहः इति यत् ) धौरेयः ( धुरो वहः इति ढक् ) धुरीणः ( धुरो वहति इति खः ) धुरन्धरः ( धुरं धारयति इति खच्, खचि परे ह्रस्वः, 'वाचंयमपुरंदरौ च' इति चकारस्यानुक्तसमुच्चायार्थत्वात् अक् ) हम् च ) ये ५ पुं० नाम भार को ढोने वाले बैलों के हैं।

एकधुरावहे उभौ स्याताम्—एकधुरीणः ( एका चासौ धुश्च इत्यः टाप् च तां एकधुरां वहति इति खः ) एकधुरः ( लुक् तद्धितलुकि इति टापो निवृत्तौ एकधुरः ) एकधुरावहः ( एकधुरायाः वहः ) ये ३ पुं० नाम केवल दायें या बायें चलने वाले बैलों के हैं ॥ ६५ ॥

यः सर्वधुरावहो भवेत्स—सर्वधुरीणः ( सर्वा चासौ धूश्च सर्वधुरां वहति इति खः ) सर्वधुरावह ( सर्वधुरायाः वहः ) ये २ पुं० नाम दायें बायें ( दोनों तरफ ) चलने वाले बैलों के हैं।

माहेयी ( मह्या अपत्यं स्त्री इति ढक् ङीप् च ) सौरभेयी (सुरभ्या अपत्यं स्त्री इति ढक् ङीप् च ) गौः ( गच्छति इति डोः ) उस्रा[1] ( वसति क्षीरमस्याम् इति रक् सम्प्रसारणेन वस्य उः षत्वाभावश्च ) माता[2] ( मान्यते इति 'नप्तृनेष्ट्र' इत्यादिना साधुः ) शृङ्गिणी ( शृङ्गमस्त्यस्याः इति इनिः ) अर्जुनी[3]

---

१. उस्री वृषे च किरणेऽप्युस्राजु न्युपचित्र्योः। इति मेदिनी। उस्रस्तु वृषभे प्रोक्तः किरणे तथा पुमान्।
२. मातरौ गोजनन्यौ द्वे। इति रुद्रः। माता गौर्यादिजननी गोब्रह्माण्यादिभूमिषु। इति विश्वः॥
३. अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः। मातुरेकसुतेऽपि स्यात् धवले पुनरन्यवत्। नपुंसकं तृणे नेत्ररोगे स्यादर्जुनी गवि। उषायां बाहुदानद्यां कुट्टिन्यामपि च क्वचित्। इति विश्वः।

वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ६७ ॥
द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ।
चतुरब्दा चतुर्हायण्येवं त्र्यब्दा त्रिहायणी ॥ ६८ ॥
वशा वन्ध्याऽवतोका तु स्रवद्गर्भाथ संधिनी ।
आक्रान्ता वृषभेणाथ वेहद्गर्भोपघातिनी ॥ ६९ ॥

---

( अर्जुनवर्णवती इति ङीष् ) अघ्न्या ( न हन्येते न हन्ति दातारं वा इति 'अघ्न्यादयश्च' इति निपातनात् साधुः ) रोहिणी [1] ( रोहितवर्णवती 'वर्णादनुदात्तात्' इति ङीप्नौ ) ये ९ स्त्री० नाम गाय के हैं।

गोषु या उत्तमा सा—नैचिकी [2] ( नीचैश्चरति इति ठक् टिलोपश्च, वा निचिरेव निचिकं प्रशस्तं निचिकमस्याः इति अण् ङीप् च ) यह १ स्त्री० नाम उत्तम गाय का है।

वर्ण आदिर्येषां तेषां भेदात्—शबली ( शबलयोगात् ङीष् ) धवला ( धवल-योगात् अनुदात्तत्वा-भावान्न ङीष् ) ये २ स्त्रीलिङ्ग नाम रङ्ग भेद से चितकबरी धावर आदि गायों के हैं। आदि पद से प्रमाणभेद से दीर्घा, खर्वा, हस्वा अङ्गभेद से पिंगाक्षी, लम्बकर्णी आदि गायों के नाम हैं ॥ ६७ ॥

द्विहायनी ( द्वौ हायनौ यस्याः इति ङीप् ) द्विवर्षा ( द्वे वर्षे वयःप्रमाणमस्या इति ठक् तस्य लुक् टाप् च ) ये २ स्त्री० नाम २ वर्ष की गौ के हैं।

या गौ एकहायनी सा—एकाब्दा ( एकोऽब्दो यस्याः इति टाप् ) एकहायनी ( एको हायनो यस्याः इति ङीप् ) ये २ स्त्री० नाम १ वर्ष की गौ के हैं।

चतुरब्दा ( चत्वारोऽब्दाः यस्याः इति टाप् ) चतुर्हायणी ( चत्वारो हायना यस्याः इति ङीप् णत्वञ्च ) ये २ स्त्री० नाम ४ वर्ष की गौ के हैं।

त्र्यब्दा ( त्रयोऽब्दाः यस्याः इति टाप् ) त्रिहायणी ( त्रयो हायना यस्याः इति ङीप् णत्वञ्च ) ये २ स्त्री० नाम ३ वर्ष की गौ के हैं ॥ ६८ ॥

[3]वशा ( वष्टि इति अच् टाप् च ) बन्ध्या (बध्नाति इति ण्यत् टाप् च ) ये २ स्त्री नाम बाँझ गाय के हैं।

अवतोका ( अवगलितं तोकमपत्यं यस्याः ) स्रवद्गर्भा ( स्रवन् गर्भो यस्याः ) ये २ स्त्री० नाम अकस्मात् जिसका गर्भ गिर गया हो उस गाय के हैं।

वृषभेणाक्रान्ता—[4]सन्धिनी ( संधानम् इति अङ्, सन्धा = गर्भाधानमस्त्यस्याः इति इनिः ) यह १ स्त्री० नाम साँड़ के साथ संगम की हुई गाय का है।

वृषभेणाक्रान्ता—वेहद् ( विहन्ति गर्भम् विपूर्वात् हन्तेष्टिलोपः, विशब्दसम्बन्धिन इकारस्य

---

१. रोहिणी सोमवल्के मे कण्ठरोगोमयोर्गवि । लोहिताकटुरोहिण्योः । इति हेमचन्द्रः ।
२. नैचिकी गौरुत्तमा तु नीचिको सा प्रकीर्तिता । इति नाममाला । निचिः कर्णशिरोदेशे । इति रभसः ।
३. वशो जनस्पृहायत्तेष्वायघ्नत्वप्रभुत्वयोः । वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि ॥ इति हैमः । ४. सन्धिनी वृषभाक्रान्ताऽकालदुग्धोस्रयोः स्त्रियाम् । इति मेदिनी ।

काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी।
स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ॥ ७० ॥
चिरसूता वष्कयणी धेनुः स्यान्नवसूतिका।
सुव्रता सुखसंदोह्या पीनोध्नी पीवरस्तनी ॥ ७१ ॥
द्रोणक्षीरा द्रोणदुघा धेनुष्या बन्धके स्थिता।

---

एकारः निपातनात्) गर्भोपघातिनी (गर्भमुपहन्ति इति णिनिः) ये २ स्त्री० नाम साँड के साथ संगम करके गर्भ को नष्ट की हुई गायों के हैं ॥ ६९ ॥

प्रजने गर्भग्रहणे काल्याकालः प्राप्तोऽस्याः इति यत् निपातनात्, प्राप्तकाला चेत्तदा—उपसर्या (उपस्रियते वृषेण इति सर्तेः यत् निपातनात्) यह १ स्त्री० नाम साँड़ के साथ मैथुन करने की इच्छा करने वाली गौ का हैं।

प्रष्ठौही (प्रष्ठं वहति इति ण्विः ङीष् च, पष्ठौहीति पाठे पृषोदरादिः) बालगर्भिणी (बाला चासौ गर्भिणी च) ये २ स्त्री० नाम पहले पहल गर्भधारण करने वाली गौ के हैं।

अचण्डी (न चण्डी) सुकरा (सु सुखं कीरति इति अच् टाप् च) ये २ स्त्री० नाम सीधी गाय के हैं।

बहुसूतिः (बह्वी सूतिः यस्याः) परेष्टुका (परमिच्छति, परैरिष्यते वेति बाहुलकात्तुः कन् टाप् च) ये २ स्त्री० नाम अधिक बच्चा पैदा की हुई गाय के हैं ॥ ७० ॥

चिरसूता (चिरं सूता इति) वष्कयिणी[1] (वष्कते इति बाहुलकादयन्, वष्कयस्तरुणवत्सः, सोऽस्त्यस्या इति इनिः णत्वञ्च) ये २ स्त्री० नाम अधिक दिन की ब्याई हुई (बकेना) गाय के हैं।

धेनुः[2] (धीयते इति नुः) नवसूतिका (नवं सूतं प्रसवोऽस्याः इति कप् इत्वञ्च) ये २ स्त्री० नाम थोड़े दिन की ब्याई हुई (धेनु) गाय के हैं।

सुव्रता (शोभनं व्रतमस्याः इति टाप्) सुखसंदोह्या (सुखेन संदुह्यते इति ण्यत् टाप् च) ये २ स्त्री० नाम सुखपूर्वक दुही जाने वाली गाय के हैं।

पीनोध्नी (पीनमूधोऽस्याः इति अनङ् ङीप् च) पीवरस्तनी (पीवराः स्तनाः अस्याः इति ङीष्) ये २ स्त्री० नाम मोटे-मोटे स्तन वाली गाय के हैं ॥ ७१ ॥

द्रोणक्षीरा (द्रोणपरिमितं क्षीरमस्याः इति टाप्) द्रोणदुघा (द्रोणं दोग्धि इति कप् घश्चान्तादेशः टाप् च) ये स्त्री० नाम १० सेर दूध देने वाली गाय के हैं।

या बन्धके स्थिता सा धेनुष्या (ऋणप्रत्यर्पणाय या धेनुः दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयं धेनुशब्दस्य पुगागमो यप्रत्ययश्च निपातनात्) यह १ स्त्री० नाम गहने रक्खी हुई गौ का है।

---

१. वष्कयस्त्वेकहायनो वत्सः। इति शाकटायनः। तेन नीयते इति सम्पदादिः ङीप् णत्वं च। अत्र इकाररहित उपान्त्यः वष्कयणीति वा।
२. धेनुर्गोमात्रके दोग्ध्र्याम्। इति हैमः।

**समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥ ७२ ॥**
**ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ।**
**न पुंसि दाम संदानं पशुरज्जुस्तु दामनी ॥ ७३ ॥**
**वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।**
**कुठरो दण्डविष्कम्भो मन्थनी गर्गरी समे ॥ ७४ ॥**
**उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः ।**

---

या प्रतिवर्षं प्रसूयते सा—समांसमीना ( सभायां समायां विजायते प्रसूयते इति खः उत्तरदले यब्भिभवल्योर्लोपः पूर्वदले यलोपः अवशिष्टविभक्तेरलुक् च ) यह १ स्त्री० नाम प्रतिवर्ष बच्चा देने वाली गौ का है ॥ ७२ ॥

ऊधः ( वहति उनत्ति वा असुन् ऊधादेशश्च ) आपीनम् ( आप्यायते स्मेति क्तः, प्यायः पीभावः निष्ठानत्वञ्च ) ये २ न० नाम गौ के थन के हैं।

शिवकः ( शेतेऽत्र सर्वम् श्यति वा गात्रकण्डूम्, इति वन्नन्तो निपातः, ततः स्वार्थे कन् ) कीलकः ( कील्यते इति घञ् कन् च ) ये २ पुं० नाम खूँटे के है।

दाम ( द्यति दीयते अनेनेति वा मनिन् ) संदानम् ( संदीयते इति ल्युट् ) ये २ नाम क्रम से १ न० स्त्री०, १ न० दूहने के समय पैर बाँधने की रस्सी या पगहे के हैं।

पशुरज्जुः ( पशुबन्धनी रज्जुः इति शाकपार्थिवादिः ) दामनी ( दामैव इति अण् प्रकृतिभावः ङीप् च ) ये २ स्त्री नाम पगहा या छान के हैं ॥ ७३ ॥

वैशाखः[1] ( विशाखा प्रयोजनम् इत्यण् ) मन्थः[2] ( मथ्यतेऽनेनेति घञ् ) मन्थानः ( मन्थति इति बाहुलकादाच् मन्थनशीलो वा चानश् ) मन्थाः ( मथ्यतेऽनेनेति इनिः कित्, आकारोन्तादेशः, इकारस्याकारश्च सर्वनामस्थाने न्थादेशश्च ) मन्थदण्डकः ( मन्थस्य दण्डः ततः स्वार्थे कन् ) ये ५ पुं० नाम मथनी के दण्डे के हैं।

कुठरः ( कुठति इति बाहुलकात्करन् ) दण्डविष्कम्भः ( दण्डं विष्कम्नाति इति कर्मण्यण् षत्वं च ) ये २ पुं० नाम मथते समय मथनी के बाँधने वाले दण्ड के हैं।

मथनी ( मथ्यतेऽस्याम् इति ल्युट् ङीप् च ) गर्गरी ( गर्ग इति शब्दं राति इति कः, ङीष् च ) ये २ स्त्री० नाम कमोरी ( जिससे दही मथी जाती है ) के हैं ॥ ७४ ॥

उष्ट्रः ( ओषति उष्यते वेति ष्ट्रन् गुणाभावश्च ) क्रमेलकः ( क्रमति इति विच्, एलयति इति ण्वुल्, क्रम् चासावेलकश्च ) मयः[3] ( मीनाति मयते वेति अच् ) महाङ्गः ( महान्त्यङ्गानि यस्येति बहुव्रीहिः समासः ) ये ४ पुं० नाम ऊँट के हैं।

---

१. वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तितः। इति मेदिनी।
२. मन्थो रवौ मथि। सात्त्वे नेत्ररोगे च। इति हैमः।
३. मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च। इति मेदिनी।

करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥
अजा छागी स्तभच्छागवस्तच्छगलका अजे ।
मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।
चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ॥ ७७ ॥
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।

---

अस्य शिशुः—करभः[1] ( किरति कीर्यते वेति अभच् ) यह १ पुं० नाम ऊँट के ३ वर्ष तक के उम्र वाले बच्चे का है । दारवैः=काष्ठबन्धनैः युक्तः करभः:—शृङ्खलकः ( शृंखलं बन्धनं यस्येति इति कन् ) यह १ पुं० नाम काष्ठ की बनी हुई सिकड़ी से बाँधे हुए ऊँट के बच्चे का है ॥ ७५ ॥

[2]अजा ( अजति इति अच् टाप् च वी अभावोऽपि ) छागी ( छ्यति छायते इति गन् ङीष् च ) ये २ स्त्री० नाम बकरी के हैं ।

स्तभः ( स्तभः ( स्तभ्नोति इति कः, नलोपश्च ) छागः ( छ्यति छायते वेति गन् ) वस्तः ( वस्तयति इति अच् ) छगलकः ( छायते इति अलच् गुक् ह्रस्वश्च स्वार्थे कनपि ) अजः ( अजति इति अच् ) ये ५ पुं० नाम बकरा के हैं ।

एडके—मेढ्रः ( मेहति इति ष्ट्रन् ) उरभ्रः ( उरु भ्रमति इति डः पृषोदरादिः ) उरणः ( ऋच्छति अर्यते वेति क्युन् ) ऊर्णायुः ( ऊर्णा अस्य इति युस् ) मेषः ( मिषति इति अच् ) वृष्णिः ( वर्षति इति निः ) एडकः ( इलति एलयति वेति ण्वुल्, डलयोरेकत्वम् ) ये ७ पुं० नाम भेंड़े के हैं ॥ ७६ ॥

उष्ट्रोरभ्राजवृन्दे—औष्ट्रकम् ( उष्ट्राणां समूहः इति वुञ् ) औरभ्रकम् ( उरभ्राणाम् समूहः इति वुञ् ) आजकम् ( अजानां समूहः इति वुञ् ) ये ३ न० नाम क्रम से ऊँटों, भेड़ों, बकरों के समूह के हैं ।

चक्रीवान् ( चक्रवद्भ्रमणं चक्रम् तदस्यास्ति इति मतुप् ) [3]बालेयः ( बलये=उपसंहाराय संहितः इति ढञ् ) राभसः ( रासते इति अभच् ) [4]गर्दभः ( गर्दति इति अभच् ) खरः[5] ( खं मुखबिलमतिशयितमस्य इति रः ) ये ५ पुं० नाम गदहे के हैं ॥ ७७ ॥

[6]वैदेहकः ( विदेहेषु भवः इति वुञ् ) सार्थवाहः ( सार्थं वहति इति अण् ) नैगमः[7] ( निगमे

---

१. करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते । इति मेदिनी ।
२. अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे । इति हैमः ।
३. बालेयो गर्दभे पुंसि मृदौ बलिहिते त्रिषु । इति मेदिनी ।
४. गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि । रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः । इति विश्वः ( मेदिनी )
५. खरो रक्षोऽन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च । इति हेमचन्द्रः ।
६. वैदेहको वाणिजके शूद्राद् वैश्यासुतेऽपि च । इति विश्वहेमचन्द्रौ ( मेदिनी च ) ।
७. नैगमः स्यादुपनिषद्वणिजोर्नागरेपि च । इति विश्वमेदिन्यौ । निगमो वणिजे पुर्यां कटे वेदे वणिक्पथे । इति विश्वः ( मेदिनी च ) ।

पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥
विक्रेता स्याद्विक्रयिकः क्रायकक्रयिकौ समौ ।
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥
नीवी परिपणो मूलधनं लाभोऽधिकं फलम् ।
परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥

---

भवः इत्यण् ) वाणिजः[1] ( पणते इति इक्, आदेश्च वः स्वार्थेऽण् च ) वणिक् ( अण्प्रत्ययाभावे ) पण्याजीवः ( पण्यते पण्यं, पण्यमाजीवो यस्येति ) आपणिकः ( आपणो व्यवहारोऽस्यास्ति इति ठन् ) क्रयविक्रयिकः ( क्रयविक्रयाभ्यां जीवति इति ठन् ) ये ८ पुं० नाम बनियाँ व्यापारी के हैं ॥ ७८ ॥

विक्रेता ( विक्रीणाति इति तृच् ) विक्रयिकः ( विक्रयेण जीवति इति ठन् ) ये २ पुं० नाम बेचने वाले के हैं ।

क्रायकः ( क्रीणाति इति ण्वुल् ) क्रयिकः ( क्रयेण जीवति इति ठन् ) ये २ पुं० नाम खरीदने वाले के हैं ।

वाणिज्यम् ( वणिजां कर्म इति ष्यञ् ) वणिज्या ( वणिजां कर्म इति यत् टाप् च ) ये २ नाम क्रम से १ न० १ स्त्री० व्यापार के हैं ।

मूल्यम् ( मूलेनानम्यम् इति यत् ) वस्नः[2] ( वसत्यत्रेति नः ) अवक्रयः ( अवक्रीयतेऽनेनेति घः ) ये ३ नाम क्रम से १ न० २ पुं० कीमत ( दाम ) के हैं ॥ ७९ ॥

[3]नीवी ( नितरामिन्वति इति इन् ङीष् च, आगमशासनस्यानित्यत्वात् नुम् न ) परिपणः ( परिपण्यते-वृद्ध्यर्थं प्रयुज्यते इति घः ) मूलधनम् ( मूलं च तत् धनञ्च इति समासः ) ये ३ नाम क्रम से १ स्त्री० २ न० नाम व्यापार में वृद्धि के लिये व्यय किये हुए धन के हैं ।

लाभः ( लभ्यते इति घञ् ) अधिकम् ( अध्यारूढम् अध्यारूढशब्दात् कन् उत्तरपदलोपश्च इति इति निपातनात् साधुः ) फलम्[4] ( फलति इति अच् ) ये ३ नाम क्रम से १ पुं० २ न० लाभ, फायदा के हैं ।

परिदानम् ( परिवृत्य दानम् ) परीवर्तः ( परिवर्तनम् इति घञ् उपसर्गस्य दीर्घश्च ) नैमेयः ( निमानम् इति यत्, आत्वम् ईत्, गुणः, अण् च ) निमयः ( निमीयते इति अच् ) ये ४ नाम क्रम से १ न० ३ पुं० वस्तु को अदला बदला करने के हैं ॥ ८० ॥

---

१. वणिक् स्त्रियाम् । णिज्यायां पुमान् वाणिजके च करणान्तरे । इति विश्वः ( मेदिनी च ) ।

२. वस्नं वस्त्रे धने मूल्ये भृतौ । इति हेमचन्द्रः ।

३. नीवी स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे । इति हैमः ।

४. फलं जातीफले सस्ये हेतूत्थे व्युष्टिलाभयोः । ( त्रिफलायां च कक्कोले प्रियङ्गौ तु फली स्मृता ) इति विश्वः ( मेदिनी ) । फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः । फली फलिन्यां । इति हैमः ।

पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् ।
क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥
विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ।
क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् ॥ ८२ ॥
विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु ।
विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥ ८३ ॥
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ।

---

उपनिधिः ( उपनिधीयते इति किः ) न्यासः ( न्यस्यते इति कर्मणि घञ् ) ये २ पुं० नाम धरोहर रखने के हैं ।

प्रतिदानम् ( प्रतीपं दानम् ) तदर्पणम् ( तस्यार्पणम् ) ये २ न० नाम धरोहर वापस रखने के हैं ।

क्रय्यम् ( ग्राहकाः गृह्णीयुरिति बुद्ध्या यत् प्रसार्यते तत्, क्रीयते इति यत् गुणः 'क्रय्यस्तदर्थे' इति साधुः ) यह १ त्रि० नाम दुकान पर फैलाई हुई खरीदी जाने वाली वस्तुओं का है ।

क्रेयम् ( क्रीयते इति यत् गुणः ) यह १ त्रि० नाम खरीदने योग्य वस्तु का है ॥ ८१ ॥

विक्रेयम् ( विक्रीयते यत् गुणः ) पणितव्यम् ( पण्यते इति तव्यत् ) पण्यम् ( पण्यते इति निपातनाद् साधुः ) ये ३ त्रि० नाम बेचने योग्य वस्तु के हैं ।

सत्यापनम् ( सत्यस्य करणम् इति णिजापुकौ, भावे ल्युट् च ) सत्यंकारः ( सत्यस्य करणम् इति घञ् मुम् च ) सत्याकृतिः ( सत्यस्य करणम् इति क्तिन् इति डाच् च ) ये ३ नाम क्रम से १ न० १ पु० १ स्त्री० साई, बयाना आदि के हैं ॥ ८२ ॥

विपणः ( विपणनम् इति घञ् घो वा, संज्ञापूर्वकत्वान्न वृद्धिः ) विक्रयः ( विक्रयणम् इति अच् ) ये २ पु० नाम बेचने के हैं ।

आदश ( दशन्ति, दशन्ते वा । दंश दशने, बाहुलकात् कनिन् दशशब्दमभिव्याप्य । आङ् मर्यादाभिविध्योः । एकादिका नवदशपर्यन्ताः संख्याः संख्येयेषु वर्तमानाः त्रिलिङ्गाश्च । तेन एको विप्रः, दश विप्रा इत्यादि भवति ) एक से लेकर नवदश ( १९ ) तक संख्या संख्येय ( द्रव्य ) वाचक होने के कारण त्रि० में प्रयुक्त होती हैं । विंशत्याद्याः ( विंशतिः इत्याद्या यासां ताः संख्याः संख्येयसंख्ययोः वर्तन्ते । एकवचनान्ताश्च । यथा विंशतिः गावः, गवां विंशतिः इति ) बीस आदि संख्या के वाचक शब्द संख्या और संख्येय के अर्थ में प्रयुक्त होने पर एकवचन ही होते हैं ॥ ८३ ॥

संख्यार्थे विंशत्यादीनां यदा संख्यार्थः तदा द्विवचनबहुवचने अपि स्तः द्वे विंशती, तिस्रो विंशतयः । बीस से परार्द्ध तक संख्या के वाचक शब्द संख्या के अर्थ में द्विवचन और बहुवचन भी होते हैं ।

तासु चानवतेः = ( तासु विंशत्यादिषु संख्यासु नवतिमभिव्याप्य स्त्रीलिङ्गाः । यथा विंशत्या पुरुषैः कृतम्, विंशति कुण्डानि ) बीस से लेकर निन्नानबे तक संख्या के वाचक शब्द स्त्रीलिङ्ग हैं ।

पंक्तेः शतसहस्त्रादि क्रमाद्दशगुणोत्तरम् ॥ ८४ ॥
यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।
मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ८५ ॥
ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ।
सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले ॥ ८६ ॥

---

[1]पङ्क्तेः ( पञ्चनम् पञ्चकःयं वा 'पङ्क्तिविंशति' इति साधुः ) दशगुणोत्तरं ( क्रमात् शतसहस्रादि ज्ञेयम् । यथा दश पङ्क्तयः शतम् , दश शतानि सहस्राण्ययुतम् इत्यादि ) दहाई सैकड़ा और हजार आदि संख्या का क्रमशः १-१ नाम है, ये क्रमशः उत्तरोत्तर दशगुने होते हैं ॥ ८४ ॥

इति त्रयम् भावार्थकम् इति सम्बन्धः । यौतवम् ( यौतेर्बाहुलकात् भावे कर्तरि वा तुन् , योतुः शोधनम् शोधकः वेति अण् ) द्रुवयम् ( द्रोर्विकारभूतं प्रस्थादि परिमाणमिति मानार्थे वयः ) पाय्यम् ( मीयतेऽनेन इति ण्यत् धात्वादेः पत्वं युक् च । मानमर्थो यस्य तत् ) ये ३ न० नाम नाप तौल प्रमाण के हैं ।

तुला ( तोल्यतेऽनया इति अङ् अतुलोपमाभ्यामिति निर्देशात् गुणाभावः ) अङ्गुलिः ( अङ्गतीति ) प्रस्थः ( प्रस्थीयतेऽनेन ) तुला, अङ्गुलि, प्रस्थ के भेद से प्रमाण तीन प्रकार के होते हैं ।

आद्यमाषकः[2] ( मष्यतेऽनेनेति घञ् माष एव इति कन् आद्यश्चासौ माषकश्च ) यह १ पु० नाम पाँच गुंजा भर ( मासा ) का है । ते = माषाः षोडश—अक्षः[3] ( अक्षति इति अच् ) कर्षः[4] ( कर्षति इति अच् ) ये २ नाम क्रम से १ पुं० १ पुं० न० कर्ष परिमाण ( सोलह आना ) भर के हैं ।

कर्षचतुष्टयम्—पलम् ( पलति इति अच् ) यह १ न० नाम पल परिमाण ( चार रुपया भर ) का है । कर्षाणां चतुष्टयमिति समासः । हेम्नोऽक्षे = कर्षे—सुवर्णः[5] ( शोभनो वर्णः स्तुतिः वा यस्य ) विस्तः ( विस्यते स्मेति क्तः इडभावश्च ) ये २ पुं० नाम एक मोहर अर्थात् १६ आने भर के हैं । सोने के कर्ष परिमाण को सुवर्ण और विस्त कहते हैं ।

तस्य = हेम्नः पले—कुरुविस्तः ( कुरुषु विस्तः ) यह १ पुं० नाम एक पल सुवर्ण का है । अर्थात् ३२० रत्ती भर का है ॥ ८६ ॥

---

१. पङ्क्तिः दशाक्षरच्छन्दो दशसंख्यावलीषु च । इति विश्वः ।

२. माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः । इति मेदिनी । यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः । यवद्वयेन गुञ्जा स्यात् त्रिगुञ्जो वल्ल उच्यते । माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित् । चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च । गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः । चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः । चतुःपलैश्च कुडवः प्रस्थाद्याः पूर्ववन्मताः ॥ इति मानप्रकारः ।

३. अक्षो रथस्यावयवे व्यवहारे विभीतिके । सायके शकटे कर्षे ज्ञाने चात्मनि रावणौ । अक्षं सौवर्चले तुत्थे हृषीके स्यात् । इति हेमचन्द्रः ।

४. कर्षो ना कर्षणे यानप्रभेदे पुंनपुंसकम् । इति मेदिनी ।

५. सुवर्णविस्तयोः इति क्लीबमाह रुद्रः । सुवर्णो ना स्वर्णकर्षे सुवर्णा च मतान्तरे । स्त्री कृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने । इति विश्वः ( मेदिनी च ) ।

तुला स्त्रियां पलशतं भारः स्याद् विंशतिस्तुलाः ।
आचितो दश भाराः स्युः शाकटो भार आचितः ॥ ८७ ॥
कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः ।
अस्त्रियामढकद्रोणौ खारी वाहो निकुञ्चकः ॥ ८८ ॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।

---

तुला[1] ( तोलयति अच् गुणाभावः टाप् च ) यह १ स्त्री० नाम सौ भर अर्थात् ४०० रुपया भर का है।

भारः[2] ( भ्रियते इति घञ् ) यह १ पुं० नाम २० तुला या २० पसेरी का है।

[3]आचितः ( आचीयते इति क्तः ) यह १ पुं० नाम दश भार अर्थात् २५ मन का है।

शाकटः ( शकटेन उह्यते इति अण् ) यह १ पु० नाम एक गाड़ी का बोझ आचित अर्थात् २५ मन का है ॥ ८७ ॥

कार्षापणः[4] ( कर्षस्यायम् इत्यण् कार्षः, आपणनम् इति अप् घो वा आपणः, कार्षस्य कार्षेण वा आपणः ) कार्षिकः ( कर्षस्य अयम् इति ठञ् ) ये २ पुं० नाम रुपये के हैं।

ताम्रिके ( ताम्रस्यायम् इति ठञ् यस्मिन् ) कर्षापणे इति सम्बन्धः—पणः[5] ( पण्यतेऽनेनेति अप् ) यह १ पुं० नाम तावां के बने पैसे के हैं।

आढकः[6] ( आढौकते इति अच् पृषो० ) द्रोणः[7] ( द्रवति इति नः ) खारी ( खमाराति इति कः ङीप् च ) वाहः[8] ( उह्यतेऽनेनेति घञ् ) निकुञ्चकः ( निकुञ्चति इति अच् स्वार्थे कन् च ) कुडवः ( कुण्डते कुण्ड्यते वेति वाहुलकात् कवच्, अनित्यत्वात् न नुम् ) प्रस्थः[9] ( प्रस्थीयतेऽनेनेति घञर्थे कः ) ये ७ नाम क्रम से २ पुं० न०, १ स्त्री०, ४ पुं० आढक आदि विशेष परिमाण के १–१ नाम है।

---

१. तुला सादृश्यमानयोः। गृहाणां दारुबन्धाय पीठिकायामपीष्यते। राशौ पलशते भाण्डे तुलं स्याद् ब्रह्मदारुणि। आकाशे च पिचौ न स्त्री। इति विश्वहेमचन्द्रौ।

२. भारः सहस्रद्वितये पलानाम् अपि वीवधे। इत्यजयः। भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके। इति मेदिनी।

३. भारैर्दशभिराचितः। इति रत्नकोषः। आचितः शकटोन्मेषे पलानामयुतद्वये। इति विश्वः।

४. कर्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च। इति मेदिनी।

५. पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्रहे। क्रय्यशाकादिके द्यूते व्यवहारे भृतौ धने। इति विश्वमेदिन्यौ। ६. आढकी च तुवर्यां स्त्री परिमाणान्तरे त्रिषु। इति मेदिनी।

७. द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये। पुमान् कृपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे। स्त्रियां काष्ठाम्बुवाहिन्यां गवादिन्यामपीष्यते। इति विश्वः ( मेदिनी च )

८. वाहोऽश्वमानयोः। वृषे वाहा तु वाहो स्यात्। इति हेमचन्द्रः।

९. प्रस्थोऽस्त्रियाम् मानभेदे सानावत्युच्चवस्तुनि। इति मेदिनी। वाहो विंशतिखारीभिः भविका स्यादनेन तु। प्रवर्तः पञ्चखारीभिः सस्यमाने प्रकीर्तितः। पलं प्रपञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्। चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम्। अष्टाढको भवेद् द्रोणो द्विद्रोणः सूर्प उच्यते। सार्धसूर्पो भवेत्खारी द्विद्रोणाः गोण्युदाहृता। तामेव भारं जानीयाद् वाहो भारचतुष्टयम्।

**पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके ॥ ८९ ॥**
**द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।**
**हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९० ॥**
**स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते ।**

---

पादः[1] ( पद्यते इति घञ् ) यह १ पुं० नाम चौथाई भाग का है।

अंशः[2] ( अंश्यते इति घञ् ) भागः[3] ( भज्यते इति घञ् ) वण्टकः ( वण्ट्यते इति कर्मणि घञ् स्वार्थे कन् च ) ये ३ पुं० नाम भाग, हिस्सा के हैं ॥ ८९ ॥

द्रव्यम्[4] ( द्रुरिव इति स्वार्थे द्रुशब्दात् ण्यप्रत्ययो निपातः ) वित्तम्[5] ( विद्यन्ते स्मेति निष्ठान्तो निपातः ) स्वापतेयम् ( स्वपतौ साधु इति ढञ् ) रिक्थम् ( रिच्यते इति थक् ) ऋक्थम् ( ऋच्यते इति बाहुलकात् क्थन् ) धनम्[6] ( धनति इति अच् ) वसु[7] ( वसति उस्यते वेति उः ) हिरण्यम्[8] ( हर्यति इति कन्यन् हिरादेशश्च ) द्रविणम्[9] ( द्रवति द्रूयते वेति इनन् ) द्युम्नम्[10] ( दिवं मनति इति कः ) अर्थः[11] ( अर्थ्यते इति घञ् ) राः[12] ( राति सुखं रायते वेति डैः अत्वञ्च ) विभवः[13] ( विभवति इति अच् ) ये १३ नाम क्रम से १० न० ३ पुं० धन के हैं ॥ ९० ॥

हेम च रूप्यं च ते, कृतं=घटितम् अकृतम्=अघटितम् ते, स्यातामिति सम्बन्धः—कोषः ( कुष्यते इति घञ् ) हिरण्यम् ( हर्यति इति कन्यन् हिरादेशश्च ) ये क्रम से १ पुं० १ न० नाम सोना चाँदी आदि के हैं।

---

१. पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः। पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः। श्लोकपादेऽपि च क्लीबं पुंल्लिङ्गः किरणे पुनः॥ पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे च मयूखे च। इति मेदिनी।

२. अंशो विभाजने प्रोक्तः एकदेशेऽपि वस्तुनः। इति मेदिनी।

३. भागो रूपार्धके भाग्यैकदेशयोः। इति हैमः।

४. द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः। विनये भेषजे रीत्याम्। इति हैमः।

५. वित्तं क्लीबं जने वाच्यलिङ्गं ख्याते विचारिते। इति मेदिनी।

६. धनं तु गोधने वित्ते। इति विश्वः मेदिनी च।

७. वसुर्मयूखाग्निजनाधिपेषु योक्त्रे सुरे स्याद्वसु हाटके च।
वृद्धयौषधस्थानधनेषु रत्ने वसु स्मृतं स्यान्मधुरेऽन्यवच्च॥ इति विश्वप्रकाशः।

८. हिरण्यं चेतसि द्रव्ये शातकुम्भवराटयोः। अक्षये मानभेदे च स्यादकुप्ये नपुंसकम्॥ इति मेदनी।

९. द्रविणं न द्वयोर्वृत्तं काञ्चने च पराक्रमे। इति विश्वः ( मेदिनी )।

१०. द्युम्नं वित्ते बलेऽपि च। इति हेमचन्द्रः मेदिनी च।

११. अर्थो विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां निवृत्तौ च प्रयोजने। इति मेदिनी।

१२. रा द्वयोर्विभवे स्वर्णे। इति रुद्रः।

१३. विभवो धननिर्वृत्योः। इति हैमः।

**ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम् ॥ ९१ ॥**
**गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।**
**शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ॥ ९२ ॥**
**मुक्ताथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम् ।**
**रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥**
**स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।**

---

ताभ्यां हेमरूप्याभ्यां यदन्यत्ताम्रादि तदिति सम्बन्धः—कुप्यम् ( गुप्यते इति क्यप्, आदेः कत्वं च निपातनात्, सुवर्णरजतभिन्नं धनम् ) यह १ न० नाम ताँबा आदि धातु का है। तद्द्वयं = कुप्याकुप्यमाहतं = ताडितं चेत्तदा—रूप्यम् ( आहतं[1] रूपमस्येति यप् ) यह १ न० नाम सिक्के बने हुए सोना चाँदी तामा आदि रुपया, अठन्नी, चवन्नी, अशर्फी, पैसा, अधेला का है ॥ ९१ ॥

गारुत्मतम् ( गरुत्मतो जातत्वात् इत्यण् ) मरकतम् ( मरकम् तरन्त्यनेनेति डः ) अश्मगर्भः ( अश्मनो गर्भः ) हरिन्मणिः ( हरिद्वर्णो मणिः शाकपार्थिवादिः ) ये ४ नाम क्रम से २ न० २ पुं० मरकतमणि के हैं।

शोणरत्नम् ( शोणं च तद्रत्नं च ) लोहितकः ( लोहितमेवेति कन् ) पद्मरागः ( पद्ममिव रागोऽस्य ) ये ३ नाम क्रम से १ न० २ पुं० नाम पद्मरागमणि, लाल के हैं।

अथेति सम्बन्धः—मौक्तिकम्[2] ( मुक्ता एव इति ठक् ) मुक्ता ( मुच्यते स्मेति क्तः टाप् च ) ये क्रम से १ न० १ स्त्री० नाम मोती के हैं ॥ ९२ ॥

विद्रुमः[3] ( विशिष्टो द्रुमः ) प्रवालः[4] ( प्रबलति इति णः ) ये २ नामक्रम से १ पुं० १पुं० न० नाम मूँगे के हैं। अश्मजातौ = मरकतादौ मुक्तादिकेऽपि च रत्नं क्लीबं मणिर्द्वयोः इति सम्बन्धः—रत्नम्[5] ( रमन्ते धनार्थिनोऽस्मिन् बाहुलकात् क्नप् तुक् च ) मणिः[6] ( मण्यते इति इन् ) ये २ नाम क्रम से १ न०, १ पुं न० नाम लाल, हीरा, मोती आदि जवाहरात के हैं ॥ ९३ ॥

स्वर्णम् ( सुष्ठु स्वणोति इति अच्, अर्णनमर्णः घञ् शोभनोऽर्णो गतिरनेन वा ) सुवर्णम् ( शोभनो

---

१. आहतं तु मृषार्थके। गुणिते ताडिते चापि। इति हैमः।
२. मुक्ता मौक्तिकपुंश्चल्योः। इति हैमः।
३. विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्। इति मेदिनी।
४. प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे। इति विश्वः।
५. रत्नं स्वजाति श्रेष्ठे स्यान्मणौ। इति हेमः। रत्नं गारुत्मतं पुष्परागो माणिक्यमेव च। इन्द्रनीलश्च गोमेदस्तथावैदूर्यमित्यपि। मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव॥ रत्नं क्लीबे मणिः पुंसि स्त्रियामपि निगद्यते। तत्तु पाषाणभेदोऽस्ति मुक्तादि च तदुच्यते॥
६. मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेऽपि च। कण्ठदेशस्तनेऽजायाः लिङ्गाग्रेऽलिञ्जरेऽपि च॥ इति विश्वः।

तपनीयं शातकुम्भं गाङ्गेयं भर्मं कर्बुरम् ॥ ९४ ॥
चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥
अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः ।
दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ ९६ ॥

---

वर्णोऽस्य, सुष्ठु वर्णते वेति ) कनकम्[1] ( कनति इति वुन् ) हिरण्यम् ( हर्यति इति कन्यन् हिरादेशश्च ) हेम ( हिनोति हीयते वेति मनिन् ) हाटकम् ( हटति इति ण्वुल् ) तपनीयम् ( तप्यतेऽनेनेति अनीयर् ) शातकुम्भम् ( शतकुम्भे पर्वते भवम् इति अण् ) गाङ्गेयम्[2] ( गङ्गायाः अपत्यम् ढक् भर्म[3] ( बिभर्ति भरति वेति मनिन् ) कर्बुरम्[4] ( कर्बत्यनेन मद्गुरादित्वात् निपातनात् सिद्धम् ) चामीकरम् ( चमीकरे आकरे भवम् इति अण् ) जातरूपम् ( जातं रूपं यस्य इति रूपम् ) महारजतम् ( महच्च तत् रजतञ्च इति समासः आत्वम् ) काञ्चनम् ( काञ्चति इति ल्युः ) रुक्मम्[5] ( रोचते इति मक् ) कार्तस्वरम् ( कृतस्वरे आकरविशेषे भवम् इति अण्, कृताः पठिताः स्वराः येन तस्मै देयम् वा ) जाम्बूनदम् ( जम्बूरसस्य नद्यां भवम् इत्यण् ) अष्टापदः ( अष्टौ धातवः पदानि स्थानान्यस्य 'अष्टनः संज्ञायाम्' इति दीर्घः ) ये क्रम से १८ न० १ पुं० न० नाम सुवर्ण के हैं ॥ ९५ ॥

शृङ्गीकनकम्[6] ( शृङ्गिणममीः इति शृंगी, कनति वुन् ) यह १ न० नाम भूषण बने हुए सुवर्ण का है । यदलंकारसुवर्णम् अलंकारसम्बन्धि सुवर्णम्, अदः इति सम्बन्धः ।

दुर्वर्णम् ( दुष्टो वर्णोऽस्य ) रजतम्[7] रजति, रज्यते वेति अतच् ) रूप्यम्[8] ( रूपं रूपक्रियायाम् इति यत् ) खर्जूरम्[9] ( खर्जति इति ऊरः ) श्वेतम्[10] ( श्वेतते इति अच् ) ये ५ न० नाम चाँदी के हैं ॥ ९६ ॥

---

१. कनकं हन्ति पुंसि स्यात् किंशुके नागकेशरे। धत्तूरे काञ्चनारे च कालिये चम्पकेऽपि च। इति मेदिनी।

२. यं गर्भं सुषुवे गंगा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत। इति वायुपुराणम्। गाङ्गेयः स्यात् पुमान्भीष्मे क्लीबं स्वर्णकसेरुणोः। इति मेदिनी।

३. भर्म स्यात्काञ्चने भृतौ। इति मेदिनी।

४. कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः। कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत्। इति विश्वः।

५. रुक्मं लोहे सुवर्णे च। इति हेमचन्द्रः।

६. स्त्री शृङ्गी मण्डनसुवर्णम्। इति रत्नकोषः। भूषणं कनकं शृंगी। इति नाममाला।

७. रजतं त्रिपु शुक्ले स्यात्, क्लीबं हारे च दुर्वर्णे। इति विश्वः।

८. रूप्यः स्यात्सुन्दरे त्रिपु। आहतस्वर्णरजते रजते च नपुंसकम्। इति हेमचन्द्रः।

९. खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः। इति हैमः।

१०. श्वेतावराटिकाकाष्ठपाटला शङ्खिनीषु च। क्लीबं रूप्येऽन्यवच्छुक्ले। इति मेदिनी।

**रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ।**
**शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥**
**लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ।**
**अश्मसारोऽथ मण्डूरं शिंघाणमपि तन्मले ॥ ९८ ॥**
**सर्वं च तैजसं लोहं विकारस्त्वयजः कुशी ।**

रीतिः[1] ( रीयते रिणाति वेति क्तिन् ) आरकूटः[2] ( अरणमारः ऋ गतौ इति घञ् आरं कूट्यते इति अच् । ) ये २ नाम क्रम से १ स्त्री० १ पुं० पीतल के हैं ।

ताम्रकम् ( ताम्यति ताम्यते वेति रक् स्वार्थे कन् दीर्घश्च ) शुल्वम्[3] ( शलति इति बन्नन्तो निपातः साधुः ) म्लेच्छमुखम् ( म्लेच्छदेशे मुखमुत्पत्तिरस्येति म्लेच्छस्य मुखमिवेति वा ) द्व्यष्टम् ( द्वे हेमरूप्ये अश्नुते स्मेति, क्तः ) वरिष्ठम्[4] ( अतिशयेन वरम् इति इष्ठन्, अतिशयेन उरु वेति इष्ठनि, उरोः वरादेशश्च वा ) उदुम्बरम्,[5] ( उं शम्भुमृणोति इति खच् मुम् च ) ये ६ न० नाम ताँबा के हैं । ॥ ९७ ॥

लोहः[6] ( लोहति लुह्यते वेति अच् अञ् वेति । अणि कृते स ते लौहम् ) शस्त्रकम् ( शस्यतेऽनेनेति ष्ट्रन् कन् च ) तीक्ष्णम्[7] ( तेजयति तेज्यते वेति क्स्नः दीर्घश्च ) पिण्डम्[8] ( पिण्डते पिण्ड्यते वेति अच् घञ् वा ) कालायसम् ( कालं च तदयश्च इति टच् ) अयः ( एति अयते वेति असुन् ) अश्मसारः[9] ( अश्मनः सारः ) ये क्रम से १ पुं० न० ५ पुं० न० नाम लोहे के हैं ।

मण्डूरम् ( मण्डते इति ऊरच् ) शिंघाणम् ( शिङ्घ्यते इति 'आणको लूधूशिङ्घिधाञ्भ्यः इति आणकि, पृषोदरादित्वात् कलोपः ) ये २ न० नाम लोह के मुर्चा ( मैल ) के हैं ॥ ९८ ॥

सर्वं तैजसम् लोहं ( तेजसो विकारः इत्यण् लोहतीति कः ) यह १ न० नाम सब तरह के धातु का है ।

---

१. रीतिः स्त्रियां स्यन्दप्रचारयोः । पित्तले लोहकिट्टे च । इति मेदिनी ।
२. आरकूटोऽस्त्रियां द्रव्यं रीतिस्तु रीतिकोमलम् । इति रभसः ।
३. शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ । इति हेमचन्द्रः ।
४. वरिष्ठं ताम्रके क्लीबं । इतिटवर्गद्वितीयान्ते रुद्रः । वरिष्ठे मरिचेऽपि च । ताम्रे क्लीबं तित्तिरौ ना वरोरुतमयोस्त्रिषु । इति विश्वमेदिन्यो ।
५. उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रके स्यान्नपुंसकम् ॥ इति मेदिनी । अणि कृते—औदुम्बरम् भवेत्ताम्रे फलादौ यज्ञशाखिनः । इत्यजयः ।
६. लोहोऽस्त्री शस्त्रके लौहं जोङ्गके सर्वतैजसे । इति मेदिनी ।
७. तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु ॥ इति मेदिनी ।
८. पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः । देहमात्रे निवापे च गोलसिह्लकयोरपि ॥ ओण्ड्रपुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः । पिण्डी तु पिण्डतगरेऽलाबूखर्जूरभेदयोः । इति मेदिनी ।
९. अश्मसारं च शस्त्रकम् । इति अमरमाला ।

क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ॥ ९९ ॥
गवलं माहिषं शृङ्गमभ्रकं गिरिजामले ।
स्रोतोञ्जनं तु सौवीरं कापोताञ्जनयामुने ॥ १०० ॥
तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ।

---

अयसो विकारः—कुशी[1] (कुं भूमिं स्यति इति डः ङीष् च ) यह १ स्त्री० नाम लोहनिर्मित अस्त्र, बर्तन तथा फार आदि का है ।

क्षारः[2] ( क्षरति इति णः ) काचः[3] ( काचते इति अण् ) ये २ पुं नाम काँच के हैं ।

चपलः[4] ( चोपति इति कलः, उपधायाः अत् ) रसः[5] ( रसयति इति अच् ) सूतः[6] ( शिवेन सूयते स्मेति क्तः ) पारदः[7] ( पारं ददाति इति कः ) ये ४ पुं० नाम पारा के हैं ॥ ९९ ॥

माहिषं शृंगं—गवलम् ( अलति इति अच् , गवामलम् । गवनमिति अप्—गवं, लातीति को वेति यह १ न० नाम भैंसे के सींग का है ।

अभ्रकम् ( अभ्रति अभ्यते वेति क्वुन् )[8]गिरिजामलम् ( गिरौ जातम् इति डः अमति इति कलच् ) ये २ न० नाम अभ्रक के हैं ।

स्रोतोञ्जनम् ( अज्यते नयनमनेनेति करणे ल्युट् , स्रोतोजमञ्जनम् इति शाकपार्थिवादिः )[9]सौवीरम् ( सुवीरे देशे भवम् इति अण् ) कापोताञ्जनम् ( कपोतस्येदम् इत्यण् कापोतं च तदञ्जनञ्च ) यामुनम् ( यमुनायां भवम् इत्यण् ) ये ४ न० नाम सुर्मा, आँजन के हैं ॥ १०० ॥

तुत्थाञ्जनम् ( तुत्थयति इति अच् , तुत्थं तदञ्जनम् च ) शिखिग्रीवम् ( शिखिनो ग्रीवा, शिखि-

---

१. कुशी फालेऽपि वल्गायां । कुशा पापिष्ठमत्तयोः । कुशो वाच्यवदाख्यातः । इति विश्वः । कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः । कुशो लोहविकारे स्यात् कुशा वल्गा कुशं जले । इति हैमः ।
२. क्षारः काचे रसे गुडे । भस्मनि धूर्ते लवणे । इति हेमचन्द्र ।
३. काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे । इति विश्वः, मेदिनी च ।
४. चपलश्चोरके चले । क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे । मीने च चपला तु स्यात् पिप्पल्यां विद्युति श्रियाम् । पुंश्चल्यामपि । इति हेमचन्द्रः ।
५. रसः स्वादे जले वीर्ये शृंगारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च । रसा तु रसना पाठासल्लकी क्षितिकङ्गुपु । इति हैमः ।
६. सूतस्तु सारथौ तक्ष्णि क्षत्रियाद् ब्राह्मणीसुते । वन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु ॥ इति विश्वः मेदिनी च ।
७. रसेन्द्रः पारदः प्रोक्तः पारतोऽपि निगद्यते । इति तारालः । पारतस्तु मनाक्पाण्डुः सूतस्तु रहितो मलात् । परदस्तु मनाक् शीतः सर्वेतुल्यगुणाः स्मृताः । इति शब्दार्णवः ।
८. गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि गिरिजा गौरीमातुलुङ्ग्योश्च योषिति ॥ इति मेदिनी । अमलं त्वभ्रके क्लीबं लक्ष्म्यां स्त्री निर्मले त्रिषु । इति मेदिनी । गिरिजं गिरिजा बीजममलं गवलध्वजम् । इति वाचस्पतिः ।
९. सौवीरं काञ्जिके स्रोतोञ्जने च बदरीफले । ना तु नीवृति । इति विश्वः मेदिनी च ।

कर्परी दार्विकाक्वाथोद्भवं तुत्थं रसाञ्जनम् ॥ १०१ ॥
रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धिकः ।
सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका ॥ १०२ ॥
रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम् ।
पिञ्जरं पीतनं तालमालं च हरितालके ॥ १०३ ॥

---

ग्रीवाऽस्यास्ति इति अच्) वितुन्नकम् (वितुन्नते स्मेति क्तः स्वार्थे कन् च) मयूरकम् (मयूरस्य प्रतिकृतिः इति कन्) ये ४ न० नाम तूतिया के हैं।

कर्परी (कल्पते इति बाहुलकादरट् लत्वाभावश्च) दार्विका (दार्वी दारुहरिद्रा तद्विकारोऽपि दार्वी अभेदोपचारात् स्वार्थे कन्) तुत्थम्[1] (क्वाथोद्भवमावर्तितं सदुक्तपर्यायम्। तुत्थयति इति अच्) ये नाम क्रम से २ स्त्री० १ न० घिसकर बनाये हुए अञ्जन के हैं।

रसाञ्जनम् (रसजमञ्जनम् इति शाकपार्थिवादिः) रसगर्भम् (रसो गर्भेऽस्य) तार्क्ष्यशैलम् (तार्क्ष्यशैले भवम्) ये ३ न० नाम नेत्र में लगाने के अञ्जन विशेष के हैं।

गन्धाश्मा (गन्धयुक्तोऽश्मा शाकपार्थिवादिः) गन्धकः (गन्धोऽस्यास्ति इति अच् स्वार्थे कन् च) सौगन्धिकः[2] (शोभनो गन्धोऽस्येति ठक्) ये ३ पुं० नाम गन्धक के हैं।

चक्षुष्या[3] (चक्षुषे हिता इति यत् टाप् च) कुलाली[4] (कुलमलति इति अण् ङीप् च) कुलत्थिका (कुलत्थप्रतिकृतिः इति कन्) ये ३ स्त्री० नाम काला सुर्मा के हैं ॥ १०२ ॥

रीतिपुष्पम् (रीतेः पित्तलस्य पुष्पमिव) पुष्पकेतु[5] (पुष्पस्य केतुरिव) पौष्पकम् (पुष्पस्य प्रतिकृतिः इति कन्, स्वार्थेऽण् च) कुसुमांजनम् (कुसुममिव, कुसुमनाशकं वा अंजनम्) ये ४ न० नाम तपाये हुए पीतल से निकली हुई मैल के बने हुये सुर्मे के हैं।

पिंजरम्[6] (पिंजनम् इति घञ्, कुत्वाभावः पिंजं वर्णविशेषं राति इति कः) पीतनम्[7] (पीतं वर्णमयते इति डः) तालम्[8] (तालयति ताल्यते वेति ण्यन्तः अच्) आलम्[9] (आलयति इति अच्)

---

१. तत्तुत्थं क्वाथोद्भवमावर्तितं सदुक्तपर्यायम्। तुत्थं चास्य नाम। तुत्थं स्यादमृतासङ्ग कर्परीतुन्नमित्यपि। इति रभसः।

२. आमोदलेशयोः गन्धः स सुगन्धः सुगन्धकः। इति रभसः।

३. चक्षुष्यः केतके पुण्डरीककर्सञ्जकपादपे। कुलत्थिका सुभगयोः स्त्रियामक्षिहितेऽन्यवत्। इति मेदिनी। ४. चक्षुषा कुम्भकारी च कुलाली च कुलत्थिका। इति रत्नकोषः।

५. उदन्तनपुंसकेषु—पुष्पकेतु कुसुमांजनम्। इति रुद्रः।

६. पिञ्जरोऽश्वान्तरे पीते क्लीबं स्वर्णे च पीतने।

७. पीतनं पीतदारुणि। कुङ्कुमे हरिताले च पुमानाम्रातके मतः। इति विश्वः मेदिनी च।

८. तालः कालक्रियामाने हस्तमानद्रुमेदयोः। करास्फोटे करतले हरिताले त्सरावपि ॥ इति हैमः। तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते। गीतकालक्रियामाने करस्फाले द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ तालो जटौषधौ। क्लीबं तु हरिताले स्यात्। इति विश्वः मेदिनी च।

९. आलं स्यादनर्थहरितालयोः। इति हेमचन्द्रः।

गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ।
बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥
हिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् ।
नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् ॥ १०५ ॥

---

हरितालकम्[1] ( हरितं वर्णमालाति इति कः, स्वार्थे कन् च ) ये ५ नाम हरताल के हैं ॥ १०३ ॥

गैरेयम् ( गिरौ भवम् इति ढक् ) अर्थ्यम्[2] ( अर्थ्यते इति ण्यन्तः अर्थादनपेतं वा यत् ) गिरिजम्[3] ( गिरेर्जातम् इति डः ) अश्मजम् ( अश्मनो जातम् इति डः ) शिलाजतु ( शिलाया जत्विव इति ) ये ५ न० नाम शिलाजीत के हैं।

बोलः ( बोलयति इति अच् ) गन्धरसः ( गन्धवान् रसोऽस्य इति, राजदन्तादित्वात् रसगन्धोऽपि ) प्राणः[4] ( प्राणिति अनेन वति अच् , घञ् वेति ) पिण्डः[5] ( पिण्डते इति अच् ) गोपः ( गोः जलात् पाति इति कः ) रसः ( रसयति रस्यते अनेन वेति अच् । गोपे उत्पत्तौ रसोऽस्य इति समस्तमपि ) ये ६ पुं० नाम गन्धरस के हैं ॥ १०४ ॥

हिण्डीरः ( हिण्डी वा शब्दमीरयति इति अच् अण् वा ) अब्धिकफः ( अब्धेः कफः इव इति ) फेनः ( स्फायते इति निपातनात् नक् प्रत्ययो धातोश्च 'फे' इत्यादेशः ) ये ३ पुं० नाम समुद्रफेन के हैं।

[6]सिन्दूरम् ( स्पन्दते इति ऊरन् सम्प्रसारणञ्च ) नागसम्भवम् ( नागं = सीसं संभवः = उत्पत्तिस्थानम् अस्य ) ये २ न० नाम सिन्दूर के हैं।

[7]नागम् ( नगे भवः इत्यण् ) सीसकम् ( सिनोति इति क्विप् सि, अनित्यत्वान्न तुक् , ईस्यति इति कः, ईसम्-सि च तदीसं च स्वार्थे कन् ) योगेष्टम् ( योगे = धातुसम्बन्धे इष्टम् इति सप्तमीसमासः )

---

१. हरितालमलं तालवर्णकं नटभूषणम् । इति माधवः । हरिताले च कर्बूरं गोदन्तो नटसंज्ञकः । इति त्रिकाण्डशेषः ।
२. अर्थ्यो विपश्चिति न्याय्ये त्रिष्वर्थ्यं तु शिलाजतु । इति यान्ते रुद्रः ।
३. गिरिजं त्वभ्रकेऽपि स्याच्छिलाजतुनि शैलजे । लोहेऽपि गिरिजा गौरी मातुलुङ्ग्योश्च योषिति । इति मेदिनी ।
४. प्राणो हृन्मारुते बोले काव्ये जीवेऽनिले बले । पुंल्लिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु । इति मेदिनी ।
५. पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिह्लयोः । कवलं पिण्डं तु वेश्मैकदेशे जीवनायसोः । बले सान्द्रे पिण्ड्यलाबूखर्जूर्योस्तगरेऽपि च । इति हेमचन्द्रः ।
६. सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके । सिन्दूरी रोचनारक्तचेलिकाधातकीषु च । इति मेदिनी ।
७. नागं नपुंसकं रङ्गे सीसके करणान्तरे । नागः पन्नगमातङ्गक्रूराचारिषु तोयदे । नागकेसरपुंनागनागदन्तप्रभेदके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः ॥ इति मेदिनी ।

रङ्गवङ्गे अथ पिचुस्तूलोऽथ कमलोत्तरम् ।
स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥ १०६ ॥
मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि ।
मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥

---

[1]वप्रम् ( उप्यते इति रन् वर्धते इति रनि वध्रः ) ये ४ न० नाम सीसा के हैं ।

[2]त्रपु ( त्रपते इति उः ) [3]पिच्चटम् ( पिच्चयति वेति अच् , पिच्चं टौकते इति डः, पिच्चयति इति अटन् वा ) [4]रङ्गम् ( रङ्गति इति अच् ) [5]वङ्गम् ( वङ्गति इति अच् ) ये ४ न० नाम राँगा के हैं ।

[6]पिचुः ( पिचति इति मृगय्वादित्वात् साधुः ) [7]तूलः ( तूलयति तूल्यते वेति कः घञ् वा ) ये २ पुं० नाम कपास, रुई के हैं ।

कमलोत्तरम् ( कमलादुत्तरम् ) [8]कुसुम्भम् ( कुस्यति इति उम्भः बाहुलकाद् गुणाभावश्च ) वह्निशिखम् ( वह्निवत् शिखाऽस्य ) [9]महारजनम् ( रज्यतेऽनेनेति ल्युट्, नलोपश्च, महच्च तद् रजनं च इति समासः ) ये ४ न० नाम वर्रे के फूल के हैं ।

मेषकम्बलः ( मेषलोमकृतः कम्बलः इति शाकपार्थिवादिः ) [10]ऊर्णायुः ( ऊर्णाऽस्यास्ति इति युस् ) ये २ पुं० नाम भेड़ के रोम के बने हुए कम्बल के हैं ।

शशोर्णम् ( शशस्य ऊर्णा ) शशलोम ( शशस्य लोम ) ये २ न० नाम शशक ( खरहे ) के रोएँ के हैं ।

[11]मधु ( मन्यते इति उः, धान्तादशश्च निपातनात् ) [12]क्षौद्रम् (क्षुद्राभिर्मक्षिकाभिः कृतम् इति अञ् ) माक्षिकम् ( मक्षिकाभिः कृतम् इति अण् ) ये ३ न० नाम मधु, शहद के हैं ।

---

१. वध्रः सीसवरत्रयोः । इति हैमः ।
२. रङ्गसीसकयोस्त्रपुः । इति रुद्रः ।
३. 'पिच्चटो नेत्ररोगे स्यात्क्लीबं सीसकरङ्गयोः' । इति विश्वः मेदिनी च ।
४. रङ्गो ना रागे नृत्यरणक्षितौ । अस्त्री त्रपुणि । इति मेदिनी ।
५. वङ्गं सीसकरङ्गयोः । वार्ताकेऽपि च कार्पासे पुंभूम्निनीवृदन्तरे । इति मेदिनी । वङ्गः कार्पासे वृन्ताके वङ्गा जनपदान्तरे । वङ्गं त्रपुणि सीसे च । इति हैमः ।
६. पिचुर्ना कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे । इति विश्वमेदिन्यौ ।
७. तूलं स्याद् ब्रह्मदारुणि । आकाशेऽथ पिचौ न स्त्री । इति विश्वः मेदिनी च ।
८. कुसुम्भं हेमनि महारजने ना कमण्डलौ । इति मेदिनी ।
९. महारजनमुद्दिष्टं शातकुम्भं कुसुम्भयोः । इति मेदिनी ।
१०. ऊर्णायुर्ना क्षणाभङ्गे मेषकम्बलमेषयोः इति विश्वः मेदिनी च ।
११. मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति । इति विश्वमेदिन्यौ ।
१२. क्षौद्रं तु मधुनीरयोः । इति हेमचन्द्रः ।

मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका।
नैपाली कुनटी गोला यवक्षारो यवाग्रजः ॥ १०८ ॥
पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः।
सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना ॥ १०९ ॥
शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम्।
ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ११० ॥

---

मधूच्छिष्टम् ( मधुन उच्छिष्टम् ) सिक्थकम् ( सिञ्चति सिच्यते वेति स्थक् स्वार्थे कन् च ) ये २ न० नाम मोम के हैं ॥ १०७ ॥

मनःशिला ( मनःशब्दवाच्या शिला इति शाकपार्थिवादिः ) मनोगुप्ता ( मनसा गुप्ता इति ) मनोह्वा ( मनःशब्देन ह्वयते=कथ्यते इति अङ् ) नागजिह्विका ( नागानां जिह्वेव इति स्वार्थे कन् ) [1]नैपाली ( नेपाले भवा इत्यण् ) कुनटी ( कौ नटति इति अच् ङीष् च ) [2]गोला ( गां दीप्तिं लाति इति कः टाप् च ) ये ७ स्त्री० नाम मैनसिल के हैं।

यवक्षारः ( यवानां क्षारः ) यवाग्रजः ( यवाग्राज्जायते स्मेति डः ) पाक्यः ( पाके साधुः इति यत् ) ये ३ पुं० नाम यवाखार के हैं।

स्वर्जिकाक्षारः ( स्वर्जिकारसजः क्षारः इति शाकपार्थिवादित्वात् समासः ) कापोतः ( कपोतवर्णोऽस्यास्ति इत्यण् ) सुखवर्चकः ( सुखं वर्चयति इति वुन् ) [3]सौवर्चलम् ( सुवर्चलायाः इदम् इत्यण् ) रुचकम् [4] (रोचते अनेन क्वुन् ) ये ५ नाम क्रम से ३ पुं० २ न० सज्जीखार के हैं।

त्वक्क्षीरी ( त्वचो वंशात् क्षीरमस्याः इति ङीष ) वंशरोचना[5] ( रोचते इति ल्युट् वंशस्य रोचना ) ये २ स्त्री० नाम वंशलोचन के हैं ॥ १०९ ॥

शिग्रुजम् ( शिग्रोर्जायते स्मेति डः ) श्वेतमरिचम् ( श्वेतं मरिचमिव ) ये २ न० नाम सहिजन के बीज के हैं।

मोरटम् ( मुरति इति अटन् ) यह १ न० नाम गन्ने की जड़ का है।

ग्रन्थिकम्[6] ( ग्रन्थेः प्रतिकृतिः इति कन्) पिप्पलीमूलम् ( पिप्पल्या मूलम् )

---

१. नैपाली नवमालीमनःशिलासुबहासु च। इति विश्वः।

२. गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पात्राञ्जने मण्डने चालिञ्जरे बालखेलने ॥ चला लक्ष्म्यां पुमान् कम्पे कम्पयुक्तेऽभिधेयवत्। इति मेदिनी।

३. अथ सौवर्चलं सर्जक्षारे च लवणान्तरे। इति मेदिनी।

४. रुचको बीजपूरे च निष्के दन्तकपोतयोः। न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः ॥ सौवर्चलेऽपि मङ्गल्यद्रव्येऽपि कटकेऽपि च। इति मेदिनी।

५. स्याद्वंशरोचना वांशी तुकाक्षीरी तुकाशुभा। त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी तु वैणवी ॥ इति शाश्वतः।

६. ग्रन्थिकं पिप्पलीमूले गुग्गुलग्रन्थिपर्णयोः। करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे। इति विश्वः मेदिनी च।

गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम् ।
त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् ॥ १११ ॥

---

चटकाशिरः[1] ( चटकायाः शिरः इव ) अपिशब्द से केवल शिरका भी ग्रहण है। ये ३ न० नाम पिपरामूल के हैं ॥ ११० ॥

गोलोमी[2] ( गोलोम्नामियम् इत्यण् वृद्ध्यभावश्च ) भूतकेशः ( भूतानां केश इव, भूतःकेशोऽस्य वा ) ये २ नाम क्रम से १म स्त्री० २य पुं० जटामांसी के हैं।

[3]पत्राङ्गम् ( पत्राणि अङ्गेऽस्य ) रक्तचन्दनम् ( रक्तसारत्वात् रक्तं चन्दनमिव ) ये २ न० नाम लाल चन्दन के समान पतङ्ग नाम से प्रसिद्ध रक्तसार के हैं।

त्रिकटु ( त्रयाणां कटूनां समाहारः ) त्र्यूषणम् ( ऊषतीति ल्युट् नन्द्यादिः, त्रयाणामूषणानां समाहारः पात्रादिः ) व्योषम् ( विशेषेण औषतीति अच् ) ये ३ न० नाम त्रिकटु ( पीपल, सोंठ, काली मिर्च के समुदाय ) के हैं।

[4]त्रिफला ( त्रयाणां फलानां समाहारः अजादित्वात् टाप्, तृफतीति कः तृफलाऽपि ) फलत्रिकम् ( फलानां त्रिकम् ) ये २ नाम त्रिफला ( आँवला, हर्रा, बहेड़ा ) के हैं, जिनमें प्रथम स्त्री०, द्वि० नपुंसक हैं ॥ १११ ॥

॥ इति वैश्यवर्गविवरणम् ॥



---

१. शिरः अपि। शिरो ना पिप्पलीमूले। इति रभसः। शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति। इति मेदिनी।

२. गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः। इति विश्वः मेदिनी च।

३. पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने। इति विश्वः।

४. त्रिफला तृफलाऽपि च। इति त्रिकाण्डशेषः।

# १०. शूद्रवर्गः

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।
आचाण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ॥ १ ॥
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद् द्विजन्मनोः ।
शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः ॥ २ ॥
माहिष्योऽर्याक्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः ।

शूद्रः ( शोचति इति शुचेर्दश्चेति रक् दीर्घः दकारादेशश्च ) अवरवर्णः (अवरोऽधमो वर्णोऽस्य, अवरश्चासौ वर्णश्चेति वा ) वृषलः ( वृष्यते वर्षति वेति कलच् ) [1]जघन्यजः ( जघन्यात् = पादाज्जातः इति डः ) ये ४ पुं० नाम शूद्र के हैं।

आ चाण्डालात् = चाण्डालशब्दमभिव्याप्य । अम्बष्ठश्च करणश्च, तौ आदी येषां ते आदिना उग्रादिग्रहः । संकीर्णाः = संकराः । सङ्कीर्णः ( संकीर्यते स्मेति क्तः, ईत्वनत्वणत्वानि ) वह १ पुं० नाम वर्णसङ्कर अर्थात् भिन्न-भिन्न जाति वाले माता पिता के संयोगसे उत्पन्न हुए अम्बष्ठ, करण आदि जातिविशेष का है ॥ १ ॥

शूद्रा च विट् च तयोः सुतः = [2]करणः ( किरति कीर्यते वेति बहुलमन्यत्रापि इति युच् , ल्युट् वा ) यह १ पु० नाम शूद्रवर्ण की स्त्री और वैश्य वर्ण के पुरुष से उत्पन्न सन्तान का है।

वैश्या च द्विजन्मा च तयोः सुतः = अम्बष्ठ ( अम्बे तिष्ठति इति कः षत्वं ष्टुत्वञ्च ) यह १ पुं० नाम वैश्य वर्ण की स्त्री और ब्राह्मण वर्ण के पुरुष से उत्पन्न संतान का है।

शूद्रा च क्षत्रियश्च तयोः सुतः = उग्रः ( उच्यति इति 'ऋज्रेन्द्र' इति निपातनात् साधुः ) यह १ पुं० नाम शूद्रवर्ण की स्त्री और क्षत्रियवर्ण के पुरुष से उत्पन्न सन्तान का है।

क्षत्रिया च विट् च, तयोः सुतः = [3]मागधः ( मगध्यति इति अच् यलोपश्च अणपि ) यह १ पुं० नाम क्षत्रियवर्ण की स्त्री और वैश्यवर्ण के पुरुष से उत्पन्न सन्तान का है। ॥ २ ॥

अर्या च क्षत्रियश्च तयोः सुतः = माहिष्यः ( महिष्यां साधु इति यद् स्वार्थेऽण् च ) यह १ पुं० नाम वैश्यवर्ण की स्त्री और क्षत्रियवर्ण के पुरुष से उत्पन्न सन्तान का है।

---

१. जघन्यं मेहने क्लीबे चरमे गर्हितेऽन्यवत् । इति मेदिनी ।

२. करणं हेतुकर्मणोः । वाद्यवादौ हसे लेपे नृत्यगीतप्रभेदयोः । क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च । कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते । इति विश्वः ।

३. मागधो मगधोद्भूते शुक्लजीरकवन्दिनोः । वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली । यूथी भाषाविशेषश्च । इति हेमचन्द्रः ।

ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदहको विशः ॥ ३ ॥
रथकारस्तु माहिष्यात् करण्यां यस्य संभवः ।
स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ।
कुलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः ॥ ५ ॥

---

अर्या च शूद्रश्च तयोः सुतः = [1]क्षत्ता ( क्षदति क्षद्यते वेति तृच् ) यह १ पुं० नाम क्षत्रियवर्ण की स्त्री और शूद्रवर्ण के पुरुष से उत्पन्न सन्तान अर्थात् बढ़ई का है ।

ब्राह्मण्यां क्षत्रियाज्जातः = [2]सूतः ( सूयते स्मेति क्तः ) यह १ पुं० नाम ब्राह्मणवर्ण की स्त्री और क्षत्रियवर्ण के पुरुष से उत्पन्न सन्तान अर्थात् सारथि का काम करने वाले का है ।

ब्राह्मण्यां विशः = वैश्याज्जातः—[3]वैदेहकः ( विदेहेषु भवः इत्यण्, विदेहस्यापत्यम् इत्यञ् स्वार्थे कन् च ) यह १ पुं० नाम ब्राह्मणवर्ण का स्त्री और वैश्यवर्ण के पुरुष से उत्पन्न सन्तान का है ॥ ३ ॥

महिष्याद् वैश्याक्षत्रियसुतात् करण्यां = शूद्रायां वैश्यादुत्पन्नायाम् सुतायां यस्य सम्भवः सः = [4]रथकारः ( रथं करोति इति कर्मण्यण् ) शूद्रवर्ण की स्त्री और वैश्यवर्ण के पुरुष से उत्पन्न कन्या में वैश्यवर्णकी स्त्री और क्षत्रियवर्ण के पुरुष से उत्पन्न सन्तान का यह १ पुं० नाम है ।

ब्राह्मण्यां वृषलेन = शूद्रेण जनितः उत्पादितः यः सः = चण्डालः ( चण्डति इति आलच् ) यह १ पुं० नाम ब्राह्मणवर्ण की स्त्री और शूद्रवर्ण के पुरुष से उत्पन्न सन्तान का है ॥ ४ ॥

[5]कारुः ( करोति इति उण् ) [6]शिल्पी ( शिल्पमस्यास्ति इति इनिः ) ये २ पुं० नाम कारीगर के हैं ।

तैः सजातिभिः समानजातीयैः संहतैः समूहैः—[7]श्रेणिः ( श्रयति श्रीयते वेति निः, द्वयोः = स्त्री-पुंसयोः स्यादिति ) यह १ पुं० स्त्री० नाम एक जाति के कारीगरों के समूह का है ।

[8]कुलकः ( कोलति इति क्वुन् ) कुलिक इति पाठे ( कुलमधीनत्वेनास्यास्ति इति ठन् ) कुलश्रेष्ठी

---

१. क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान् ॥ इति मेदिनी ।
२. सूतः पारदसारथ्योः प्रसूतेरितवन्दिषु । ब्राह्मण्यां क्षत्रियाज्जाते तक्षिण इति हैमः ।
३. वैदेहको वाणिजके शूद्राद्वैश्यासुतेऽपि च । इति विश्वः मेदिनी च ।
४. रथकारस्तु माहिष्यात् करणी च तक्षणि । इति मेदिनी ।
५. कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि । इति हेमचन्द्रः ।
६. शिल्पी तु वाच्यवत्कारौ स्त्रियां कोलदलोषधौ । इति मेदिनी । तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥
७. श्रेणिः स्त्रीपुंसयोः पंक्तौ समानशिल्पिसंहतौ । इति मेदिनी ।
८. कुलकं तु पटोले स्यात् संबद्धश्लोकसंहतौ । पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते ॥ इति मेदिनी । कुलिक इति पाठे तु ठनि । कुलिको नागभेदे स्याद् द्रुभेदे कुलसत्तमे । इति मेदिनी ।

कुम्भकारः कुलालः स्यात् पलगण्डस्तु लेपकः।
तन्तुवायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः॥ ६॥
रङ्गाजीवश्चित्रकरः शस्त्रमार्जोऽसिधावकः।
पादूकृच्चर्मकारः स्याद्व्योकारो लोहकारकः॥ ७॥
नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः।

( कुलश्रेष्ठत्वमस्यास्ति इति इनिः ) ये २ पुं० नाम कुलीन कारीगर के हैं।

मालाकारः ( मालां करोति इति अण् ) मालिकः[१] ( माला अस्यास्ति, मालाशिल्पमस्य वा इति ठन् ) ये २ पुं० नाम माली के हैं॥ ५॥

[२]कुम्भकारः ( कुम्भं करोति इति अण् ) [३]कुलालः ( कुं भूमिं लालयति इति अण् ) ये २ पुं० नाम कुम्भकार ( कुम्हार ) के हैं।

पलगण्डः ( पलं मासम्। तत्तुल्येन मृदादिना गण्डति वदनैकदेशमिव करोति इति अच् ) लेपकः ( लिम्पति इति ण्वुल् ) ये २ पुं० नाम मकान आदि में चूना आदि लगाने वालों के हैं।

तन्तुवायः ( तन्तून् वयति इति अण् ) कुविन्दः ( कुं भुवं, कुत्सितं वा विन्दति इति शः ) ये २ पुं० नाम कपड़ा बुनने वाले जुलाहे के हैं।

तुन्नवायः ( तुन्नं छिन्नं वयति इति अण् ) सौचिकः (सूची शिल्पमस्य इति ठक् ) ये २ पुं० नाम दर्जी के हैं॥ ६॥

रङ्गाजीवः ( रङ्गेणाजीवति इति कः ) चित्रकरः ( चित्रं करोति इति टः ) ये २ पुं० नाम कपड़े को रँगने या चित्रकारी करने वाले रँगसाज के हैं।

शस्त्रमार्जः ( शस्त्रं मार्ष्टि इति अण् ) असिधावकः ( असिं धावति इति अण् स्वार्थे कन्, वुन् वा ) ये २ पुं० नाम शस्त्रों की सफाई, मरम्मत या सान चढ़ाने वाले के हैं।

पादूकृत् ( पद्यतेऽनया इति ऊः णिच्च, पादूं करोति इति क्विप् ) चर्मकारः ( चर्म करोति इति अण् ) ये २ पुं० नाम चमार के हैं।

[४]व्योकारः ( व्यो इत्यव्ययं लोहबीजवाची इति श्रीभोजः। व्यो करोति इति अण् ) लोहकारकः ( लोहं करोति इति अण् स्वार्थे कन् च ) ये २ पुं० नाम लोहार के हैं॥ ७॥

नाडिन्धमः ( नाडीं वंशनलीं धमति इति खश् ह्रस्वश्च ) स्वर्णकारः ( स्वर्णं करोति इति अण् ) कलादः ( कलामादत्ते इति कः ) रुक्मकारकः ( रुक्मं करोति इति अण् स्वार्थे कन् च ) ये ४ पुं० नाम सुनार के हैं।

---

१. मालिका सप्तलापुत्री ग्रीवालंकरणेऽपि च। पुष्पमाल्ये नदीभेदे पक्षिभेदे च मालिकः॥ इति मेदिनी।
२. कुम्भकारी कुलत्थ्यां च पुंसि स्याद्घटकारके। इति विश्वः मेदिनी च।
३. घूके कुलालः कुक्कुभे कुम्भकारेऽप्यनन्तरे।
४. व्योकारोऽयस्कारोऽयस्कारो लोहकारः स्यात्। इति रत्नकोषः।

स्याच्छाङ्खिकः काम्बविकः शौल्विकस्ताम्रकुट्टकः ॥ ८ ॥
तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ।
ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ॥ ९ ॥
क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः ।
निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः ॥ १० ॥
जाबालः स्यादजाजीवो देवाजीवस्तु देवलः ।

---

शाङ्खिकः ( शङ्खः शिल्पमस्य इति ठक् ) काम्बविकः ( कम्बु शिल्पमस्य इति ठञ् ) ये २ पुं० नाम शङ्ख की चूड़ी आदि बनाने वाले ( चुरिहार ) के हैं।

शौल्विकः ( शुल्बघट्टनं शिल्पमस्य इति ठक् ) ताम्रकुट्टकः ( ताम्रं कुट्टयति इति अण् स्वार्थे कन् च ) ये २ पुं० नाम ताँबे के बर्तन आदि बनाने वाले के हैं ॥ ८ ॥

तक्षा ( तक्ष्णोति इति कनिन् ) वर्धकिः ( वर्धते इति अच्, वर्धं कषति इति बाहुलकाड्डिः ) त्वष्टा[1] ( त्वक्षति इति त्वक्षूधातोः तृच् ) रथकारः ( रथं करोति इति अण् ) काष्ठतट् ( काष्ठं तक्षति इति क्विप् ) ये ५ पुं० नाम बढ़ई के हैं।

ग्रामाधीनः ( ग्रामेऽधि इति सप्तमीसमासः, खश्च ) ग्रामतक्षः ( ग्रामस्य तक्षा इति टच् ) ये २ पुं० नाम ग्रामके बढ़ई के हैं।

कौटतक्षः ( कुट्यां भवः इति अण् कौटः, तक्षतीति कनिनि तथा, कौटश्चासौ तक्षा चेति टच् ) अनधीनकः ( न अधीनोऽनधीनः ततः स्वार्थे कन् ) ये २ पुं० नाम स्वतन्त्र बढ़ई के हैं। अनधीनकः = स्वाधीनः यः तक्षा स इति सम्बन्धः ॥ ९ ॥

क्षुरी ( क्षुरोऽस्यास्ति इति इनिः ) मुण्डी ( मुण्डं करोति मुण्डयति इति णिनिः ) दिवाकीर्तिः[2] ( दिवाकीर्तिरस्येति ) नापितः ( न पियति स्मेति क्तः अपितः, न अपितः । नापनम् इति आप्लृधातोः अञ्, नापो जातोऽस्य इति इतच् वा ) अन्तावसायी[3] ( नखानामन्तमवसातुं शीलमस्य इति णिनिः युक् च ) ये ५ पुं० नाम नाई, हजाम के हैं।

निर्णेजकः ( निर्णेनेक्ति इति ण्वुल् णत्वञ्च ) रजकः ( रजति इति क्वुन् ) ये २ पुं० नाम धोबी के हैं।

शौण्डिकः[4] ( शुण्डा = सुरा पण्यमस्य इति ठक् ) मण्डहारकः ( मण्डं सुराग्ररसं हरति इति अण् स्वार्थे कन् च ) ये २ पुं० नाम कलवार या मदिरा बनाने वाले के हैं ॥ १० ॥

जाबालः ( जबमलति आलाति वेति अण् को वा ) अजाजीवः ( अजा आजीवो जीविकाऽस्य ) ये २ पुं० नाम गडेरिया के हैं।

---

१. त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि । इति मेदिनी ।
२. दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनोः । इति विश्वः मेदिनी च ।
३. अन्तावसायी श्वपचे मुनिभेदे च नापिते । इति मेदिनी ।
४. शुण्डा पानगृहे मता । अम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च । इति मेदिनी ।

स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारिकः ॥ ११ ॥
शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।
भरता इत्यपि नटश्चारणास्तु कुशीलवाः ॥ १२ ॥
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः ।
वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः ॥ १३ ॥
जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ ।

---

देवाजीवी ( देवैराजीवितुं शीलमस्य इति णिनिः ) देवलः ( देवान् जीविकार्थे लाति इति कः ये २ पुं० नाम पण्डा, पुजारी आदि के हैं ।

माया[1] ( विश्वं माति यस्याम् इति यः टाप् च, मां याति इति को वा ) शाम्बरी ( शम्बराख्यदैत्यस्येदम् इत्यण् ङीप् च ) ये २ स्त्री० नाम जादू के हैं ।

मायाकारः ( मायां करोति इत्यण् ) प्रातिहारिकः ( प्रतिहारो व्याजः प्रयोजनमस्येति ठक् ) ये २ पुं० नाम जादूगर के हैं ॥ ११ ॥

शैलाली ( शिलालिना प्रोक्तं नटसूत्रमधीते इति णिनिः ) शैलूषः[2] ( शिलूषस्य ऋषेरपत्यम् इति अण् ) जायाजीवः ( जायया जीवति इति कः ) कृशाश्वी ( कृशाश्वेन प्रोक्तं नटसूत्रमधीते इति इनिः ) भरतः ( भरतस्य मुनेः शिष्यः इति अण् संज्ञापूर्वकत्वात् न वृद्धिः, बिभर्ति स्वाङ्गमिति अतच् वा ) नटः (नटति इति अच् ) ये ६ पुं० नाम नट के हैं ।

चारणः ( चारयन्ति कीर्तिम् इति णिजन्तः, ल्युः ) कुशीलवः ( कुत्सितं शीलमस्त्येषाम् इति 'कुगति' इति समासः, कुशीलं वाति इति को वा ) ये २ पुं० नाम स्तुति करने वाले बन्दीविशेष ( कत्थक ) के हैं ॥ १२ ॥

मार्दङ्गिकः ( मृदङ्गो लक्षणया तद्वादनं शिल्पमेषाम् इति ठक् ) मौरजिकः ( मुरजं शिल्पमेषाम् इति ठक् ) ये २ पुं० नाल मृदङ्ग बजाने वाले के हैं ।

पाणिवादः ( पाणिं वादयति इति ण्यन्तादण् ) पाणिघः (पाणिं हन्ति इति 'पाणिघताडघौ शिल्पिनि' इति निपातनात् साधुः ) ये २ पुं० नाम हाथ की ताली बजाकर बाजा के अनुकरण करने वाले के हैं ।

वेणुध्मः ( वेणुं धमति इति कः ) वैणविकः ( वेणोर्विकारः इति अञ्, वैणवं शिल्पमस्य इति ठक् ) ये २ पुं० नाम वंशी या मुरली बजाने वाले के हैं ।

वीणावादः ( वीणां वादयति इति अण् ) वैणिकः ( वीणा शिल्पमस्य इति ठक् ) ये २ पुं० नाम वीणा बजाने वाले के हैं ॥ १३ ॥

जीवान्तकः ( जीवनामन्तकः ) शाकुनिकः ( शकुनान् हन्ति इति ठक् ) ये २ पुं० नाम बहेलिये अर्थात् चिड़ीमार के हैं ।

---

१. माया स्यात् शाम्बरीबुद्धयोर्मायः पीताम्बरेऽसुरे । इति मेदिनी ।
२. नटे विल्वे च शैलूषः । इति ताळव्यादिः मूर्धन्यान्तेषु रभसः ।

वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥
भृतको भृतिभुक्कर्मकरो वेतनिकोऽपि सः ।
वार्तावहो वैवधिको भारवाहस्तु भारिकः ॥ १५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥
भृत्ये दासेयदासेरदासगोप्यकचेटकाः ।

---

वागुरिकः ( वागुरया = मृगबन्धन्या चरति इति ठक् ) जालिकः ( जालेन चरति इति ठक् ) ये २ पुं० नाम जाल से पशु-पक्षी, मछली आदि मारने वाले के हैं।

त्रयं समम् = समानार्थकमिति सम्बन्धः। वैतंसिकः ( वीतंसेन = मृगपक्ष्यादिबन्धनोपायेन चरति इति ठक् ) कौटिकः ( कूटेन मृगादिबन्धनयन्त्रेण चरति इति ठक् ) मांसिकः ( मांसं पण्यमस्य इति ठक् ) ये ३ पुं० नाम मांस बेचने वाले वधिक आदि के हैं ॥ १४ ॥

भृतकः ( भ्रियते स्मेति क्तः ततः स्वार्थे कन् च ) भृतिभुक् ( भृतिं वेतनं भुङ्क्ते इति क्विप् कर्मकरः ( कर्म करोति इति टः ) वैतनिकः ( वेतनेन जीवति इति ठक् ) ये ४ पुं० नाम मजदूरी या वेतन ग्रहण करने वाले नौकर के हैं।

वार्तावहः ( वहतीति अच्, वहः, वार्तायाः वहः ) वैवधिकः ( विवधं वीवधं वा वहति इति वैकल्पिकः ठन् विवधिकः वीवधिकः, पक्षे ठक् ) ये २ पुं० नाम संदेशवाहक या काँवर, बहियाँ ( बहँगी ) ढोने वाले के हैं।

भारवाहः ( भारं वहति इति अण् ) भारिकः ( भारोऽस्ति वाह्यत्वेनास्य इति ठन् ) ये २ पुं० नाम बोझ ढोने वाले कुली आदि के हैं ॥ १५ ॥

विवर्णः ( विगतो [1] वर्णो यस्य यस्माद्वा ) पामरः ( पामानं राति इति कः, पा धर्मो = म्रियते येनेति वा ) नीचः ( निकृष्टामीं लक्ष्मीं चिनोति इति डः ) प्राकृतः ( प्रकृतौ भवः इत्यण् ) पृथग्जनः ( सज्जनेभ्यः पृथग्भूतो जनः इति शाकपार्थिवादित्वात् समासः ) निहीनः ( निस्वयेन हीनः इति 'कुगति' इति समासः ) अपसदः ( अपकृष्टमपकृष्टे वा सीदति इति अच् ) जाल्मः[2] ( जालयति, जालं करोति वेति बाहुलकान्मः ) क्षुल्लकः[3] ( क्षुधं लाति इति कः स्वार्थे कन् वा ) इतरः ( इना कामेन तीर्यते इति अप् ) ये १० पुं० नाम नीच के हैं ॥ १६ ॥

भृत्यः[4] ( भ्रियते इति क्यप् तुक् च ) दासेयः ( दास्यां अपत्यम् इति ढक् ) दासेरः ( दास्या अपत्यम् इति ढ्रक् ) दासः ( दास्यते इति घञ् ) गोप्यकः ( गुप्यते इति ण्यत् स्वार्थे कन् च ) चेटकः ( चेट्यते

---

१. वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे। इति विश्वः।
२. जाल्मस्तु पामरे। असमीक्ष्य कारिणि च। इति हैमः।
३. खुल्लक इति वर्गद्वितीयादिरपि वा पाठः। खुल्लकस्त्रिषु नीचेऽल्पे। इति रभसात्।
४. भृत्यो दासे भृतौ भृत्या। इति विश्वः।

नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः ॥ १७ ॥
पराचितपरिस्कन्दपरजातपरैधिताः ।
मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः ॥ १८ ॥
दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ।
चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ॥ १९ ॥
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ।

---

इति वुन् ) नियोज्यः ( नियुज्यते इति ण्यत् ) किङ्करः ( किंचित् कुत्सितं वा करोति इति अच् ) प्रेष्यः ( प्रेष्यते ण्यत् वृद्धिश्च ) भुजिष्यः ( भुज्यते स्वाम्युच्छिष्टम्, भुज्यते वेति किष्यन् ) परिचारकः ( परिचरति इति ण्वुल् ) ये ११ पुं० नाम नौकर ( भृत्य ) के हैं ॥ १७ ॥

पराचितः ( आचीयते स्म इति क्तः आचितः = वर्द्धितः + परेण आचितः ) परिस्कन्दः ( परिस्कन्दति इति अच् ) परजातः ( परपोषितत्वात् परस्माज्जातः इति क्तः ) परैधितः ( परैरेधितः = संवर्धितः ) ये ४ पुं० नाम अन्य से पालित ( परपोषित ) के हैं ।

[1]मन्दः ( मन्दते = स्वपिति इति अच् ) तुन्दपरिमृजः ( तुन्दमुरं परिमार्ष्टि इति कः ) आलस्यः ( न लसति इति अच् स्वार्थे ष्यञ् ) शीतकः[2] ( शीतं करोति इति कन् ) अलसः ( न लसति इति अच् ) अनुष्णः ( उष्णादन्यः ) ये ६ पुं० नाम आलसी के हैं ॥ १८ ॥

[3]दक्षः ( दक्षते इति ) चतुरः ( चतति चत्यते वेति उरच् ) पेशलः ( पेशनम् इति घञ् पेशं लाति इति कः, पेशोऽस्यास्ति इति लच् वा ) [4]पटुः ( पाटयति इति उः पटादेशश्च निपातनात् ) सूत्थानः ( सुष्ठु उत्थानमुद्योगोऽस्य ) [5]उष्णः ( उष्णत्वं शीघ्रकारित्वमस्यास्ति इति अच् ) ये ६ पुं० नाम चतुर, ( बुद्धिमान् ) के हैं ।

चण्डालः ( चण्डते इति आलच् इदित्त्वान्नुमि अदुपधत्वाभावान्न वृद्धिः ) [6]प्लवः ( प्लवते इति अच् ) मातङ्गः ( मतङ्गस्यापत्यम् इति अण् ) दिवाकीर्तिः ( दिवा कीर्तिरस्य ) जनङ्गमः ( अधार्मिकान् जनान् गच्छति, जनेभ्यो गच्छति वा इति खच् ) [7]निषादः ( निषीदति पापमस्मिन् इति घञ् )

---

१. मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः । अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ ॥ इति विश्वः मेदिनी च । २. उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः । इति मेदिनी ।
३. दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ । द्रुमे दक्षा तु मेदिन्याम् । इति विश्वः मेदिनी च ।
४. पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्रालवणयोरपि । इति मेदिनी ।
५. उष्णो ग्रीष्मे पुमान् दक्षशीतयोरन्यलिङ्गकः । इति मेदिनी ।
६. प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेककमेलयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकमित्यपि । इति हैमः । प्लवः स्यात्प्लवने भेले भेकेऽवौ श्वपचे कपौ । जलकाके च कुलके प्रवणे पर्कटीद्रुमे ॥ कारण्डवाख्यविहगे शब्दे प्रतिगतौ पुमान् । कैवर्तीमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम् ॥ इति मेदिनी ।
७. निषादः स्वरभेदेऽपि चण्डाले धीवरान्तरे । इति मेदिनी ।

भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥
शुनको भषकः श्वा स्यादलर्कस्तु स योगितः ।

---

श्वपचः ( श्वानं पचति इति अच् ) अन्तेवासी ( ग्रामादेः अन्ते वसति इति णिनिः अलुक् च ) चाण्डालः ( चण्डते इति आलञ् ततः स्वार्थे अञ् ) [1]पुक्कसः ( पुत् = कुत्सितं पुण्यं, पुमांसं वा कसति इति अच् मूलविभुजादिः कः, पृषोदरादिः वा ) ये १० पुं० नाम चाण्डाल के है।

किरातादयः त्रयः म्लेच्छजातयः चण्डालभेदाः भवन्तीति—[2]किरातः ( किरति इति कः, अतति इति अच्, किरश्चासौ अतश्च ) [3]शबरः ( शवति इति बाहुलकादरः, शवं राति वा कः ) [4]पुलिन्दः ( पोलति इति किन्दच् ) [5]म्लेच्छः ( म्लेच्छति इति अच् ) ये ४ पुं० नाम चाण्डाल ( म्लेच्छ ) के अवान्तर भेद ( जातिविशेष ) के हैं ॥ २० ॥

व्याधः ( विध्यति इति णः ) मृगवधाजीवः ( मृगवधेनाजीवति इति कः ) [6]मृगयुः ( मृगान् वधार्थं याति इति कुः ) लुब्धकः ( लुभ्यते स्मेति क्तः स्वार्थे संज्ञायां वा कन् ) ये ४ पुं० नाम व्याध के हैं ॥ २०.१/२ ॥

[7]कौलेयकः ( कुले भवः इति ढकञ् ) सारमेयः ( सरमाया अपत्यम् इति ढक् ) [8]कुक्कुरः ( कोकते गृह्णाति इति क्विपि कुक्, कुरति इति कः, कुरः कुक् चासौ कुरश्च ) मृगदंशकः ( मृगान् दशति इति अण्, कन् च ) शुनकः ( शुनति इति कननि निपातनात् साधुः ) ये ७ पुं० नाम कुत्ते के हैं।

योगो मत्ततोपायो जातोऽस्येति इतचि योगितः सः—[9]अलर्कः ( अलम् अर्च्यते, अर्च्यते वेति घञ् शकन्ध्वादिः । ) यह १ पुं० नाम पागल कुत्ते का है।

---

१. पुष्कसी कालिकानील्योः पुष्कसः श्वपचेऽधमे । इति विश्वे दर्शनात् पुष्कसोऽपि । हैमे तु—बुक्कसी-बुक्कस—शब्दावुपलभ्येते ।

२. किरातो म्लेच्छभेदे स्यात् भूनिम्बेऽल्पतनावपि । स्त्रियां चामरवाहिन्यां कुट्टिनीदुर्गयोरपि ॥ इति मेदिनी ।

३. पुलिन्दः कथ्यते म्लेच्छे पुलिन्देऽपि निगद्यते । इति तारपालः । पुलिन्दः पञ्चशबरः । इति रत्नकोषः ।

४. गोमांसभक्षको यस्तु लोकबाह्यं च भाषते । सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते ॥ सूतसंहितायामपि—ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः । अयामनेन चौर्येण म्लेच्छो विप्रात्प्रजायते ॥ इति ।

५. मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि । इति मेदिनी ।

६. कौलेयकः सारमेये कुलीने । इति हैमः मेदिनी च ।

७. कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसकम् । इति विश्वः मेदिनी च ।

८. कुक्कुरस्तु शुनिः श्वानः कपिलो मण्डलः शुनः । इति वाचस्पतिः ।

९. अलर्को धवलार्के स्याद्योगोन्मादितकुक्कुरे । इति विश्वः मेदिनी च ।

श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी ॥ २२ ॥
विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः ।
आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥ २३ ॥
दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः ।
चौरैकागारिकस्तेनदस्युतस्करमोषकाः ॥ २४ ॥
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ।

मृगयाकुशलः = आखेटे चतुरः श्वा—[१]विश्वकद्रुः ( विश्वकं सर्वं द्रवति इतिः द्रुः ) यह १ पुं० नाम शिकारी कुत्ते का है।

[२]सरमा ( सरति इति बाहुलकादमः टाप् च ) शुनी ( शुनतीति के गौरादिः ) ये २ स्त्री० नाम कुतिया के हैं।

ग्राम्यः शूकरः—विट्चरः ( विशं विष्ठां चरति इति अच् ) यह १ पुं० नाम ग्रामीण सूकर का है।

तरुणः पशुः—[३]वर्करः ( वर्क इति बाहुलकादरन् ) यह १ पुं० नाम जवान पशु का है।

आच्छोदनम् ( आच्छिद्यतेऽत्र इति ल्युट् पृषोदरादिः ) मृगव्यम् ( मृगा व्यध्यन्तेऽत्र इति व्यय गतौ धातोः डः ) आखेटः ( आखिट्यतेऽत्र इति घञ् ) मृगया ( मृग्यन्तेऽत्र 'परिचर्यापरिसर्यामृगया' इति निपातनात् साधुः ) ये ४ नाम क्रम से २ न० १ पुं० १ स्त्री० शिकार के हैं ॥ २३ ॥

यः कुरङ्गकः लुब्धयोगात् दक्षिणारुः स्यात् स—दक्षिणेर्मा (दक्षिणेऽरुर्व्रणोऽस्य । दक्षिणे ईर्म = व्रणमस्य इति 'दक्षिणेर्मा लुब्धयोगे' इति निपातनात् साधुः ) यह १ पुं० नाम व्याध के मारने से दक्षिण अङ्ग में घाव वाले मृग आदि पशु का है।

[४]चौरः ( चौरणम् इति अः—चुरा, संज्ञापूर्वकत्वात् न गुणः । चुरा शीलमस्य इति वृद्धौ ) ऐकागारिकः ( एकमसहायमगारं प्रयोजनमस्येति 'ऐकागारिकट्' इति निपातनात् साधुः ) स्तेनः (स्तेनयति इति अच्) [५]दस्युः ( दस्यति इति युः ) तस्करः ( तत् करोति इति अच्, सुट्तलोपौ च ) मोषकः ( मुष्णाति इति ण्वुल् ) प्रतिरोधी ( प्रतिरोद्धुम् शीलमस्य इति णिनिः ) परास्कन्दी ( परान् आस्कन्दितुं शीलमस्य णिनिः ) [६]पाटच्चरः ( पाटयंश्चरति इति अच् पृषोदरादिः ) मलिम्लुचः ( मल्यते इति इन् मलिं—घृतं म्लोचति इति कः ) ये १० पुं० नाम चोर के हैं।

---

१. विश्वकद्रुस्त्रिषु खले ध्वानाखेटशुनोः पुमान् । इति मेदिनी ।
२. सरमा कुक्कुरीदेवशुन्योः स्याद् राक्षसीभिदि । इति मेदिनी ।
३. वर्करः परिहासे स्याच्छागे युवपशावपि । इति विश्वः मेदिनी च । वर्करो मेषशावकः । इति रक्षितः ।
४. चौरः पाटच्चरेऽपि स्याच्चौरपुष्पौषधावपि । इति विश्वः मेदिनी च ।
५. दस्युश्चौरे रिपौ पुंसि । इति हैमः मेदिनी च ।
६. चौरजीर्णपटयोः पटच्चरः । इति नामानुशासनम् ।

**चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धनम् ॥ २५ ॥**
**वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ।**
**उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी ॥ २६ ॥**
**शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः ।**
**उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ॥ २७ ॥**

---

चौरिका ( चौरस्य भावः इति वुञ् ) स्तैन्यम् ( स्तेनस्य भावः कर्म वा स्तेनादिति योगविभागात् ष्यञ् ) स्तेयम् ( यत्-नलोपौ ) चौर्यम् ( चोरस्य कर्म इति ष्यञ् ) ये क्रम से १ स्त्री० ३ न० नाम चोरी कार्य के हैं।

तद्धनम् तस्य चोरस्य धनम्—[1]लोप्त्रम् ( लुप्यते इति ष्ट्रन् ) यह १ न० नाम चोरी के धन का है ॥ २५ ॥

[2]वीतंसः ( वितंस्यते इति घञ् , उपसर्गस्य दीर्घश्च ) यह १ पुं० नाम पशुपक्षियों को फँसाने के लिए जाल आदि फन्दा का है।

[3]उन्माथः ( उन्मथ्यतेऽनेनेति घञ् ) कूटयन्त्रम् ( कूटस्वरूपं यन्त्रम् ) ये २ नाम क्रम से १ पुं० न० पशु-पक्षियों को फँसाने वाले यन्त्र के हैं।

वागुरा ( अवागुरते इति कः वष्टिभागुरिरिति अकारलोपश्च ) मृगबन्धनी ( मृगो बध्यतेऽनयेति ल्युट् ) ये २ स्त्री० नाम पशु या मृगको फँसाने के जाल विशेष के हैं ॥ २६ ॥

[4]शुल्बम् ( शुल्व्यते शुल्वयति वा इति अच् ) वराटकम् ( वरं अटतीति क्वुनि, वटं वेष्टनमाकरोति अच् वटा इति करः स्वामी ) [5]रज्जुः ( सृज्यते इति असुम् आदि सलोप उप्रत्ययस्च आगमसकारस्य श्चुत्वेन शः जस्त्वेन जः ) [6]वटी ( बटति वट्यते वेति घः ) [7]गुणः ( गुण्यते इति अच् ) ये ५ नाम क्रम से २ न० स्त्री० १ त्रि० १ पुं० रस्सी ( ठवंहनि ) के हैं।

प्रहेः = कूपात् सलिलोद्वाहनम् इति सम्बन्धः। उद्घाटनम् ( उद्घाट्यते अनेन वेति ण्यन्तः। ल्युट् ) घटीयन्त्रम् ( घटीनां यन्त्रम् ) ये २ न० नाम कुए से पानी निकालने वाले पुरवट, मोट, रहट आदि के हैं ॥ २७ ॥

---

१. लोप्त्रमश्रुणि चोरिते। इति विश्वः।
२. वीतंसो बन्धनोपाये मृगाणामपि पक्षिणाम्। तेषामेव च विश्वासहेतोः प्रावरणेऽपि च ॥ इति विश्वः मेदिनी च।
३. उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान्। इति मेदिनी।
४. रज्जुः शुल्वा वराटो ना इति रत्नकोषात् स्त्रियामपि। शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ। इति विश्वः मेदिनी च।
५. रज्जुर्वेण्यां गुणे योषित्। इति विश्वमेदिन्यौ।
६. वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः। इति मेदिनी।
७. गुणो मौर्व्यामप्रधाने रूपादौ सूत्र इन्द्रिये। त्यागे शौर्यादिसन्ध्यादि सत्वाद्यावृत्तिरज्जुषु ॥ शुक्लादावपि वट्यां च। इति मेदिनी।

पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः ।
वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि ॥ २८ ॥
पञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ।
जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु ॥ २९ ॥
पिटकः पेटकः पेटा मञ्जूषाथ विहङ्गिका ।
भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका ॥ ३० ॥

---

वेमा ( वयत्यनेन इति मनिन् ) वायदण्डः ( वयनम् इति घञ्, वायस्य दण्डः ) ये २ नाम क्रम से १ न० पुं० कपड़ा बुनते समय जिससे सूत बराबर किया जाता है, जुलाहों के उस अस्त्र-विशेष के हैं ।

[1]सूत्रम् ( सूत्र्यते इति अदन्तः एरच् ) तन्तुः ( तन्यते इति तुन् ) ये २ नाम क्रम से १ न० १ पुं० सूत के हैं ॥ २७/२ ॥

वाणिः ( वाणनम् = शब्दनम् वण शब्दे चुरादिः इः ) व्यूतिः ( विशिष्टा ऊतिः इति 'ऊतियूति' इत्यादिना क्तिनि निपातितः ) ये २ स्त्री० नाम वस्त्र आदि को बुनने के हैं ।

लेप्यादिकर्मणि—[2]पुस्तम् ( पुस्यते इति णिच् । अच्च) यह १ नाम मिट्टी कपड़े या चमड़े आदि से लीपने या पुतली बनाने का है ॥ २८ ॥

वस्त्रदन्तादिभिः कृतेति सम्बन्धः—[3]पञ्चालिका ( पञ्चभिर्वर्णैरल्यते इति घञ् स्वार्थे कन्-टाप्-इत्वानि संज्ञापूर्वकत्वान्न वृद्धिः ) [4]पुत्रिका ( पुत्री इव इति कन् टाप् च) ये २ स्त्री० नाम हाथी के दाँत या कपड़े आदि की पुतली के हैं ।

[5]पिटकः ( पेटति इति क्वुन् ) [6]पेटकः ( पेटति इति ण्वुल्, अच., टाप् च कृते पेटा ) मञ्जूषा ( मजति इति नुम्, ऊषन्, टावपि ) ये ४ नाम क्रम से २ पुं० २ स्त्री० पेटी झपोली आदि के हैं ।

विहङ्गिका ( विहङ्गस्य प्रतिकृतिः इति कन् टाप च) भारयष्टिः ( भारस्य यष्टिः ) ये २ स्त्री० नाम बहँगी ( वहियाँ ) के हैं ।

तदालम्बि तां विहङ्गिकामालम्बितुं शीलमस्य इति-शिक्यम् ( स्रंसतेऽस्मात् इति स्रसेः शिः यतः कुट् कित् यत् च ) [7]काचः ( कच्यतेऽत्रेति घञ् ) ये २ नाम क्रम से १ न० १ पुं० बहँगी में झूलते हुए सिकहर के हैं ।

---

१. सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयोः । इति हैमः ।
२. मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते ॥
३. पाञ्चालिका इति पाठे पञ्चालदेशे भवा—पाञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः । इति मेदिनी ।
४. स्यात् पुत्रिका पुत्तलिकादुहित्रोर्यावतूलिके । ना पुत्रे शरभे धूर्ते शैलवृक्षप्रभेदयोः ॥ इति विश्वमेदिन्यौ । ५. पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान् । इति मेदिनी ।
६. पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके । इति विश्वः मेदिनी च । पेडा, पीडा च पाठः ।
७. काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे । इति विश्वमेदिन्यौ ।

पादूरुपानत्स्त्री सैवानुपदीना पदायता ।
नध्री वर्ध्री वरत्रा स्यादश्वादेस्ताडनी कशा ॥ ३१ ॥
चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ।
नाराची स्यादेषणिका शाणस्तु निकषः कषः ॥ ३२ ॥
व्रश्चनः पत्रपरशुरेषिका तूलिका समे ।
तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ॥ ३३ ॥

---

पादुका ( पद्यतेऽनयेति ऊः स च णित् कन् च ) पादूः ( कनोऽभावे तु—पद्यतेऽनयेति ऊः णिच्च ) उपानत् ( पादम् उपनह्यते पादमुपनह्यति वेति णह बन्धने अस्मात् क्विप् नहिवृतीति दीर्घश्च ) ये ३ स्त्री० नाम जूता खड़ाऊँ आदि के हैं ।

सैव उपानदेव पदायता—अनुपदीना ( पदस्यानु इत्यव्ययीभावः, अनुपदं पादायामप्रमाणा बद्धा इति, खः ) यह १ स्त्री नाम पैतावा या मौज़े का है ॥ ३० ॥

नध्री ( नह्यतेऽनया इति ष्ट्रन् ङीप् च ) वध्री ( वर्धते इति रन् ङीप् ) वरत्रा ( व्रियतेऽनया इति अत्रन् ) ये ३ स्त्री० नाम चमड़े की रस्सी ( पेटी ) के हैं ।

अश्वादेस्ताडनी = आघातिनीति सम्बन्धः । कशा ( कशति इति अच् टाप् च ) यह १ स्त्री० नाम कोड़ा या चाबुक का है ।

चाण्डालिका[1] ( चण्डालस्येयम् इत्यण् ङीप् कन् च ) कण्डोलवीणा ( कण्डते इति बाहुलकादोलच्, कण्डोलस्य चाण्डालस्य वीणा ) चण्डालवल्लकी ( चण्डालस्य वल्लकी ) ये ३ स्त्री० नाम चण्डाल की वीणा ( किंगरी ) के हैं ॥ ३१ ॥

नाराची ( स्वल्पो नाराचो बाणभेद इति ङीप् ) एषणिका ( इष्यतेऽनया इति ल्युट् कन् टाप् च ) ये २ स्त्री० नाम सोना आदि तौलने वाले काँटे के हैं ।

शाणः[2] ( शण्यते इति घञ् ) निकषः[3] ( निकषति इति अच् ) कषः ( कषति इति अच् ) ये ३ पुं० नाम कसौटी सुवर्ण की परीक्षा करने वाले पाषाण-विशेष या सान के हैं ।

व्रश्चनः ( वृश्च्यतेऽनेन इति ल्युट् ) पत्रपरशुः ( पत्रमिव परशुः ) ये २ पुं० नाम सोना आदि को काटने वाली छीनी ( हथियार विशेष ) के हैं ।

एषिका ( इष्यते इति वुन् टाप् च ) तूलिका ( तूलति इति ण्वुल् टाप् च ) ये १ स्त्री० नाम चित्र रँगने वाली कूची ( ब्रस ) के हैं ॥ ३२ ॥

तैजसावर्तनी ( तेजसो विकारः सुवर्णादिरावर्त्यतेऽस्याम् इति वृतु वर्तने धातोः णिच्यधिकरणे ल्युट् ङीप् च ) मूषा[4] ( मूषति इति क टाप् च ) ये २ स्त्री० नाम सोना-चाँदी गलाने की घरिया ( मिट्टी का पात्र-विशेष ) के हैं ।

---

१. चाण्डालिका किंनरायामुमायामोषधीभिदि । इति मेदिनी ।
२. शाणो माषचतुष्टये । लोहादीनां च निकषे शाणी प्रावरणान्तरे । इति मेदिनी ।
३. निकषः शाणफलके निकषा यातुमातरि । इति विश्वमेदिन्यौ ।
४. इत्यादिरपि—मुषा स्यादावर्तनी मुषी । इति शब्दार्णवः ।

**आस्फोटनी वेधनिका कृपाणी कर्तरी समे ।**
**वृक्षादनी वृक्षभेदी टङ्कः पाषाणदारणः ॥ ३४ ॥**
**क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका ।**
**सूर्मी स्थूणाऽयःप्रतिमा शिल्पं कर्म कलादिकम् ॥ ३५ ॥**
**प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।**

---

भस्त्रा ( भस्यतेऽनया ष्ट्रन् इडभावश्च, टाबपि ) चर्मप्रसेविका ( चर्मणा प्रसीव्यते इति वुन् ण्वुल् वा ) ये २ स्त्री० नाम भाथी या धौंकनी के हैं ।

आस्फोटनी ( आस्फोट्यतेऽनया इति ल्युट् ङीप् च ) वेधनिका[1] ( विध्यतेऽनया ल्युट्, स्वार्थे कन्, टाप् च ) ये २ स्त्री० नाम मोती आदि में छिद्र करने वाली वर्मी के हैं ।

कृपाणी ( कृपामणति इति अण् ङीप् च ) कर्तरी ( कृन्तति इति बाहुलकादरः, कर्तनम् इति घञ्, कर्तं रतं राति इति वा कः ङीप् च ) ये २ स्त्री० नाम सोना आदि काटने वाली कैंची के हैं ॥ ३३ ॥

वृक्षादनी (वृक्षमत्ति इति ल्युट् ङीप् च ) वृक्षभेदी ( वृक्षं भेत्तुं शीलमस्य इति णिनिः ) ये २ स्त्री० नाम लकड़ी काटने वाले वसुला, कुल्हाड़ी आदि हथियार के हैं ।

टङ्कः ( टंकयति इति अच् ) पाषाणदारणः ( पाषाणो दार्यतेऽनेन इति ल्युट् ) ये २ पुं० नाम पत्थर तोड़ने वाले टाँकी, घन आदि हथियार के हैं ।

क्रकचः[2] ( 'क्र' इति कचति इति अच् ) करपत्रम् ( करेण कराद्वा पतति इति ष्ट्रन् ) ये २ नाम क्रम से १ पुं० न०, १ न० लकड़ी चीरने वाले आरा, आरी नामक हथियार के हैं ।

आरा[3] ( ऋ इयर्ति ऋच्छति वा अच् टाप् च ) चर्मप्रभेदिका ( चर्मणः प्रभेदिका ) ये २ स्त्री० नाम चमड़ा काटने वाले हथियार के हैं ॥ ३४ ॥

सूर्मी ( शोभना ऊर्मिः यस्याः इति ङीष् ) स्थूणा[4] ( तिष्ठति इति 'रास्ना सास्ना स्थूणा' इति निपातनात् साधुः ) अयःप्रतिमा ( अयसः प्रतिमा ) ये ३ स्त्री० नाम लोह की बनी हुई मूर्ति के हैं ।

कला—नृत्यगीतादिरूपा चतुष्षष्टिभेदभिन्ना आदिर्यस्येति कलादिकं कर्म—शिल्पम्[5] ( शील्यते इति 'खष्पशिल्प' इति निपातनात् साधुः ) यह १ न० नाम कला-कौशल के हैं ।

प्रतिमानम् (प्रतिकृत्य मीयतेऽनेन इति ल्युट् ) प्रतिबिम्बम् (प्रतिकृतिः बिम्बं यस्य इति 'कुगति' इति समासः ) प्रतिमा[6] ( प्रतिमीयतेऽनया इति अङ् ) प्रतियातना ( प्रतियात्यतेऽनया इति युच् ) प्रतिच्छाया

---

१. वेधनी तु लास्फोटन्यां स्फोटनी वृषदंशिका । इति वाचस्पतिः । ललन्ती स्फोटयतीति पृषोदरादित्वात् लास्फोटनी इत्यपि मुकुटः ।

२. क्रकचः करपत्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान् । इति मेदिनी ।

३. आरा चर्मप्रभेदिन्यां पुंसि भौमशनैश्चरे । इति मेदिनी ।

४. स्थूणा सूर्म्यां स्तम्भे रुगन्तरे । इति हैमः ।

५. शिल्पं स्रुवे क्रियादिके । इति विश्वः हैमश्च ।

६. प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि । इति मेदिनी ।

प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥ ३६ ॥
वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥ ३७ ॥
निभसंकाशनीकाशप्रतीकाशोपमादयः ।
कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ॥ ३८ ॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।

---

( प्रकृष्टा छाया ) प्रतिकृतिः ( प्रकृष्टा कृतिः, प्रतिनिधिः कृतिर्वा ) अर्चा ( अर्च्यते इति अः टाप् च ) प्रतिनिधिः ( प्रतिनिधीयते सदृशीक्रियते इति किः ) ये ८ नाम क्रम से ४ पु० ५ स्त्री० १ पु० प्रतिमा तस्वीर, फोटो के हैं ।

उपमा ( उपमीयतेऽनया भावेऽङ् टाप् च ) उपमानम् ( उपमितम् उपमीयतेऽनेन वा इति ल्युट् ) ये २ नाम क्रम से १ स्त्री० १ न० तादृश्य, समानता ( उपमा ) के हैं । किसी के मत से उपमेय के वाचक भी हैं । उपमा = सादृश्य, उपमान = चन्द्रादि ।

वाच्यलिङ्गः—समः ( समति इति अच् ) तुल्यः ( तुलया संमितः इति यत् ) सदृक्षः ( समानम् इव पश्यति इति क्सः सभावश्च) सदृशः (समान इव पश्यति इति कञ् सभावश्च) सदृक् ( समान इव पश्यति इति क्विन् सभावश्च) साधारणः ( सह आधारेण वर्तते इति सह इत्यस्य सभावः ) समानः ( सह भावेन वर्तते समानं मानमस्य वा इति सहशब्दस्य 'समानस्य च्छन्दसि' इति समानः ) ये ७ त्रि० नाम सदृशके बराबर हैं ।

अमी निभादयः उत्तरपदस्था एव सदृशवचना वाच्यलिङ्गा स्युरिति सम्बन्धः—निभः[1] ( निभाति इति कः ) संकाशः[2] ( संकाशते इति अच् ) नीकाशः[3] ( नितरां काशते इति अच् दीर्घश्च ) प्रतीकाशः ( प्रतिकाशते इति अच् दीर्घश्च ) उपमा ( उपमीयतेऽनया करणेऽङ् टाप् च ) ये ५ त्रि० नाम जिसके अन्त में रहते हैं, उसके सदृश अर्थ को कहते हैं । जैसे—पितृनिभः पुत्रः, मातृनिभा कन्या, देवनिभमपत्यम् । आदि शब्द से भूत, रूप, कल्प का ग्रहण है ॥ ३७ ॥

कर्मण्या ( कर्मणा संपद्यते इति यत् टाप् च ) विधा ( कर्माणि विधीयन्तेऽनया इति अङ् टाप् च ) भृत्या ( भ्रियन्ते कर्मकराः अनया इति क्यप् तुक् च ) भृतिः ( भ्रियन्ते कर्मकरा अनया इति 'कर्मणि भृतौ' इति निर्देशात् क्तिन् ) भर्म ( भ्रियतेऽनेन इति मनिन् ) वेतनम् ( वीयतेऽनेन इति तनन् ) भरण्यम् ( भरणे साधुः इति यत् ) भरणम्[4] ( भ्रियते अनेन इति ल्युट् ) मूल्यम्[5] ( मूलेनानाम्यम् इति यत् ) निर्वेशः[6] ( निर्विश्यते, अनेन वा घञ् ) पणः[7] ( पण्यते इति अप् ) ये ११ नाम क्रम

---

१. निभस्तु कथितो व्याजे पुल्लिङ्गः सदृशे त्रिषु । इति मेदिनी ।
२. संकाशः सदृशेऽन्तिके । इति हैमः ।
३. नीकाशो निश्चये तुल्ये । इति विश्वः मेदिनी च ।
४. भरणी घोषके नक्षत्रे भरणं वेतने भृती । इति विश्वः मेदिनी च ।
५. मूल्यं स्याद्वेतने वस्ने । इति विश्वः मेदिनी च ।
६. निर्वेशस्तु पुमान्भोगे वेतने मूर्च्छनेऽपि च । इति मेदिनी ।
७. पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे । क्रयणाकादिके द्यूतव्यवहारे भृतौ धने ॥ इति मेदिनी ॥

सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥ ३९ ॥
गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता ।
मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् ॥ ४० ॥
शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः ।
मध्वासवो माधवको मधु मार्द्वीकमद्वयोः ॥ ४१ ॥

---

से ४ स्त्री० ५ न० २ पुं० वेतन, मजदूरी के हैं ॥ ३८ ॥

सुरा[1] ( सुष्ठु राति याम् इति अङ् ) हलिप्रिया ( हलिनो बलस्य प्रिया ) हाला[2] ( हलत्यंगम् इति णः, हल्यते अनया इति घञ् वा ) परिस्रुत् ( परितः स्रवति इति क्विप् तुक् च ) वरुणात्मजा ( वरुणालयोऽपि वरुणः तस्यात्मजा ) गन्धोत्तमा ( गन्धेनोत्तमा, गन्धः उत्तमो यस्या वा समासः ) प्रसन्ना[3] ( प्रसीदति स्म इति क्तः तलन्च ) इरा ( इं कामं राति इति कः टाप् च ) कादम्बरी[4] ( कुत्सितमम्बरम् कदम्बरं 'कुगति' इति समासः 'को कत्तत्पुरुषेऽचि' कदम्बरं नीलाम्बरमस्यास्ति इति अच्, तस्य इयम् इति अण् ङीष् च ) परिस्रुता[5] ( परितः सूयते स्म लोकैः, इति क्तः टाप् च ) मदिरा ( माद्यति अनया इति किरच् टाप् च ) कश्यम्[6] ( कश्यते अनेन वा बाहुलकात् यः ) मद्यम् ( माद्यन्त्यनेन इति यत् ) ये १२ नाम क्रम से ११ स्त्री० २ न० मदिरा के हैं ।

अवदंशः ( अवदश्यते इति दंश दशने अतोः कर्मणि भावे वा घञ् ) यह १ पुं० नाम मदिरापान के समय नमकीन आदि चबाने का हैं ।

[7]शुण्डा ( शुन्यते इति समन्ताड्डः ) [8]पानम् ( पिबन्ति अत्र इति ल्युट् ) मदस्थानम् ( मदस्य स्थानम् ) ये ३ नाम क्रम से १ स्त्री० २ न० सुरापान के स्थान के हैं ।

मधुवारः ( मधुनो वारः ) मधुक्रमः ( मधुनः क्रमः ) ये २ पुं० नाम शराब पीने की वारी ( अवसर ) के हैं ॥ ४० ॥

मध्वासवः ( मधुकपुष्पं मधु तस्यासवः ) माधवकः ( मधुना कृतः संधितः इति वुञ् ) [9]मधु

---

१ सुरा चषकमद्ययोः । पुल्लिङ्गस्त्रिदिवेशे स्यात् । इति मेदिनी ।

२. हालः सातवाहनपार्थिवे । हाला सुरायाम् । इति विश्वः ।

३. प्रसन्ना स्त्री सुरायां स्यादच्छसंतुष्टयोस्त्रिषु । इति मेदिनी ।

४. कादम्बरस्तु दध्यग्रे मद्यभेदे नपुंसकम् । स्त्री वारुणी परभृताभारतीसारिकासु च । इति मेदिनी ।

५. परिस्रुता स्त्री वारुण्यां स्यन्ने स्यादभिधेयवत् । इदि मेदिनी ।

६. मद्याश्वमध्ययोः कश्यम् इति रन्तिदेवः । कश्यस्त्रिषु कशार्हे स्यात्क्लीबं मद्याश्वमध्ययोः । इति विश्वः मेदिनी च ।

७. शुण्डा पानगृहे मता । अप्यम्बुहस्तिनी वेश्या हस्तिहस्तसुरासु च ॥ इति मेदिनी । शुण्डापि जलहस्तिन्यां मदिरा करिहस्तयोः । नालिन्यां वारयोषायां शण्डास्तु मदनिर्झरे ॥ इति विश्वः ।

८. पानं पीतिभाजनरक्षणे । इति मेदिनी ।

९. मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति ॥ इति विश्वमेदिन्यौ । अर्धर्चादिगणे पाठात्पुंनपुंसकयोः । मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु । इति हृद्दचन्द्रः । मकरन्दस्य मद्यस्य माक्षिकस्यापि वा ।

**मैरेयमासवः सीधुर्मेदको जगलः समौ ।**
**संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः ॥ ४२ ॥**
**कारोत्तरः सुरामण्ड आपानं पानगोष्ठिका ।**
**चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् ॥ ४३ ॥**

---

( मन्यते इति 'फलिपाटि' इति निपातनात् उः धश्चान्तादेशः ) मार्द्वीकम् ( मृद्वीका=द्राक्षा, तस्याः विकारः इत्यण् अञ् वा ) ये ४ नाम क्रम से २ पुं० २ न० महुए की शराब के हैं ।

मैरेयम् ( मिरायां देशविशेषे औषधिविशेषे वा भवम् इति ढक् ) आसवः ( आसूयते इति षूञ् धातोः अप् ) [1]शीधुः ( शेरतेऽनेन इति धुक्, 'अर्धर्चादिः' ) ये ३ नाम क्रम से १ न०, १ पुं०, १ पुं० न० ऊख के रस से या शाक से बनी हुई मदिरा के हैं ।

मेदकः ( मेद्यति इति वुन् ) [2]जगलः ( भृशं गलति इति यङ् लुगन्तात् अच् संज्ञापूर्वकत्वान् न दीर्घः ) ये २ पुं० नाम मदिरा के काढ़े या मदिरा के लिये पिसे हुए पदार्थ के हैं ॥ ४१ ॥

[3]सन्धानम् ( संधीयते इति ल्युट् ) [4]अभिषवः ( अभिषूयते इति अप् ) ये २ नाम क्रम से १ न०, १ पुं० मदिरा निर्माण के हैं ।

[5]किण्वम् ( कणनम् इति उल्वादयश्च इति निपातनात् साधुः ) नग्नहूः ( ह्वानम् हूयते वा इति क्विप् हूः नग्नस्य हूः ) ये २ नाम क्रम से १ न०, १ पुं० चावल आदि से बनाये हुए मदिरा के बीज के हैं ।

कारोत्तरः ( कारेण क्रियया उत्तरः ) सुरामण्डः ( सुराया मण्डः ) ये २ पुं० नाम मदिरा के माँड़ के हैं ।

आपानम् ( आ संभूय पिबन्त्यत्र इति ल्युट् ) पानगोष्ठिका ( पानस्य गोष्ठी इति स्वार्थे कन् टाप् च ) ये २ नाम क्रम से १ न०, १ स्त्री० मदिरा पीने के स्थान के हैं ॥ ४२ ॥

[6]चषकः ( चष्यतेऽनेन इति वुन् ) पानपात्रम् ( पानस्य पात्रम् ) ये २ नाम क्रम से १ पुं० न० १ न० शराब पीने के प्याले के हैं ।

[7]सरकः ( स्त्रियते इति वुन् ) अनुतर्षणम्[8] ( अनुतृष्यते अनेन इति ल्युट् घञि-अनुतर्षोपि ) ये

---

१. पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः । इति त्रिकाण्डशेषः । यद्यपि-शीधुरिक्षुरसे पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम् । इति माधवः । तथापि भेदमनादृत्योक्तम् ।

२. जगलो मदनद्रुमे । मेदके पिष्टमद्ये च । इति मेदिनी ।

३. सन्धानं स्यादभिषवे तथा संघट्टनेऽपि च । इति विश्वः मेदिनी च ।

४. भवेदभिषवः स्नाने मद्यसंधानयज्ञयोः । इति विश्वः मेदिनी च ।

५. किण्वं पापे सुराबीजे । इति विश्वः ।

६. चषकोऽस्त्री सुरापात्रे मद्यमद्यप्रभेदयोः । इति मेदिनी ।

७. सरकः शीधुपानेक्षुशीधुनोर्मद्यभाजने । इत्यजयः । अपिशब्दात् सरकोऽप्यस्त्री । सरकं वा नानुतर्षो स्यात् ना । इति रत्नकोषः । ८. चषकस्यानुतर्षश्च सरकश्च । इति भागुरिः ।

**धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ।**
**स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ॥ ४४ ॥**
**द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ।**
**पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते ॥ ४५ ॥**
**परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ।**
**अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः ॥ ४६ ॥**

---

२ नाम क्रम से १ पुं० न०, १ न० शराब पीने या परोसने के हैं ।

[1]धूर्तः ( धूर्वति इति तन् वलोपश्च ) अक्षदेवी ( अक्षैर्दीव्यति इति णिनिः ) [2]कितवः ( कितं वायति इति कः ) अक्षधूर्तः ( अक्षेषु धूर्तः सप्तमी शौण्डैः इति समासः ) द्यूतकृत् ( द्यूतं करोति इति क्विप् ) ये ५ पुं० नाम जुवाड़ी या जुवा खेलने वालों के हैं । समाः = समानार्थाः समानलिङ्गाः ॥ ४३ ॥

लग्नकः ( लज्यते स्मेति क्तः स्वार्थे कन् च ) प्रतिभूः ( प्रति प्रतिनिधिः भवति इति क्विप् ) ये २ पुं० नाम ऋण आदि में मध्यस्थ या जामिन होने वाले के हैं ।

सभिकः ( [3]सभाद्यूतम् आश्रयत्वेनास्यास्ति इति ठन् ) द्यूतकारकः ( द्यूतं कारयन्ति इति अण् स्वार्थे कन् च ) ये २ पुं० नाम जुवा खेलाने वाले ( फड़बाज ) के हैं ।

अस्त्रियां पुन्नपुंसके—द्यूतः ( देवनम् इति भावे क्तः, तदेवास्मिन्निति वा ) अक्षवती ( अक्षाः पाशकाः सन्त्यस्याम् इति मतुप् ) [4]कैतवम् ( कितवस्य कर्म इति अण् ) पणः ( पणो ग्लहोऽस्त्यस्मिन् इति अच् ) ये ४ नाम क्रम से १ पुं० न०, १ स्त्री०, १ न०, १ पुं० द्यूत ( जुवा ) क्रीड़ा के हैं ॥ ४४ ॥

पणः ( पण्यते उत्सृज्यते इति अप् ) ग्लहः ( ग्लह्यते अनने इति घः घञ् वा वृद्धिनिषेधश्च ) ये २ पुं० नाम द्यूत में दाव पर रक्खे हुए रुपये आदि के हैं ।

[5]अक्षः ( अक्षति इति अच् ) [6]देवनः ( दीव्यन्ति येन इति ल्युट् ) पाशकः ( पाशयति इति ण्वुल् क्वुन् वा ) ये ३ पुं० नाम पाशा के हैं ।

शारीणां समन्तात् नयने—परिणायः ( परितो वामदक्षिणतो नयनम् इति घञ् ) यह १ पुं० न० नाम गोटी ( शारी ) को चलाने का हैं ॥ ४५ ॥

[7]अष्टापदम् ( पंक्तौ पङ्क्तौ अष्टौ पदान्यस्य इति अष्टनः संज्ञायाम् इति दीर्घः ) [8]शारिफलम्

---

१. धूर्तं तु खण्डलवणे धत्तूरे ना विटे त्रिषु । इति मेदिनी ।
२. कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये । इति विश्वः ।
३. सभाद्यूतं सभागृहम् । इति रुद्रः ।
४. कैतवं तु छले द्यूते कैतवः कितवे रिपौ । इति मेदिनी ।
५. अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे बिभीतकतरावपि ॥ चक्रे कर्षे पुमान् क्लीबं तुत्ये सौवर्चलेन्द्रिये । इति मेदिनी ।
६. देवनं व्यवहारे स्याज्जिगीषाक्रीडयोरपि । अक्षेषु देवनः प्रोक्तः । इति विश्वः ।
७. अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च । अष्टापदी चन्द्रमल्ल्यां शरभे मर्कटे पुमान् ॥ इति मेदिनी । ८. फलं हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः । इति विश्वः ॥

उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ।
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते ॥ ४७ ॥

काण्डसमाप्तिः

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
द्वितीयः काण्डो भूम्यादिः साङ्ग एव समर्थितः ॥ ४८ ॥

---

( शारीणां फलं पट्टः ) ये २ नाम क्रम से १पुं० न०, १ न० द्यूत में गोटियों के बिठाने के आधार कपड़े या काष्ठ के बने हुए आधार विशेष के हैं ।

प्राणिद्यूतम् ( प्राणिभिः कृतं द्यूतम् ) समाह्वयः ( सम्यगाहूयतेऽत्र इति घः बाहुलकात् आत्वाभावश्च ) ये २ नाम क्रम से १ न० १ पुं० बाजी रखकर पशु पक्षियों को लडाने के हैं ।

उक्ताः अत्र वर्गे ये यौगिकाः शब्दाः मालाकार-मार्दङ्गिक-वैणविकादयः पुंसि प्रचुरप्रयोगदर्शनादेकस्मिंल्लिङ्गे उक्ताः, ते ताद्धर्म्यात्तद्योगवशात्तेषामन्यतोऽन्यत्र जातौ वृत्तौ सत्यामन्यत्र स्त्रियां क्लीबे चोहनीयाः । यथा—मालाकारी स्त्री, मालाकारं कुलम् इत्यादि । येऽप्ययौगिकाः करण-मालि-कुम्भकारादयः, ते जातिवचनत्वाच्छूद्रादिवत् 'जातेः' इत्यादिना ङीषि लिङ्गान्तरे स्त्रीलिङ्गे क्लीबत्वेऽपि बोद्धव्याः । इस वर्ग में जो मालाकार, मार्दङ्गिक, वैणविकादि यौगिक शब्द पुंलिङ्ग में अधिक प्रयोग देखे जाने के कारण पुंलिङ्ग में कहे गये हैं उन्हें योगवशात् स्त्रीलिङ्ग तथा नपुंसक लिङ्ग में भी समझना चाहिये । जैसे—मालाकारी स्त्री, मालाकारं कुलम् । जो अयौगिक करण, मालिक, कुम्भकारादि शब्द कहे गये हैं वे जातिवाचक होने के कारण शूद्रादिवत् लिङ्गान्तर में भी प्रयुक्त होते हैं ॥ ४७ ॥

॥ इति शूद्रवर्गविवरणम् ॥

इस प्रकार अमरसिंह द्वारा रचित इस नाम-लिङ्गव्युत्पादक शास्त्र में अङ्ग उपाङ्ग सहित द्वितीय भूम्यादि काण्ड वर्णित हुआ ॥ ४८ ॥ इति शम् ॥

कविमूर्धन्यश्रीवाणीशशर्मात्मजश्रीविश्वनाथशर्म-
विरचितायां सुधाव्याख्यायाममरकोश-
टीकायां द्वितीयकाण्डः समाप्तः ।

श्रीगणेशाय नमः

# अमरकोषद्वितीयकाण्डस्थशब्दानामनुक्रमणिका

**इत्यमरकोषमूलस्थशब्दानामकारादिशब्दानुक्रमणिका समाप्ता ॥**

